सर्वदुष्टान्तकृत्सर्वसज्जनानन्यपालकः ।
सप्तलोकैकजठरः सप्तलोकैकमण्डनः ।। २८

सृष्टिस्थित्यन्तकृच्चक्री शार्ङ्गधन्वा गदाधरः ।
शंखभृन्नन्दकी पद्मपाणिर्गरुडवाहनः ।। २९

अनिर्देश्यवपुः सर्वपूज्यस्त्रैलोक्यपावनः ।
अनन्तकीर्तिर्निःसीमपौरुषः सर्वमङ्गलः ।। ३०

सूर्यकोटिप्रतीकाशो यमकोटिदुरासदः ।
मयकोटिजगत्स्रष्टा वायुकोटिमहाबलः ।। ३१

कोटीन्दुजगदानन्दी शंभुकोटिमहेश्वरः ।
कन्दर्पकोटिलावण्यो दुर्गाकोट्यरिमर्दनः ।। ३२

समुद्रकोटिगंभीरः तीर्थकोटिसमाह्वयः ।
कुबेरकोटिलक्ष्मीवान् शक्रकोटिविलासवान् ।। ३३

हिमवत्कोटिनिष्कंपः कोटिब्रह्माण्डविग्रहः ।
कोट्यश्वमेधपापघ्नो यज्ञकोटिसमार्चनः ।। ३४

सुधाकोटिस्वास्थ्यहेतुः कामधुक्कोटिकामदः ।
ब्रह्मविद्याकोटिरूपः शिपिविष्टः शुचिश्रवाः ।। ३५

विश्वंभरस्तीर्थपादः पुण्यश्रवणकीर्तनः ।
आदिदेवो जगज्जैत्रो मुकुन्दः कालनेमिहा ।। ३६

वैकुण्ठेश्वरमाहात्म्यो महायोगेश्वरोत्सवः ।
नित्यतृप्तो लसद्भावो निःशंको नरकान्तकः ।। ३७

दीनानाथैकशरणं विश्वैकव्यसनापहः ।
जगत्कृपाक्षमो नित्यं कृपालुः सज्जनाश्रयः ।। ३८

योगेश्वरः सदोदीर्णो वृद्धिक्षयविवर्जितः ।
अधोक्षजो विश्वरेताः प्रजापतिशताधिपः ।। ३९

शक्रब्रह्मार्चितपदः शंभुब्रह्मोर्ध्वधामगः ।
सूर्यसोमेक्षणो विश्वभोक्ता सर्वस्य पारगः ।। ४०

जगत्सेतुर्धर्मसेतुधरो विश्वधुरन्धरः ।
निर्ममोऽखिललोकेशो निःसङ्गोऽद्भुतभोगवान् ।। ४१

वश्यमायो वश्यविश्वो विष्वक्सेनः सुरोत्तमः ।
सर्वश्रेयःपतिर्दिव्यानर्घ्यभूषणभूषितः ।। ४२

सर्वलक्षणलक्षण्यः सर्वदैत्येन्द्रदर्पहा ।
समस्तदेवसर्वस्वं सर्वदैवतनायकः ।। ४३

समस्तदेवकवचं सर्वदेवशिरोमणिः ।
समस्तदेवतादुर्गः प्रपन्नाशनिपञ्जरः ।। ४४

समस्तभयहृन्नामा भगवान्विष्टरश्रवाः ।
विभुः सर्वहितोदर्को हतारिः स्वर्गतिप्रदः ।। ४५

सर्वदैवतजीवेशो ब्राह्मणादिनियोजकः ।
ब्रह्म शंभुः शतार्धायुर्ब्रह्मज्येष्ठः शिशुः स्वराट् ।। ४६

विराड् भक्तपराधीनः स्तुत्यः स्तोत्रार्थसाधकः ।
परार्थकर्ता कृत्यज्ञः स्वार्थकृत्यसदोज्झितः ।। ४७

सदानन्दः सदाभद्रः सदा शान्तः सदा शिवः ।
सदा प्रियः सदा तुष्टः सदा पुष्टः सदाऽर्चितः ।। ४८

सदा पूतः पावनाग्र्यो वेदगुह्यो वृषाकपिः ।
सहस्रनामा त्रियुगश्चतुर्मूर्तिश्चतुर्भुजः ।। ४९

भूतभव्यभवन्नाथो महापुरुषपूर्वजः ।
नारायणो मुञ्जकेशः सर्वयोगविनिःसृतः ।। ५०

वेदसारो यज्ञसारः सामसारस्तपोनिधिः ।
साध्यः श्रेष्ठः पुराणर्षिः निष्ठा शान्तिः परायणम् ।। ५१

शिवत्रिशूलविध्वंसी श्रीकण्ठैकवरप्रदः ।
नरः कृष्णो हरिर्धर्मनन्दनो धर्मजीवनः ।। ५२

आदिकर्ता सर्वसत्यः सर्वस्त्रीरत्नदर्पहा ।
त्रिकालजितकन्दर्प उर्वशीसृड्मुनीश्वरः ।। ५३

आद्यः कविर्हयग्रीवः सर्ववागीश्वरेश्वरः ।
सर्वदेवमयो ब्रह्मा गुरुर्वागीश्वरीपतिः ।। ५४

अनन्तविद्याप्रभवो मूलाविद्याविनाशकः ।
सर्वज्ञदो जगज्जाड्यनाशको मधुसूदनः ।। ५५

अनेकमन्त्रकोटीशः शब्दब्रह्मैकपारगः ।
आदिविद्वान्वेदकर्ता वेदात्मा श्रुतिसागरः ।। ५६

ब्रह्मार्थवेदहरणः सर्वविज्ञानजन्मभूः ।
विद्याराजो ज्ञानमूर्तिर्ज्ञानसिन्धुरखण्डधीः ।। ५७

मत्स्यदेवो महाशृङ्गो जगद्बीजवहित्रदृक् ।
लीलाव्याप्ताखिलांभोधिश्चतुर्वेद प्रवर्तकः ।। ५८

आदिकूर्मोऽखिलाधारस्तृणीकृतजगद्भरः ।
अमरीकृतदेवौघः पीयूषोत्पत्तिकारणम् ।। ५९

आत्माधारो धराधारो यज्ञाङ्गो धरणीधरः ।
हिरण्याक्षहरः पृथ्वीपतिः श्राद्धादिकल्पकः ।। ६०

समस्तपितृभीतिघ्नः समस्तपितृजीवनम्।
हव्यकव्यैकभुक् हव्यकव्यैकफलदायकः ।। ६१

रोमान्तर्लीनजलधिः क्षोभिताशेषसागरः ।
महावराहो यज्ञस्य ध्वंसको याज्ञिकाश्रयः ।। ६२

श्रीनृसिंहो दिव्यसिंहः सर्वानिष्टार्थदुःखहा।
एकवीरोऽद्भुतबलो यन्त्रमन्त्रैकभञ्जनः ।। ६३

ब्रह्मादि दुःसहज्योतिर्युगान्ताग्न्यतिभीषणः ।
कोटिवज्राधिकनखो जगद्दुष्प्रेक्ष्यमूर्तिधृक् ।। ६४

मातृचक्रप्रमथनो महामातृगणेश्वरः ।
अचिन्त्यामोघवीर्याढ्यः समस्तासुरघस्मरः ।। ६५

हिरण्यकशिपुच्छेदी कालः संकर्षिणीपतिः ।
कृतान्तवाहनासह्यः समस्तभयनाशनः ।। ६६

सर्वविघ्नान्तकः सर्वसिद्धिदः सर्वपूरकः ।
समस्तपातकध्वंसी सिद्धमन्त्राधिकाह्वयः ।। ६७

भैरवेशो हरार्तिघ्नः कालकोटिदुरासदः ।
दैत्यगर्भस्राविनामा स्फुटद्ब्रह्माण्डगर्जितः ।। ६८

स्मृतमात्राखिलत्राताऽद्भुतरूपो महाहरिः ।
ब्रह्मचर्यशिरःपिण्डी दिक्पालोऽर्धाङ्गभूषणः ।। ६९

द्वादशार्कशिरोदामा रुद्रशीर्षैकनूपुरः ।
योगिनीग्रस्त गिरिजात्राता भैरवतर्जकः ।। ७०

वीरचक्रेश्वरोऽत्युग्रोऽपमारिः कालशंबरः ।
क्रोधेश्वरो रुद्रचण्डीपरिवारादिदुष्टभुक् ।। ७१

सर्वाक्षोभ्यो मृत्युमृत्युः कालमृत्युनिवर्तकः ।
असाध्यसर्वदेवघ्नः सर्वदुर्ग्रहसौम्यकृत् ।। ७२

गणेशकोटिदर्पघ्नो दुःसहाशेषगोत्रहा ।
देवदानवदुर्दर्शो जगद्भयदभीषणः ।। ७३

समस्तदुर्गतित्राता जगद्भक्षकभक्षकः ।
उग्रशांबरमार्जारः कालमूषकभक्षकः ।। ७४

अनन्तायुधदोर्दण्डी नृसिंहो वीरभद्रजित् ।
योगिनीचक्रगुह्येशः शक्रारिपशुमांसभुक् ।। ७५

रुद्रो नारायणो मेषरूपशंकरवाहनः ।
मेषरूपशिवत्राता दुष्टशक्तिसहस्रभुक् ।। ७६

तुलसीवल्लभो वीरो वामाचारोऽखिलेष्टदः ।
महाशिवः शिवारूढो भैरवैककपालधृक् ।। ७७

कि(हि)ल्लीचक्रेश्वरः शक्रदिव्यमोहनरूपदः ।
गौरीसौभाग्यदो मायानिधिर्मायाभयापहः ।। ७८

ब्रह्मतेजोमयो ब्रह्मश्रीमयश्च त्रयीमयः ।
सुब्रह्मण्यो बलिध्वंसी वामनोऽदिति दुःखहा ।। ७९

उपेन्द्रो नृपतिर्विष्णुः कश्यपान्वयमण्डनः ।
बलिस्वराज्यदः सर्वदेवविप्रान्नदोऽच्युतः ।। ८०

उरुक्रमस्तीर्थपादस्त्रिपदस्थस्त्रिविक्रमः ।
व्योमपादः स्वपादांभःपवित्रितजगत्त्रयः ।। ८१

ब्रह्मेशाद्यभिवन्द्यांघ्रिर्द्रुतधर्मांघ्रिधावनः ।
अचिन्त्याद्भुतविस्तारो विश्ववृक्षो महाबलः ।। ८२

राहुमूर्धापरांगच्छिद् भृगुपत्नी शिरोहरः ।
पापत्रस्तः सदा पुण्यो दैत्याशानित्यखण्डनः ।। ८३

पूरिताखिल देवाशो विश्वार्थैकावतारकृत् ।
स्वमायानित्यगुप्तात्मा भक्तचिन्तामणिः सदा ।। ८४

वरदः कार्तवीर्यादि राजराज्यप्रदोऽनघः ।
विश्वश्लाघ्यामिताचारो दत्तात्रेयो मुनीश्वरः ।। ८५

पराशक्ति सदाश्लिष्टो योगानन्दः सदोन्मदः ।
समस्तेन्द्रारितेजोहृत् परमामृतपद्मपः ।। ८६

अनसूयागर्भरत्नं भोगमोक्षसुखप्रदः ।
जमदग्निकुलादित्यो रेणुकाद्भुतशक्तिकृत् ।। ८७

मातृहत्त्यादिनिर्लेपः स्कन्दजिद्विप्रराज्यदः ।
सर्वक्षत्रान्तकृद्वीरदर्पहा कार्तवीर्यजित् ।। ८८

सप्तद्वीपवतीदाता शिवार्चकयशःप्रदः ।
भीमः परशुरामश्च शिवाचार्यैकविप्रभुक् ।। ८९

शिवाखिलज्ञानकोशो भीष्माचार्योऽग्निदेवतः ।
द्रोणाचार्यगुरुर्विश्वजैत्रधन्वा कृतान्तजित् ।। ९०

अद्वितीयतपोमूर्तिर्ब्रह्मचर्यैकदक्षिणः ।
मनुः श्रेष्ठः सतां सेतुर्महीयान् वृषभो विराट् ।। ९१

आदिराजः क्षितिपिता सर्वरत्नैकदोहकृत् ।
पृथुर्जन्माद्येकदक्षो गीःश्रीकीर्तिस्स्वयंवृतः ।। ९२

जगद्वृत्तिप्रदश्चक्रवर्तिश्रेष्ठोऽद्वयास्त्रधृक् ।
सनकादिमुनिप्राप्य भगवद्भक्तिवर्धनः ।। ९३

वर्णाश्रमादिधर्माणां कर्ता वक्ता प्रवर्तकः ।
सूर्यवंशध्वजो रामो राघवः सद्गुणार्णवः ।। ९४

काकुत्स्थो वीरराड् राजा राजधर्मधुरन्धरः ।
नित्यस्वःस्थाश्रयः सर्वभद्रग्राही शुभैकदृक् ।। ९५

नर रत्नं रत्नगर्भो धर्माध्यक्षो महानिधिः ।
सर्वश्रेष्ठाश्रयः सर्वशास्त्रार्थ ग्रामवीर्यवान् ।। ९६

जगद्वशो दाशरथिः सर्वरत्नाश्रयो नृपः ।
समस्तधर्मसूः सर्वधर्मद्रष्टाऽखिलाघहा ।। ९७

अतीन्द्रो ज्ञानविज्ञानपारदश्च क्षमांबुधिः ।
सर्वप्रकृष्टशिष्टेष्टो हर्षशोकाद्यनाकुलः ।। ९८

पित्राज्ञात्यक्तसाम्राज्यः सपत्नोदयनिर्भयः ।
गुहादेशार्पितैश्वर्यः शिवस्पर्धिजटाधरः ।। ९९

चित्रकूटाप्तरत्नाद्रिर्जगदीशो वनेचरः ।
यथेष्टामोघसर्वास्त्रो देवेन्द्रतनयाक्षिहा ।। १००

ब्रह्मेन्द्रादिनतैषीको मारीचघ्नो विराधहा ।
ब्रह्मशापहताशेषदण्डकारण्यपावनः ।। १०१

चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैकधृक् ।
खरारिस्त्रिशिरोहन्ता दूषणघ्नो जनार्दनः ।। १०२

जटायुषोऽग्निगतिदोऽगस्त्यसर्वस्वमन्त्रराट् ।
लीलाधनुः कोट्यपास्तदुन्दुभ्यस्थिमहाचयः ।। १०३

सप्ततालव्यधाकृष्टध्वस्तपातालदानवः ।
सुग्रीवराज्यदोऽहीनमनसैवाभयप्रदः ।। १०४

हनुमद्रुद्रमुख्येश समस्तकपिदेहभृत् ।
सनागदैत्यबाणैक व्याकुलीकृतसागरः ॥ १०५

सम्लेच्छकोटिबाणैकशुष्कनिर्दग्धसागरः ।
समुद्राद्भुतपूर्वैकबन्ध(द्ध)सेतुर्यशोनिधिः ॥ १०६

असाध्यसाधको लङ्कासमूलोत्कर्षदक्षिणः ।
वरदृप्तजगच्छल्य पौलस्त्य कुलकृन्तनः ॥ १०७

रावणिघ्नः प्रहस्तच्छित्कुंभकर्णभिदुग्रहा ।
रावणैक शिरश्छेत्ता निःशङ्केन्द्रैक राज्यदः ॥ १०८

स्वर्गास्वर्गत्वविच्छेदी देवेन्द्रानिन्द्रताहरः ।
रक्षोदेवत्वहृद्धर्माधर्मघ्नश्च पुरुष्टुतः ॥ १०९

नतिमात्रदशास्यारिर्दत्तराज्यविभीषणः ।
सुधावृष्टिमृताशेषस्वसैन्योज्जीवनैककृत् ॥ ११०

देवब्राह्मणनामैकधाता सर्वामिरार्चितः ।
ब्रह्मसूर्येन्द्ररुद्रादिवृन्दार्पितसतीप्रियः ॥ १११

अयोध्याखिलराजन्यः सर्वभूतमनोहरः ।
स्वामितुल्य कृपादण्डो हीनोत्कृष्टैकसत्प्रियः ॥ ११२

स्वपक्षादिन्यायदर्शी हीनार्थाधिकसाधकः ।
व्याधव्याजानुचितकृत्तारकोऽखिलतुल्यकृत् ॥ ११३

पार्वत्याऽधिकमुक्तात्मा प्रियात्यक्तः स्मरारिजित् ।
साक्षात्कुशलवच्छद्मेन्द्रादितातोऽपराजितः ॥ ११४

कोशलेन्द्रो वीरबाहुः सत्यार्थत्यक्तसोदरः ।
शरसन्धाननिर्धूतधरणीमण्डलोदयः ॥ ११५

ब्रह्मादिकाम्यसान्निध्यसनाथीकृदैवतः ।
ब्रह्मलोकाप्त चाण्डालाद्यशेषप्राणिसार्थकः ।। ११६

स्वर्नीतगर्दभाश्वादिः चिरायोध्यावनैककृत् ।
रामद्वितीयः सौमित्रिर्लक्ष्मणः प्रहतेन्द्रजित् ।। ११७

विष्णु भक्त्याप्तरामाङ्घ्रिः पादुकाराज्यनिर्वृतः ।
भरतोऽसह्यगन्धर्वकोटिघ्नो लवणान्तकः ।। ११८

शत्रुघ्नो वैद्यराजायुर्वेदगर्भौषधीपतिः ।
नित्यामृतकरो धन्वन्तरिर्यज्ञो जगद्धरः ।। ११९

सूर्यारिघ्नः सुराजीवो दक्षिणेशो द्विजप्रियः ।
छिन्नमूर्धायतेशार्कः शेषाङ्गस्थापितामरः ।। १२०

विश्वार्थाशेषकृद्राहुशिरश्छेदाक्षताकृतिः ।
वाजपेयादिनामाग्निः वेदधर्मपरायणः ।। १२१

श्वेतद्वीपपतिः सांख्यप्रणेता सर्वसिद्धिराट् ।
विश्वप्रकाशित ज्ञानयोगो मोहतमिस्रहा ।। १२२

देवहूत्यात्मजः सिद्धः कपिलः कर्दमात्मजः ।
योगस्वामी ध्यानभंगसगरात्मजभस्मकृत् ।। १२३

धर्मो वृषेन्द्रः सुरभीपतिः शुद्धात्मभावितः ।
शंभुस्त्रिपुरदाहैकस्थैर्यविश्वरथोद्वहः ।। १२४

भक्तशंभुजितो दैत्यामृतवापीसमस्तपः ।
महाप्रलयविश्वैकद्वितीयाखिलनागराट् ।। १२५

शेषदेवः सहस्राक्षः सहस्रास्य शिरोभुजः ।
फणामणिकणाकार योजिताब्ध्यंबुदक्षितिः ।। १२६

कालाग्निरुद्रजनको मुसलास्त्रो हलायुधः ।
नीलांबरो वारुणीशो मनोवाकायदोषहा ।। १२७

असन्तोषो दृष्टिमात्रपातितैकदशाननः ।
बलिसंयमनो घोरो रौहिणेयः प्रलंबहा ।। १२८

मुष्टिकघ्नो द्विविदहा कालिन्दीकर्षणो बलः ।
रेवतीरमणः पूर्वभक्तिखेदाच्युताग्रजः ।। १२९

देवकीवसुदेवाह्व कश्यपादितिनन्दनः ।
वार्ष्णेयः सात्वतां श्रेष्ठः शौरिर्यदुकुलोद्वहः ।। १३०

नराकृतिः परं ब्रह्म सव्यसाचि(ची)वरप्रदः ।
ब्रह्मादिकाम्यलालित्य जगदाश्चर्यशैशवः ।। १३१

पूतनाघ्नः शकटभिद् यमलार्जुनभञ्जनः ।
वातासुरारिः केशिघ्नो धेनुकारिर्गवीश्वरः ।। १३२

दामोदरो गोपदेवो यशोदानन्ददायकः ।
कालीयमर्दनः सर्वगोपगोपीजनप्रियः ।। १३३

लीलागोवर्धनधरो गोविन्दो गोकुलोत्सवः ।
अरिष्टमथनः कामोन्मत्तगोपीविमुक्तिदः ।। १३४

सद्यः कुवलयापीडघाती चाणूरमर्दनः ।
कंसारिरुग्रसेनादिराज्यव्यापारितापरः ।। १३५

सुधर्मांकितभूलोको जरासन्धबलान्तकः ।
त्यक्तभग्नजरासन्धो भीमसेनयशःप्रदः ।। १३६

सान्दीपनमृतापत्यदाता कालान्तकादिजित् ।
समस्तनारकित्राता सर्वभूपतिकोटिजित् ।। १३७

रुक्मिणीरमणो रुक्मिशासनो नरकान्तकः ।
समस्तसुन्दरीकान्तो मुरारिर्गरुडध्वजः ॥ १३८

एकाकी जितरुद्रार्कमरुदाद्यखिलेश्वरः ।
देवेन्द्रदर्पहा कल्पद्रुमालंकृतभूतलः ॥ १३९

बाणबाहुसहस्रच्छिन्नन्द्यादिगणकोटिजित् ।
लीलाजितमहादेवो महादेवैकपूजितः ॥ १४०

इन्द्रार्थार्जुननिर्भङ्ग जयदः पाण्डवैकधृक् ।
काशिराजशिरश्छेत्ता रुद्रशक्त्येकमर्दनः ॥ १४१

विश्वेश्वरप्रसादाक्षः काशीराजसुतार्दनः ।
शंभुप्रतिज्ञाविध्वंसी काशीनिर्दग्ध नायकः ॥ १४२

काशीशगणकोटिघ्नः लोकशिक्षाशिवार्चकः ।
युवतीव्रतपो वश्यः पुरा शिववरप्रदः ॥ १४३

शंकरैकप्रतिष्ठाधृक् स्वांशशंकरपूजकः ।
शिवकन्याव्रतपतिः (प्रीतः) कृष्णरूप शिवारिहा ॥ १४४

महालक्ष्मीवपुर्गौरीत्राता वैदलवृत्रहा ।
स्वधाममुचुकुन्दैकनिष्कालयवनेष्टकृत् ॥ १४५

यमुनापति रानीतपरिलीनशिवात्मजः ।
श्रीदामरंकभक्तार्थभूम्यानीतेन्द्रवैभवः ॥ १४६

दुर्वृत्तशिशुपालैकमुक्तिदो द्वारकेश्वरः ।
अचाण्डालादिकप्राप्यद्वारकानिधिकोटिकृत् ॥ १४७

अक्रूरोद्धवमुख्यैकभक्तस्वच्छन्दमुक्तिदः ।
सबालस्त्रीजलक्रीडोऽमृतवापीकृतार्णवः ॥ १४८

ब्रह्मास्त्रदग्धगर्भस्थपरीक्षिज्जीवनैककृत्।
परिलीनद्विजसुतानेताऽर्जुनमदापहः ॥ १४९

गूढमुद्राकृतिग्रस्तभीष्माद्यखिलकौरवः ।
यथार्थखण्डिताशेषदिव्यास्त्रःपार्थमोहहृत्॥ १५०

गर्भशापच्छलध्वस्तयादवोर्वीभयापहः ।
जराव्याधारिगतिदः स्मृतिमात्राखिलेष्टदः ॥ १५१

कामदेवो रतिपतिर्मन्मथः शंबरान्तकः ।
अनङ्गो जितगौरीशो रतिकान्तः सदेप्सितः ॥ १५२

पुष्पेषुर्विश्वविजयी स्मरः कामेश्वरीप्रियः ।
उषापतिर्विश्वकेतुः विश्वदृप्तोऽधिपूरुषः ॥ १५३

चतुरात्मा चतुर्व्यूहश्चतुर्युगविधायकः ।
चतुर्वेदैकविश्वात्मा सर्वोत्कृष्टांशकोटिकः ॥ १५४

आश्रमात्मा पुराणर्षिर्व्यासः शाखासहस्रकृत्।
महाभारतनिर्माता कवीन्द्रो बादरायणः ॥ १५५

कृष्णद्वैपायनः सर्वपुरुषार्थैकबोधकः ।
वेदान्तकर्ता ब्रह्मैकव्यञ्जकः पुरुवंशकृत्॥ १५६

बुद्धो ध्यानजिताशेषदेवदेवो जगत्प्रियः ।
निरायुधो जगज्जैत्रः श्रीधरो दुष्टमोहनः ॥ १५७

दैत्यवेदबहिःकर्ता वेदार्थश्रुतिगोपकः ।
शौद्धोदनिर्दृष्टदिष्टः सुखदः सदसस्पतिः ॥ १५८

यथायोग्याखिलकृपः सर्वशून्योऽखिलेष्टदः ।
चतुष्कोटिपृथक्तत्त्वं प्रज्ञापारमितेश्वरः ॥ १५९

पाखण्डवेदमार्गेशः पाखण्ड श्रुतिगोपकः ।
कल्की विष्णुयशःपुत्रः कलिकालविलोपकः ।। १६०

समस्तम्लेच्छदुष्टघ्नः सर्वशिष्टद्विजातिकृत् ।
सत्यप्रवर्तको देवद्विजदीर्घक्षुधापहः ।। १६१

अश्ववारादिरेवान्तः पृथ्वीदुर्गतिनाशनः ।
सद्यः क्ष्मानन्तलक्ष्मीकृत् नष्टनिःशेषधर्मवित् ।। १६२

अनन्तस्वर्णयोगैकहेमपूर्णाखिलद्विजः ।
असाध्यैकजगच्छास्ता विश्ववन्द्यो जयध्वजः ।। १६३

आत्मतत्त्वाधिपः कर्तृश्रेष्ठो विधिरुमापतिः ।
भर्तृश्रेष्ठः प्रजेशाग्र्यो मरीचिर्जनकाग्रणीः ।। १६४

कश्यपो देवराजेन्द्रः प्रह्लादो दैत्यराट् शशी ।
नक्षत्रेशो रविस्तेजःश्रेष्ठः शुक्रः कवीश्वरः ।। १६५

महर्षिराड् भृगुर्विष्णुरादित्येशो बलिः स्वराट् ।
वायुर्वह्निः शुचिः श्रेष्ठः शंकरो रुद्रराड् गुरुः ।। १६६

विद्वत्तमश्चित्ररथो गन्धर्वाग्र्योऽक्षरोत्तमः ।
वर्णादिरग्र्यः स्त्री गौरी शक्त्याग्र्याशीश्च नारदः ।। १६७

देवर्षिराट् पाण्डवाग्र्योऽर्जुनो वादः प्रवादराट् ।
पवनः पवनेशानो वरुणो यादसां पतिः ।। १६८

गंगा तीर्थोत्तमो द्यूतं छलकाग्र्यं वरौषधम् ।
अन्नं सुदर्शनोऽस्त्राग्र्यं वज्रं प्रहरणोत्तमम् ।। १६९

उच्चैःश्रवा वाजिराजः ऐरावत इभेश्वरः ।
अरुन्धत्येकपत्नीशो ह्यश्वत्थोऽशेषवृक्षराट् ।। १७०

अध्यात्मविद्या विद्याग्र्यः प्रणवश्छन्दसां वरः ।
मेरुर्गिरिपतिर्मार्गो मासाग्र्यः कालसत्तमः ।। १७१

दिनाद्यात्मा पूर्वसिद्धः कपिलः सामवेदराट् ।
तार्क्ष्यः खगेन्द्र ऋत्वग्र्यो वसन्तः कल्पपादपः ।। १७२

दातृश्रेष्ठः कामधेनुरार्तिघ्नाग्र्यः सुहृत्तमः ।
चिन्तामणिर्गुरुश्रेष्ठो माता हिततमः पिता ।। १७३

सिंहो मृगेन्द्रो नागेन्द्रो वासुकिर्नृवरो नृपः ।
वर्णेशो ब्राह्मणश्चेतः करणाग्र्यो नमो नमः ।। ओं ।। १७४

इत्येतद्वासुदेवस्य विष्णोर्नामसहस्रकम् ।
सर्वापराधशमनं परं भक्तिविवर्धनम् ।। १७५

अक्षयब्रह्मलोकादि सर्वस्वर्गैकसाधनम् ।
विष्णुलोकैकसोपानं सर्वदुःखविनाशनम् ।। १७६

समस्तसुखदं सद्यः परनिर्वाणदायकम् ।
कामक्रोधादि निःशेषमनोमलविशोधनम् ।। १७७

शान्तिदं पावनं नृणां महापातकिनामपि ।
सर्वेषां प्राणिनामाशु सर्वाभीष्टफलप्रदम् ।। १७८

समस्तविघ्नशमनं सर्वारिष्टविनाशनम् ।
घोरदुःखप्रशमनं तीव्रदारिद्र्यनाशनम् ।। १७९

ऋणत्रयापहं गुह्यं धनधान्ययशस्करम् ।
सर्वैश्वर्यप्रदं सर्वसिद्धिदं सर्वधर्मदम् ।। १८०

तीर्थयज्ञतपोदानव्रतकोटिफलप्रदम् ।
जगज्जाड्यप्रशमनं सर्वविद्याप्रवर्तकम् ।। १८१

राज्यदं भ्रष्टराज्यानां रोगिणां सर्वरोगहृत्।
वन्ध्यानां सुखदं चायुः क्षीणानां जीवितप्रदम्॥ १८२

भूतग्रहविषध्वंसि ग्रहपीडाविनाशनम्।
मांगल्यं पुण्यमायुष्यं श्रवणात्पठनाज्जपात्॥ १८३

नास्ति विष्णोः परं धाम नास्ति विष्णोः परं तपः।
नास्ति विष्णोः परो धर्मो नास्ति मन्त्रो ह्यवैष्णवः॥ १८४

नास्ति विष्णोः परं ध्यानं नास्ति विष्णोः परा गतिः।
सर्वतीर्थमयो विष्णुः सर्वशास्त्रमयः प्रभुः॥ १८५

सर्वक्रतुमयो विष्णुः सत्यं सत्यं वदाम्यहम्।
पार्वत्युवाच-
धन्यास्म्यनुगृहीतास्मि कृतार्थास्मि जगत्पते॥ १८६

यन्मयेदं श्रुतं स्तोत्रं त्वद्रहस्यं सुदुर्लभम्।
कामाद्यासक्तचित्तत्वात्किं तु सर्वेश्वर प्रभो॥ १८७

त्वन्मयत्वात्प्रमादाद्वा शक्नोमि पठितुं न चेत्।
विष्णोः सहस्रनामैतत् प्रत्यहं वृषभध्वज॥ १८८

नाम्नैकेन तु येन स्यात्तत्फलं ब्रूहि मे प्रभो।
महादेव उवाच।
राम रामेति रामेति रमे रामे मनोरमे।
सहस्रनाम तत्तुल्यं रामनाम वरानने॥ १८९

# श्रीविष्णुसहस्रनामावलिः

(पाद्मपुराणे उत्तरखण्डतः)

ओं । वासुदेवाय नमः । परस्मै ब्रह्मणे । परमात्मने । परात्पराय । परस्मै धाम्ने । परस्मै ज्योतिषे । परस्मै तत्त्वाय । परस्मै पदाय । परस्मै शिवाय । परस्मै ध्येयाय । परस्मै ज्ञानाय । परस्यै गत्यै । परमार्थाय । परस्मै श्रेयसे । परानन्दाय । परोदयाय । अव्यक्तात्पराय । परस्मै व्योम्ने । परमर्द्धये । परेश्वराय नमः ॥ २०

ओं निरामयाय नमः । निर्विकाराय । निर्विकल्पाय । निराश्रयाय । निरञ्जनाय । निरातङ्काय । निर्लेपाय । निरवग्रहाय । निर्गुणाय । निष्कलाय । अनन्ताय । अभयाय । अचिन्त्याय । बलोचिताय । अतीन्द्रियाय । अमिताय । अपाराय । अनीशाय । अनीहाय । अव्ययाय नमः ॥ ४०

ओं अक्षयाय नमः । सर्वज्ञाय । सर्वगाय । सर्वाय । सर्वदाय । सर्वभावनाय । सर्वशास्त्रे । सर्वसाक्षिणे । सर्वस्य पूज्याय । सर्वदृशे । सर्वशक्तये । सर्वसाराय । सर्वात्मने । सर्वतोमुखाय । सर्वावासाय । सर्वरूपाय । सर्वादये । सर्वदुःखघ्ने । सर्वार्थाय । सर्वतो भद्राय नमः ॥ ६०

ओं सर्वकारणकारणाय नमः । सर्वातिशायिताय । सर्वाध्यक्षाय । सर्वसुरेश्वराय । षड्विंशकाय । महाविष्णवे । महागुह्याय । महाविभवे । नित्योदिताय । नित्ययुक्ताय । नित्यानन्दाय । सनातनाय । मायापतये । योगपतये । कैवल्यपतये । आत्मभुवे । जन्ममृत्युजरातीताय । कालातीताय । भवातिगाय । पूर्णाय नमः ॥ ८०

ओं सत्याय नमः । शुद्धबुद्धस्वरूपाय । नित्यचिन्मयाय । योगप्रियाय । योगगम्याय । भवबन्धैकमोचकाय । पुराणपुरुषाय । प्रत्यक्चैतन्याय । पुरुषोत्तमाय । वेदान्तवेद्याय । दुर्ज्ञेयाय । तापत्रयविवर्जिताय । ब्रह्मविद्याश्रयाय । अनाद्याय । स्वप्रकाशाय । स्वयंप्रभवे । सर्वोपेयाय । उदासीनाय । प्रणवाय । सर्वतःसमाय नमः ।। १००

ओं सर्वानवद्याय नमः । दुष्प्राप्याय । तुरीयाय । तमसःपराय । कूटस्थाय । सर्वसंश्लिष्टाय । वाङ्मनोगोचरातिगाय । संकर्षणाय । सर्वहराय । कालाय । सर्वभयंकराय । अनुल्लंघ्याय । चित्रगतये । महारुद्राय । दुरासदाय । मूलप्रकृतये । आनन्दाय । प्रद्युम्नाय । विश्वमोहनाय । महामायाय नमः ।। १२०

ओं विश्वबीजाय नमः । परशक्त्यै । सुखैकभुवे । सर्वकाम्याय । अनन्तलीलाय । सर्वभूतवशंकराय । अनिरुद्धाय । सर्वजीवाय । हृषीकेशाय । मनःपतये । निरुपाधिप्रियाय । हंसाय । अक्षराय । सर्वनियोजकाय । ब्रह्मणे । प्राणेश्वराय । सर्वभूतभृते । देहनायकाय । क्षेत्रज्ञाय । प्रकृत्यै नमः ।। १४०

ओं स्वामिने नमः । पुरुषाय । विश्वसूत्रधृशे । अन्तर्यामिणे । त्रिधाम्ने । अन्तःसाक्षिणे । त्रिगुणाय । ईश्वराय । योगिगम्याय । पद्मनाभाय । शेषशायिने । श्रियःपतये । श्रीसदोपास्यपादाब्जाय । नित्यश्रिये । श्रीनिकेतनाय । नित्यंवक्षःस्थलस्थश्रिये । श्रीनिधये । श्रीधराय । हरये । वश्यश्रिये नमः ।। १६०

ओं निश्चलाय नमः । श्रीदाय । विष्णवे । क्षीराब्धिमन्दिराय । कौस्तुभोद्भासितोरस्काय । माधवाय । जगदार्तिघ्ने । श्रीवत्सवक्षसे । निःसीमकल्याणगुणभाजनाय । पीतांबराय । जगन्नाथाय ।

जगत्त्रात्रे । जगत्पित्रे । जगद्बन्धवे । जगत्स्रष्टे । जगद्धात्रे । जगन्निधये। जगदेकस्फुरद्वीर्याय। अनहंवादिने। जगन्मयाय नमः ।। १८०

ओं सर्वाश्चर्यमयाय नमः। सर्वसिद्धार्थाय। सर्वरञ्जिताय। सर्वामोघोद्यमाय । ब्रह्मरुद्राद्युत्कृष्टचेतनाय । शंभोःपितामहाय । ब्रह्मपित्रे । शक्राद्यधीश्वराय । सर्वदेवप्रियाय । सर्वदेवमूर्तये । अनुत्तमाय । सर्वदेवैकशरणाय । सर्वदेवैकदैवताय । यज्ञभुजे । यज्ञफलदाय । यज्ञेशाय । यज्ञभावनाय । यज्ञत्रात्रे । यज्ञपुंसे । वनमालिने नमः ।। २००

ओं द्विजप्रियाय नमः । द्विजैकमानदाय । विप्रकुलदेवाय । असुरान्तकाय । सर्वदुष्टान्तकृते । सर्वसज्जनानन्यपालकाय । सप्तलोकैकजठराय । सप्तलोकैकमण्डनाय । सृष्टिस्थित्यन्तकृते । चक्रिणे । शार्ङ्गधन्वने । गदाधराय । शंखभृते । नन्दकिने । पद्मपाणये । गरुडवाहनाय । अनिर्देश्यवपुषे । सर्वपूज्याय । त्रैलोक्यपावनाय। अनन्तकीर्तये नमः ।। २२०

ओं निःसीमपौरुषाय नमः । सर्वमङ्गलाय । सूर्यकोटिप्रतीकाशाय। यमकोटिदुरासदाय। मयकोटिजगत्स्रष्ट्रे। वायुकोटिमहाबलाय। कोटीन्दुजगदानन्दिने। शंभुकोटिमहेश्वराय। कन्दर्पकोटिलावण्याय। दुर्गाकोट्यरिमर्दनाय। समुद्रकोटिगंभीराय । तीर्थकोटिसमाह्वयाय। कुबेरकोटिलक्ष्मीवते। शक्रकोटिविलासवते । हिमवत्कोटिनिष्कंपाय । कोटिब्रह्माण्डविग्रहाय । कोट्यश्वमेध-पापघ्नाय। यज्ञकोटिसमार्चनाय। सुधाकोटिस्वास्थ्यहेतवे । कामधुहे नमः ।। २४०

ओं कोटिकामदाय नमः । ब्रह्मविद्याकोटिरूपाय । शिपिविष्टाय । शुचिश्रवसे । विश्वंभराय । तीर्थपादाय । पुण्यश्रवणकीर्तनाय । आदिदेवाय । जगज्जैत्राय । मुकुन्दाय । कालनेमिघ्ने । वैकुण्ठेश्वरमाहात्म्याय । महायोगेश्वरोत्सवाय । नित्यतृप्ताय । लसद्भावाय । निःशङ्काय । नरकान्तकाय । दीनानाथैकशरणाय । विश्वैकव्यसनापहाय । जगत्कृपाक्षमाय नमः ॥ २६०

ओं नित्यं कृपालवे नमः । सज्जनाश्रयाय । योगेश्वराय । सदोदीर्णाय । वृद्धिक्षयविवर्जिताय । अधोक्षजाय । विश्वरेतसे । प्रजापतिशताधिपाय । शक्रब्रह्मार्चितपदाय । शंभुब्रह्मोर्ध्व-धामगाय । सूर्यसोमेक्षणाय । विश्वभोक्त्रे । सर्वस्यपारगाय । जगत्सेतवे । धर्मसेतुधराय । विश्वधुरन्धराय । निर्ममाय । अखिललोकेशाय । निःसङ्गाय । अद्भुतभोगवते नमः ॥ २८०

ओं वश्यमायाय नमः । वश्यविश्वाय । विष्वक्सेनाय । सुरोत्तमाय । सर्वश्रेयःपतये । दिव्यानर्घ्यभूषणभूषिताय । सर्वलक्षणलक्षण्याय । सर्वदैत्येन्द्रदर्पघ्ने । समस्तदेवसर्वस्वाय । सर्वदैवतनायकाय । समस्तदेवकवचाय । सर्वदेवशिरोमणये । समस्तदेवतादुर्गाय । प्रपन्नाशनिपञ्जराय । समस्तभयहृन्नाम्ने । भगवते । विष्टरश्रवसे । विभवे । सर्वहितोदर्काय । हतारये नमः ॥ ३००

ओं स्वर्गतिप्रदाय नमः । सर्वदैवतजीवेशाय । ब्राह्मणादिनियोजकाय । ब्रह्मणे । शंभवे । शतार्धायुषे । ब्रह्मज्येष्ठाय । शिशवे । स्वराजे । विराजे । भक्तपराधीनाय । स्तुत्याय ।

स्तोत्रार्थसाधकाय । परार्थकर्त्रे । कृत्यज्ञाय । स्वार्थकृत्य-सदोज्झिताय । सदानन्दाय । सदाभद्राय । सदाशान्ताय । सदाशिवाय नमः ।। ३२०

ओं सदाप्रियाय नमः । सदातुष्टाय । सदापुष्टाय । सदाऽर्चिताय । सदापूताय । पावनाग्र्याय । वेदगुह्याय । वृषाकपये । सहस्रनाम्ने । त्रियुगाय । चतुर्मूर्तये । चतुर्भुजाय । भूतभव्यभवन्नाथाय । महापुरुषपूर्वजाय । नारायणाय । मुञ्जकेशाय । सर्वयोगविनिःसृताय । वेदसाराय । यज्ञसाराय नमः ।। ३४०

ओं सामसाराय नमः । तपोनिधये । साध्याय । श्रेष्ठाय । पुराणर्षये । निष्ठायै । शान्त्यै । परायणाय । शिवत्रिशूलविध्वंसिने । श्रीकण्ठैकवरप्रदाय । नराय । कृष्णाय । हरये । धर्मनन्दनाय । धर्मजीवनाय । आदिकर्त्रे । सर्वसत्याय । सर्वस्त्रीरत्नदर्पघ्ने । त्रिकालजितकन्दर्पाय । उर्वशीसृजे नमः ।। ३६०

ओं मुनीश्वराय नमः । आद्याय । कवये । हयग्रीवाय । सर्ववागीश्वरेश्वराय । सर्वदेवमयाय । ब्रह्मणे । गुरवे । वागीश्वरीपतये । अनन्तविद्याप्रभवाय । मूलाविद्याविनाशकाय । सर्वज्ञदाय । जगज्जाड्यनाशकाय । मधुसूदनाय । अनेकमन्त्रकोटीशाय । शब्दब्रह्मैकपारगाय । आदिविदुषे । वेदकर्त्रे । वेदात्मने । श्रुतिसागराय नमः ।। ३८०

ओं ब्रह्मार्थवेदहरणाय नमः । सर्वविज्ञानजन्मभुवे । विद्याराजाय । ज्ञानमूर्तये । ज्ञानसिन्धवे । अखण्डधिये । मत्स्यदेवाय । महाशृङ्गाय । जगद्बीजवहित्रदृशे ।

लीलाव्याप्ताखिलांभोधये । चतुर्वेदप्रवर्तकाय । आदिकूर्माय । अखिलाधाराय । तृणीकृतजगद्भराय । अमरीकृतदेवौघाय । पीयूषोत्पत्तिकारणाय । आत्माधाराय । धराधाराय । यज्ञाङ्गाय । धरणीधराय नमः ।। ४००

ओं हिरण्याक्षहराय नमः । पृथ्वीपतये । श्राद्धादिकल्पकाय । समस्तपितृभीतिघ्नाय । समस्तपितृजीवनाय । हव्यकव्यैकभुजे । हव्यकव्यैकफलदायकाय । रोमान्तर्लीनजलधये । क्षोभिताशेष-सागराय । महावराहाय । यज्ञस्य ध्वंसकाय । याज्ञिकाश्रयाय । श्रीनृसिंहाय । दिव्यसिंहाय । सर्वानिष्टार्थदुःखघ्ने । एकवीराय । अद्भुतबलाय । यन्त्रमन्त्रैकभञ्जनाय । ब्रह्मादिदुःसहज्योतिषे । युगान्ताग्न्यतिभीषणाय नमः ।। ४२०

ओं कोटिवज्राधिकनखाय नमः । जगद्दुष्प्रेक्ष्यमूर्तिधृशे । मातृचक्रप्रमथनाय । महामातृगणेश्वराय । अचिन्त्यामोघ-वीर्याढ्याय । समस्तासुरघस्मराय । हिरण्यकशिपुच्छेदिने । कालाय । संकर्षिणीपतये । कृतान्तवाहनासह्याय । समस्तभय-नाशनाय । सर्वविघ्नान्तकाय । सर्वसिद्धिदाय । सर्वपूरकाय । समस्तपातकध्वंसिने । सिद्धमन्त्राधिकाह्वयाय । भैरवेशाय । हरार्तिघ्नाय । कालकोटिदुरासदाय । दैत्यगर्भस्राविनाम्ने नमः ।। ४४०

ओं स्फुटद् ब्रह्माण्डगर्जिताय नमः । स्मृतमात्राखिलत्रात्रे । अद्भुतरूपाय । महाहरये । ब्रह्मचर्यशिरःपिण्डिने । दिक्पालाय । अर्धाङ्गभूषणाय । द्वादशार्कशिरोदाम्ने । रुद्रशीर्षैकनूपुराय । योगिनीग्रस्तगिरिजात्रात्रे । भैरवतर्जकाय । वीरचक्रेश्वराय । अत्यु-ग्राय । अपमारये । कालशंबराय । क्रोधेश्वराय । रुद्रचण्डीपरि-

वारादिदुष्टभुजे। सर्वाक्षोभ्याय। मृत्युमृत्यवे। कालमृत्युनिवर्तकाय नमः ॥ ४६०

ओं असाध्यसर्वदेवघ्नाय नमः । सर्वदुर्ग्रहसौम्यकृते । गणेशकोटिदर्पघ्नाय । दुःसहाशेषगोत्रघ्ने । देवदानवदुर्दर्शाय । जगद्भयदभीषणाय । समस्तदुर्गतित्रात्रे । जगद्भक्षकभक्षकाय । उग्रशांबरमार्जाराय। कालमूषकभक्षकाय। अनन्तायुधदोर्दण्डिने। नृसिंहाय । वीरभद्रजिते । योगिनीचक्रगुह्येशाय । शक्रारिपशुमांसभुजे । रुद्राय । नारायणाय । मेषरूपशंकर-वाहनाय । मेषरूपशिवत्रात्रे। दुष्टशक्तिसहस्रभुजे नमः ॥ ४८०

ओं तुलसीवल्लभाय नमः । वीराय । वामाचाराय । अखिलेष्टदाय । महाशिवाय । शिवारूढाय । भैरवैककपालधृशे । कि(हि)ल्लीचक्रेश्वराय। शक्रदिव्यमोहनरूपदाय। गौरीसौभाग्य-दाय । मायानिधये। मायाभयापहाय। ब्रह्मतेजोमयाय। ब्रह्मश्री-मयाय । त्रयीमयाय । सुब्रह्मण्याय । बलिध्वंसिने । वामनाय । अदितिदुःखघ्ने। उपेन्द्राय नमः ॥ ५००

ओं नृपतये नमः । विष्णवे । कश्यपान्वयमण्डनाय । बलिस्वराज्यदाय। सर्वदेवविप्रान्नदाय। अच्युताय। उरुक्रमाय। तीर्थपादाय । त्रिपदस्थाय । त्रिविक्रमाय । व्योमपादाय । स्वपादांभःपवित्रितजगत्त्रयाय । ब्रह्मेशाद्यभिवन्द्यांघ्रये । द्रुतधर्मांघ्रिधावनाय । अचिन्त्याद्भुतविस्ताराय । विश्ववृक्षाय । महाबलाय। राहुमूर्धापरांगच्छिदे। भृगुपत्नीशिरोहराय। पापत्रस्ताय नमः ॥ ५२०

ओं सदापुण्याय नमः । दैत्याशानित्यखण्डनाय । पूरिताखिलदेवाशाय । विश्वार्थैकावतारकृते । स्वमायानित्य-

गुप्तात्मने । सदा भक्तचिन्तामणये । वरदाय । कार्तवीर्यादि राज-राज्यप्रदाय । अनघाय । विश्वश्लाघ्यामिताचाराय । दत्तात्रेयाय । मुनीश्वराय । पराशक्तिसदाश्लिष्टाय । योगानन्दाय । सदोन्मदाय । समस्तेन्द्रारितेजोहृते । परमामृतपद्मपाय । अनसूयागर्भरत्नाय । भोगमोक्षसुखप्रदाय । जमदग्निकुलादित्याय नमः ।। ५४०

ओं रेणुकाद्भुतशक्तिकृते नमः । मातृहत्यादिनिर्लेपाय । स्कन्दजिद्विप्रराज्यदाय । सर्वक्षत्रान्तकृते । वीरदर्पघ्ने । कार्त-वीर्यजिते । सप्तद्वीपवतीदात्रे । शिवार्चकयशःप्रदाय । भीमाय । परशुरामाय । शिवाचार्यैकविप्रभुजे । शिवाखिलज्ञानकोशाय । भीष्माचार्याय । अग्निदेवताय । द्रोणाचार्य गुरवे । विश्वजैत्रधन्वने । कृतान्तजिते । अद्वितीयतपोमूर्तये । ब्रह्मचर्यैकदक्षिणाय । मनवे नमः ।। ५६०

ओं श्रेष्ठाय नमः । सतां सेतवे । महीयसे । वृषभाय । विराजे । आदिराजाय । क्षितिपित्रे । सर्वरत्नैकदोहकृते । पृथवे । जन्माद्येकदक्षाय । गीःश्रीकीर्तिस्वयंवृताय । जगद्वृतिप्रदाय । चक्रवर्तिश्रेष्ठाय । अद्वयास्त्रधृशे । सनकादिमुनिप्राप्यभगवद्भक्ति-वर्धनाय । वर्णाश्रमादिधर्माणांकर्त्रे । वक्त्रे । प्रवर्तकाय । सूर्यवंश-ध्वजाय । रामाय नमः ।। ५८०

ओं राघवाय नमः । सद्गुणार्णवाय । काकुत्स्थाय । वीरराजे । राज्ञे । राजधर्मधुरन्धराय । नित्यस्वःस्थाश्रयाय । सर्वभद्रग्राहिणे । शुभैकदृशे । नररत्नाय । रत्नगर्भाय । धर्माध्यक्षाय । महानिधये । सर्वश्रेष्ठाश्रयाय । सर्वशास्त्रार्थग्रामवीर्यवते । जगद्वशाय । दाशरथये । सर्वरत्नाश्रयाय । नृपाय । समस्तधर्मसुवे नमः ।। ६००

ओं सर्वधर्मद्रष्ट्रे नमः । अखिलाघघ्ने । अतीन्द्राय । ज्ञानविज्ञानपारदाय । क्षमांबुधये । सर्वप्रकृष्टशिष्टेष्टाय । हर्षशोकाद्य-नाकुलाय । पित्राज्ञात्यक्तसाम्राज्याय । सपत्नोदयनिर्भयाय । गुहादेशार्पितैश्वर्याय । शिवस्पर्धिजटाधराय । चित्रकूटाप्तरत्नाद्रये । जगदीशाय । वनेचराय । यथेष्टामोघसर्वास्त्राय । देवेन्द्रतनयाक्षिघ्ने । ब्रह्मेन्द्रादिनतैषीकाय । मारीचघ्नाय । विराधघ्ने । ब्रह्मशापहतापशेष-दण्डकारण्यपावनाय नमः ॥ ६२०

ओं चतुर्दशसहस्रोग्ररक्षोघ्नैकशरैकधृशे नमः । खरारये । त्रिशिरोहन्त्रे । दूषणघ्नाय । जनार्दनाय । जटायुषोऽग्निगतिदाय । अगस्त्यसर्वस्वमन्त्रराजे । लीलाधनुःकोट्यपास्तदुन्दुभ्यस्थिमहा-चयाय । सप्ततालव्यधाकृष्टध्वस्तपातालदानवाय । सुग्रीवराज्य-दाय । अहीनमनसैवाभयप्रदाय । हनुमद्रुद्रमुख्येशसमस्तकपिदेह-भृते । सनागदैत्यबाणैकव्याकुलीकृतसागराय । सम्लेच्छकोटिबाणै-कशुष्कनिर्दग्धसागराय । समुद्राद्भुतपूर्वैकबद्धसेतवे । यशोनिधये । असाध्यसाधकाय । लंकासमूलोत्कर्षदक्षिणाय । वरदप्तजगच्छल्य-पौलस्त्यकुलकृन्तनाय । रावणिघ्नाय नमः ॥ ६४०

ओं प्रहस्तच्छिदे नमः । कुंभकर्णभिदे । उग्रघ्ने । रावणैक-शिरश्छेत्रे । निःशङ्केन्द्रैकराज्यदाय । स्वर्गास्वर्गत्वविच्छेदिने । देवेन्द्रानिन्द्रताहराय । रक्षोदेवत्वहृते । धर्माधर्मघ्नाय । पुरुष्टुताय । नतिमात्रदशास्यारये । दत्तराज्यविभीषणाय । सुधावृष्टिमृता-शेषस्वसैन्योज्जीवनैककृते । देवब्राह्मणनामैकधात्रे । सर्वामरार्चि-ताय । ब्रह्मसूर्येन्द्ररुद्रादिवृन्दार्पितसतीप्रियाय । अयोध्याखिल-राजन्याय । सर्वभूतमनोहराय । स्वामितुल्यकृपादण्डाय । हीनोत्कृष्टैकसत्प्रियाय नमः ॥ ६६०

ओं स्वपक्षादिन्यायदर्शिने नमः । हीनार्थाधिकसाधकाय । व्याधव्याजानुचितकृते । तारकाय । अखिलतुल्यकृते । पार्वत्याऽधिकमुक्तात्मने । प्रियात्यक्ताय । स्मरारिजिते । साक्षात्कुशलवच्छद्मेन्द्रादितातात्य । अपराजिताय । कोशलेन्द्राय । वीरबाहवे । सत्यार्थत्यक्तसोदराय । शरसन्धाननिर्धूतधरणी-मण्डलोदयाय । ब्रह्मादिकाम्यसान्निध्यसनाथीकृतदैवताय । ब्रह्मलोकाप्तचाण्डालाद्यशेषप्राणिसार्थकाय । स्वर्नीतगर्दभाश्वादये । चिरायोध्याऽवनैककृते । रामद्वितीयाय । सौमित्रये नमः ।। ६८०

ओं लक्ष्मणाय नमः । प्रहतेन्द्रजिते । विष्णुभक्त्याप्तरामांघ्रये । पादुकाराज्यनिर्वृताय । भरताय । असह्यगन्धर्वकोटिघ्नाय । लवणान्तकाय । शत्रुघ्नाय । वैद्यराजायुर्वेदगर्भौषधीपतये । नित्यामृतकराय । धन्वन्तरये । यज्ञाय । जगद्धराय । सूर्यारिघ्नाय । सुराजीवाय । दक्षिणेशाय । द्विजप्रियाय । छिन्नमूर्धापितेशार्काय । शेषाङ्गस्थापितामराय । विश्वार्थाशेषकृते नमः ।। ७००

ओं राहुशिरश्छेदाक्षताकृतये नमः । वाजपेयादिनामाग्नये । वेदधर्मपरायणाय । श्वेतद्वीपपतये । सांख्यप्रणेत्रे । सर्वसिद्धिराजे । विश्वप्रकाशितज्ञानयोगाय । मोहतमिस्रघ्ने । देवहूत्यात्मजाय । सिद्धाय । कपिलाय । कर्दमात्मजाय । योगस्वामिने । ध्यानभंगसगरात्मजभस्मकृते । धर्माय । वृषेन्द्राय । सुरभीपतये । शुद्धात्मभाविताय । शंभवे । त्रिपुरदाहैकस्थैर्यविश्वरथोद्वहाय नमः ।। ७२०

ओं भक्तशंभुजिताय नमः । दैत्यामृतवापीसमस्तपाय । महाप्रलयविश्वैकद्वितीयाखिलनागराजे । शेषदेवाय । सहस्राक्षाय । सहस्रास्यशिरोभुजाय । फणामणिकणाकारयोजिताब्ध्यंबुदक्षितये ।

कालाग्निरुद्रजनकाय । मुसलास्त्राय । हलायुधाय । नीलांबराय । वारुणीशाय । मनोवाक्कायदोषघ्ने । असन्तोषाय । दृष्टिमात्रपातितैकदशाननाय । बलिसंयमनाय । घोराय । रौहिणेयाय । प्रलंबघ्ने । मुष्टिकघ्नाय नमः ।। ७४०

ओं द्विविदघ्ने नमः । कालिन्दीकर्षणाय । बलाय । रेवती-रमणाय । पूर्वभक्तिखेदाच्युताग्रजाय । देवकीवसुदेवाह्वकश्य-पादितिनन्दनाय । वार्ष्णेयाय । सात्वतांश्रेष्ठाय । शौरये । यदुकुलोद्वहाय । नराकृतये । परस्मै ब्रह्मणो । सव्यसाचिवरप्रदाय । ब्रह्मादिकाम्यलालित्यजगदाश्चर्यशैशवाय । पूतनाघ्नाय । शकटभिदे । यमलार्जुनभञ्जनाय । वातासुरारये । केशिघ्नाय । धेनुकारये नमः ।। ७६०

ओं गवीश्वराय नमः । दामोदराय । गोपदेवाय । यशोदानन्ददायकाय । कालीयमर्दनाय । सर्वगोपगोपीजनप्रियाय । लीलागोवर्धनधराय । गोविन्दाय । गोकुलोत्सवाय । अरिष्टमथनाय । कामोन्मत्तगोपीविमुक्तिदाय । सद्यःकुवलयापीडघातिने । चाणूरमर्दनाय । कंसारये । उग्रसेनादिराज्यव्यापारितापराय । सुधर्मांकितभूलोकाय । जरासन्धबलान्तकाय । त्यक्तभग्नजरा-सन्धाय । भीमसेनयशःप्रदाय । सान्दीपनमृतापत्यदात्रे नमः ।। ७८०

ओं कालान्तकादिजिते नमः । समस्तनारकित्रात्रे । सर्वभूपतिकोटिजिते । रुक्मिणीरमणाय । रुक्मिशासनाय । नरकान्तकाय । समस्तसुन्दरीकान्ताय । मुरारये । गरुडध्वजाय । एकाकिने । जितरुद्रार्कमरुदाद्यखिलेश्वराय । देवेन्द्रदर्पघ्ने ।

कल्पद्रुमालंकृतभूतलाय । बाणबाहुसहस्रच्छिदे । नन्द्यादिगण-कोटिजिते । लीलाजितमहादेवाय । महादेवैकपूजिताय । इन्द्रार्थार्जुननिर्भङ्गजयदाय। पाण्डवैकधृशे। काशिराजशिरश्छेत्रे नमः ॥ ८००

ओं रुद्रशक्त्येकमर्दनाय नमः । विश्वेश्वरप्रसादाक्षाय । काशीराजसुतार्दनाय । शंभुप्रतिज्ञाविध्वंसिने । काशीनिर्दग्ध-नायकाय । काशीशगणकोटिघ्नाय । लोकशिक्षाशिवार्चकाय । युवतीव्रतपाय। बभ्र्याय। पुराशिववरप्रदाय। शंकरैकप्रतिष्ठाधृशे। स्वांशशाङ्करपूजकाय । शिवकन्याव्रतपतये (प्रीताय) । कृष्ण-रूपशिवारिघ्ने । महालक्ष्मीवपुर्गौरीत्रात्रे । वैदलवृत्रघ्ने । स्वधाम-मुचुकुन्दैकनिष्कालयवनेष्टकृते । यमुनापतये । आनीतपरि-लीनशिवात्मजाय । श्रीदामरंकभक्तार्थभूम्यानीतेन्द्रवैभवाय । दुर्वृत्तशिशुपालैकमुक्तिदाय नमः ॥ ८२०

ओं द्वारकेश्वराय नमः । आचाण्डालादिकप्राप्यद्वारका-निधिकोटिकृते । अक्रूरोद्धवमुख्यैकभक्तस्वच्छन्दमुक्तिदाय । सबालस्त्रीजलक्रीडाय । अमृतवापीकृतार्णवाय । ब्रह्मास्त्रदग्ध-गर्भस्थपरीक्षिज्जीवनैककृते । परिलीनद्विजसुतानेत्रे । अर्जुनम-दापहाय । गूढमुद्राकृतिग्रस्तभीष्माद्यखिलकौरवाय । यथार्थ-खण्डिताशेषदिव्यास्त्राय। पार्थमोहहृते। गर्भशापच्छलध्वस्तया-दवोर्वीभयापहाय । जराव्याधारिगतिदाय । स्मृतिमात्राखिलेष्ट-दाय । कामदेवाय । रतिपतये । मन्मथाय । शंबरान्तकाय । अनङ्गाय । जितगौरीशाय नमः ॥ ८४०

ओं रतिकान्ताय नमः । सदेप्सिताय । पुष्पेषवे । विश्वविजयिने । स्मराय । कामेश्वरीप्रियाय । उषापतये । विश्वकेतवे । विश्वदृप्ताय । अधिपूरुषाय । चतुरात्मने । चतुर्व्यूहाय । चतुर्युगविधायकाय । चतुर्वेदैकविश्वात्मने । सर्वोत्कृष्टांशकोटिकाय । आश्रमात्मने । पुराणर्षये । व्यासाय । शाखासहस्रकृते । महाभारतनिर्मात्रे नमः ॥ ८६०

ओं कवीन्द्राय नमः । बादरायणाय । कृष्णद्वैपायनाय । सर्वपुरुषार्थैकबोधकाय । वेदान्तकर्त्रे । ब्रह्मैकव्यञ्जकाय । पुरुवंशकृते । बुद्धाय । ध्यानजिताशेषदेवदेवाय । जगत्प्रियाय । निरायुधाय । जगज्जैत्राय । श्रीधराय । दुष्टमोहनाय । दैत्यवेदबहिःकर्त्रे । वेदार्थश्रुतिगोपकाय । शौद्धोदनये । दृष्टदिष्टाय । सुखदाय । सदसस्पतये नमः ॥ ८८०

ओं यथायोग्याखिलकृपाय नमः । सर्वशून्याय । अखिलेष्टदाय । चतुष्कोटिपृथक्तत्वाय । प्रज्ञापारमितेश्वराय । पाखण्डवेदमार्गेशाय । पाखण्डश्रुतिगोपकाय । कल्किने । विष्णुयशःपुत्राय । कलिकालविलोपकाय । समस्तम्लेच्छदुष्टघ्नाय । सर्वशिष्टद्विजातिकृते । सत्यप्रवर्तकाय । देवद्विजदीर्घक्षुधापहाय । अश्ववारादिरेवान्ताय । पृथ्वीदुर्गतिनाशनाय । सद्यःक्ष्मानन्त-लक्ष्मीकृते । नष्टनिःशेषधर्मविदे । अनन्तस्वर्णयोगैकहेम-पूर्णाखिलद्विजाय । असाध्यैकजगच्छास्त्रे नमः ॥ ९००

ओं विश्ववन्द्याय नमः । जयध्वजाय । आत्मतत्त्वाधिपाय । कर्तृश्रेष्ठाय । विधये । उमापतये । भर्तृश्रेष्ठाय । प्रजेशाग्र्याय । मरीचये । जनकाग्रण्ये । कश्यपाय । देवराजेन्द्राय । प्रह्लादाय । दैत्यराजे ।

शशिने । नक्षत्रेशाय। रवये। तेजःश्रेष्ठाय। शुक्राय। कवीश्वराय नमः ।। ९२०

ओं महर्षिराजे नमः। भृगवे। विष्णवे। आदित्येशाय। बलये । स्वराजे। वायवे। वह्नये। शुचये। श्रेष्ठाय। शंकराय। रुद्रराजे। गुरवे । विद्वत्तमाय। चित्ररथाय। गन्धर्वाग्र्याय। अक्षरोत्तमाय। वर्णादये। अग्र्याय। स्त्रियै नमः ।। ९४०

ओं गौर्यै नमः। शक्त्यग्र्यायै। आशिषे। नारदाय। देवर्षिराजे । पाण्डवाग्र्याय । अर्जुनाय । वादाय । प्रवादराजे । पवनाय । पवनेशानाय । वरुणाय । यादसांपतये । गंगायै । तीर्थोत्तमाय । द्यूताय । छलकाग्र्याय। वरौषधाय। अन्नाय। सुदर्शनाय नमः ।। ९६०

ओं अस्त्राग्र्याय नमः। वज्राय। प्रहरणोत्तमाय। उच्चैःश्रवसे। वाजिराजाय । ऐरावताय । इभेश्वराय । अरुन्धत्यै । एकपत्न्यै । ईशाय । अश्वत्थाय । अशेषवृक्षराजे । अध्यात्मविद्यायै । विद्याग्र्याय । प्रणवाय । छन्दसांवराय । मेरवे । गिरिपतये । मार्गाय । मासाग्र्याय नमः ।। ९८०

ओं कालसत्तमाय नमः । दिनाद्यात्मने । पूर्वसिद्धाय । कपिलाय । सामवेदराजे। तार्क्ष्याय। खगेन्द्राय। ऋत्वग्र्याय। वसन्ताय । कल्पपादपाय । दातृश्रेष्ठाय । कामधेनवे । आर्तिघ्नाग्र्याय । सुहृत्तमाय। चिन्तामणये। गुरुश्रेष्ठाय। मात्रे। हिततमाय। पित्रे। सिंहाय नमः ।। १०००

ओं मृगेन्द्राय नमः। नागेन्द्राय। वासुकये। नृवराय। नृपाय। वर्णेशाय। ब्राह्मणाय। चेतःकरणाग्र्याय नमः ।। १००८

श्रीमहाभारतान्तर्गत

श्रीविष्णुसहस्रनामावल्यन्तर्गत

# अकाराद्यष्टोत्तरशतनामस्तोत्रम्

(सभाष्यम्)

ओं अक्षरोऽजोऽच्युतोऽमोघोऽनिरुद्धोऽनिमिषोऽग्रणीः ।
अव्ययोऽनादिनिधनोऽमेयात्माऽसंमितोऽनिलः ।। १

अप्रमेयोऽव्ययोऽग्राह्योऽमृतोऽव्यङ्गोऽच्युतोऽतुलः ।
अतीन्द्रोऽतीन्द्रियोऽदृश्योऽनिर्देश्यवपुरन्तकः ।। २

अनुत्तमोऽनघोऽमोघोऽप्रमेयात्माऽमिताशनः ।
अहःसंवर्तकोऽनन्तजिदभूरजितोऽच्युतः ।। ३

असंख्येयोऽमृतवपुरर्थोऽनर्थोऽमितविक्रमः ।
अविज्ञाताऽरविन्दाक्षोऽनुकूलोऽहरपां निधिः ।। ४

अमृतांशूद्भवोऽमृत्युरमरप्रभुरक्षरः ।
अंभोनिधिरनन्तात्माऽजोऽनलोऽसदधोक्षजः ।। ५

अशोकोऽमृतपोऽनीशोऽनिरुद्धोऽमितविक्रमः ।
अनिर्विण्णोऽनयोऽनन्तोऽविधेयात्माऽपराजितः ।। ६

अधिष्ठानमनन्तश्रीरप्रमत्तोऽप्ययोऽग्रजः ।
अयोनिजोऽनिवर्त्यर्कोऽनिर्देश्यवपुरर्चितः ।। ७

अर्चिष्मानप्रतिरथोऽनन्तरूपोऽपराजितः ।
अनामयोऽनलोऽक्षोभ्योऽनेकमूर्ति रमूर्तिमान् ।। ८

अमृताशोऽचलोऽमान्य धृतोऽणुरनिलोऽद्भुतः ।
अमूर्तिरर्होऽभिप्रायोऽचिन्त्योऽनिर्विण्ण एव च ।। ९

अनादिरन्नमन्नादोऽजोऽव्यक्तोऽक्रूर एव च।
अमेयात्माऽनघोऽश्वत्थोऽक्षोभ्योऽरौद्र एव च॥ १०

अधाताऽनन्त इत्येवं नाम्नामष्टोत्तरं शतम्।
विष्णोः सहस्रनामभ्योऽकारादि समुद्धृतम्॥ ११

स्मृतं श्रुतमधीतं तत्प्रसादादघनाशनम्।
ध्यातं चिराय तद्भावप्रदं सर्वार्थसाधकम्॥ १२

*___*___*

श्री ज्ञानानन्दभारतीस्वामिविरचितं

## नामार्थविवरणम्

अतीतोऽयं क्षरं यस्मात् अक्षरः प्रोच्यते ततः। (१७)
अयं न जायते यस्मात् अज इत्युच्यते ततः॥ (९५)

अयं न च्यवते यस्मात् स्वस्थितेरच्युतस्ततः। (१००)
अमोघो, यस्य सङ्कल्पो मोघो न स्यात्कदाचन॥ (११०)

अनिरुद्धो, न केनापि निरुद्धः संयुगादिषु। (१८५)
अयं ह्यनिमिषो नित्यं जागरूकोऽवनादिषु॥ (२१५)

अग्रे सर्वस्य नेतृत्वाद् अग्रणीः उच्यते प्रभुः। (२१८)
अव्ययोऽयं सर्वगतिः न व्येति च कुतश्चन॥ (१३)

अनादित्वादनन्तत्वात् अनादिनिधनो ह्यसौ। (४३)
अमेयात्मा यतो ह्यात्मा मानैर्मातुं न शक्यते॥ (१०२)

असंमितो यतो नास्य देशकालव्यवस्थितिः। (१०८)
अनिलो यस्य नाधारः सर्वभूतधरो ह्यसौ॥ (२३४)

अगम्यत्वात्प्रमाणानां अप्रमेय इति स्मृतः । (४७)
अपक्षयविहीनत्वात्पुनरेवायमव्ययः ।। (३१)

अग्राह्यत्वान्मनोवाचां अग्राह्य इति कीर्त्यते । (५६)
अमृतः कीर्तितो यस्मान्नित्यो मरणवर्जितः ।। (११९)

अव्यङ्गो हरिरेव स्याद्यतः सर्वाङ्ग सुन्दरः । (१२९)
अच्युतोऽयं यतो भक्तान्न कदाऽपि विमुञ्चति ।। (१००)

अतुलो यस्य नास्त्येव सदृशो भुवनत्रये । (३५५)
अतीन्द्रोऽयं यतो वीर्यादिन्द्रमत्येति भूरिशः ।। (१५७)

अतीन्द्रियो यतोऽगम्य इन्द्रियैश्चक्षुरादिभैः । (१६९)
अग्राह्यश्चक्षुषा बुद्ध्या ततोऽदृश्यः स उच्यते ।। (५६)

अशक्यत्वात्सुनिर्देष्टुं अनिर्देश्यवपुःस्मृतः । (१७७)
अन्तकत्वात्स सर्वेषां प्राणिनामन्तकः स्मृतः ।। (५२०)

अनुत्तमो यत स्तस्मादुत्तमो नैव विद्यते । (८१)
अनघोऽयं सदा शुद्धः पापसंसर्गवर्जितः ।। (१४६)

अमोघा यस्य पादाब्जसेवा मोघा कदाऽपि न । (१५४)
अयं स्याद प्रमेयात्मा यः प्रत्यक्षाद्यगोचरः ।। (२४८)

अशेषस्यापि लोकस्य ह्यत्तृत्वादमिताशनः । (३७२)
अहः संवर्तको यस्मात् दिवसानां प्रवर्तकः ।। (२३२)

अनन्तजिद्यतो जेता सर्वेषामपि युध्यताम् । (३०७)
अनुत्पन्नः कदाऽपीति सोऽभूरित्यभिधीयते ।। (४३७)

अजितो यो न केनापि कदाचिदपि निर्जितः । (५४९)
अच्युतः सततं सिद्धः च्युतिहेतोरभावतः ।। (५५२)

अनन्तगुणसंपत्तेः असंख्येयः स उच्यते। (२४७)
एष एवामृतवपुः यद्वपुर्मृतिवर्जितम्।। (८१४)

अर्थोऽसावर्थ्यमानत्वात् पुरुषार्थस्वरूपतः। (४३०)
अनर्थोऽयं यतो लोके तेन प्रार्थ्यं न किञ्चन।। (४३१)

अमेयो विक्रमो यस्य प्रोच्यतेऽमितविक्रमः। (५१६)
अविज्ञाता यतो भिन्नो विज्ञातुः जीवशब्दितात्।। (४८२)

अक्षिणी यस्य पद्माभे सोऽरविन्दाक्ष ईर्यते। (३४७)
अनुकूलः स सर्वेषां स्थिति रक्षणतत्परः।। (३४२)

अहस्करस्वरूपत्वादेषोऽप्यहरितीर्यते। (९०)
अपां निधिर्यतस्तस्य स्याद्विभूतिर्हि सागरः।। (३२३)

अमृतांशूद्भवस्तस्मात् चन्द्रस्यापि समुत्थितेः। (२८३)
अमृत्युः स यतो मृत्योरपि मृत्युर्भवत्यसौ।। (१९८)

अमराणामशेषाणां प्रभुत्वादमरप्रभुः। (४९)
अक्षरो न क्षरत्येष सच्चिदानन्दलक्षणात्।। (१७)

अगाधत्वाद्गभीरत्वात् अंभोनिधिरिति स्मृतः। (५१७)
अशेषवस्तुरूपत्वात् अनन्तात्मेति विश्रुतः।। (५१८)

अज इत्युच्यते विष्णु र्विराड्रूपेण संस्थितेः। (२०४)
अनलः कीर्त्यते विष्णुः परंज्योतिःस्वरूपतः।। (२९३)

असदित्युच्यते तस्य नामरूपाद्यभावतः। (४७९)
अधः कृत्वाऽक्षजा वृत्तीः ज्ञेयस्तस्मादधोऽक्षजः।। (४१५)

अशोको नित्यमेवासौ नित्यानन्दस्वरूपतः। (३३६)
निजानन्द सुधापान निरतोऽमृतपः स्मृतः।। (५०४)

अनीशः खलु सर्वेषां ईशानोऽयमिति स्मृतेः। (६२६)
अशेषबन्धनिर्मुक्तो योऽनिरुद्धः स एवहि। (६३८)
अनवच्छिन्नशौर्यत्वात्प्रोच्यतेऽमितविक्रमः ॥ (६४१)

अनिर्विण्णः सदैवासौ नित्यतृप्तस्वभावतः। (४३५)
अनयोऽयं यतो नेता नास्ति लोकत्रयेऽपि च ॥ (४००)

अनन्तो योऽपरिच्छिन्नो देशकालान्यवस्तुभिः। (५२८)
अयमेवाविधेयात्मा स्वतन्त्रः सर्वथा सदा। (६२१)
अपराजित इत्युक्तो यस्य नास्ति पराजितिः ॥ (७१६)

अधिष्ठानं प्रपञ्चस्य मायाकल्पितवस्तुनः। (३२४)
अनन्तं यस्य चैश्वर्यं अनन्तश्रीः स एव हि ॥ (९३३)

अप्रमत्तो भवेद्यस्मात्प्रमादरहितः सदा। (३२५)
अशेषस्य लये मुक्तौ प्राप्यत्वादप्ययः सदा ॥ (९००)

अशेषाणां च भूतानां पुरा सिद्धोऽग्रजः स्मृतः। (८९१)
अयोनिजो यतो नास्य कर्माधीना जनिर्भवेत् ॥ (५७३)

अनिवर्ती निवर्तन्ते यं प्राप्य न कदाचन। (५९६)
अर्को भास्करमध्यस्थज्योतीरूपेण संस्थितेः ॥ (७९५)

अनिर्देश्य वपुर्यस्मान्निर्देशार्हं न तद्वपुः। (६५६)
अशेषैः पूज्यमानैश्च पूज्यमानोऽर्चितः खलु ॥ (६३४)

अर्चिष्मान्दीप्तिमानेष स्वयंज्योतिः स्वभावतः। (६३३)
रथी चास्य समो नैव तेनाप्रतिरथः स्मृतः ॥ (६३९)

अन्तो नास्त्यस्य रूपस्यानन्तरूपो भवत्यतः। (९३२)
अनिशं जयशीलोऽसौ तस्मात्प्रोक्तोऽपराजितः ॥ (८६२)

अनामयो यतो व्याधिराधिर्वाऽस्य न जायते। (६८९)
अनलोऽग्निसमानोऽयं तेजःपुञ्जस्वभावतः ॥ (७११)

अस्य क्षोभणकृन्नैव विद्यतेऽक्षोभ्य एव सः। (९९९)
अनेकमूर्तिरित्युक्तः सर्वास्तस्यैव मूर्तयः ॥ (७२१)

अमूर्तिमान्निगूढत्वान्मूर्तिमत्स्वखिलेष्वपि। (७२०)
अमृताशः स्वयं चाश्नत्प्राशयत्यमृतं सुरान्॥ (८१३)

अचलो व्याप्तरूपत्वात्कचित् चलनवर्जितः। (७४५)
अहंकारादिमानित्वरिक्तोऽमानीति कीर्त्यते॥ (७४७)

अधृतोऽन्येन केनापि स्वयं धत्तेऽखिलं जगत्। (८४२)
अणीयान्न यतः कश्चित्तस्मादणुरिति स्मृतः ॥ (८३५)

अनिलो वायुरूपेण चेष्टयत्यखिलं जगत्। (८१२)
अचिन्त्यरचनारूपजगत्स्रष्टाऽद्भुतः किल॥ (८९५)

अमूर्तिः स यतस्तस्य मूर्तिः काऽपि न विद्यते। (८३०)
अर्हः पूज्यतमैः सर्वैः पूज्यमानो निरन्तरम्॥ (८७३)

अभिप्रायः स सर्वेषां प्राणिनां मनसि स्थितः। (८७१)
अचिन्त्योऽयं यतश्चिन्ताविषयो न कदाचन॥ (८३२)

अनिर्विण्णः सदाऽऽनन्दी निर्वेदस्याप्रसक्तितः। (८९२)
अजन्यत्वात्सदासिद्धो ह्यनादिः स सनातनः ॥ (९४१)

अयं भोज्यस्वरूपेण स्थितत्वादन्नमुच्यते। (९८३)
अयं भोक्तृस्वरूपेण तिष्ठन्नन्नाद उच्यते॥ (९८४)

अनुत्पन्नस्वभावत्वादज इत्युच्यते बुधैः। (५२१)
अव्यक्तो नामरूपादिव्यञ्जकानामभावतः ॥ (७२२)

अक्रूरः क्रूरचेष्टानां हिंसादीनां विवर्जनात्। (९१५)
अमेयात्मा न मानार्हः आत्मा यस्य न केनचित्॥ (१७९)

अघस्पर्शविहीनत्वादनघः सर्वदाऽपि सः। (८३१)
अश्वत्थः प्रोच्यते देवोऽस्थिरलोकस्वरूपतः॥ (८२४)

अक्षोभ्यः क्षोभ्यमाणोऽपि न क्षुब्धो भवति कचित्। (९९९)
अरौद्रो रौद्रवृत्तीनां क्रोधादीनामभावतः॥ (९०६)

अन्यधातृविहीनत्वा दधातेति स कीर्त्यते। (९५१)
अन्तवत्सु स्थितोऽप्येष ह्यनन्तो नाशवर्जितः॥ (५३६)



## विष्णोः अकारादिः अष्टोत्तरशतनामावली

(विष्णुसहस्रनामावलीतः उद्धृता)

ओं अक्षराय नमः। अजाय। अच्युताय। अमोघाय। अनिरुद्धाय। अनिमिषाय। अग्रण्ये। अव्ययाय। अनादिनिधनाय। अमेयात्मने। असंमिताय। अनिलाय। अप्रमेयाय। अव्ययाय। अग्राह्याय। अमृताय। अव्यङ्गाय। अच्युताय। अतुलाय। अतीन्द्राय नमः॥ २०

ओं अतीन्द्रियाय नमः। अदृश्याय। अनिर्देश्यवपुषे। अन्तकाय। अनुत्तमाय। अनघाय। अमोघाय। अप्रमेयात्मने। अमिताशनाय। अहःसंवर्तकाय। अनन्तजिते। अभुवे। अजिताय। अच्युताय। असंख्येयाय। अमृतवपुषे। अर्थाय। अनर्थाय। अमितविक्रमाय। अविज्ञात्रे नमः॥ ४०

ओं अरविन्दाक्षाय नमः । अनुकूलाय । अह्ने । अपांनिधये । अमृतां शूद्भवाय । अमृत्यवे । अमरप्रभवे । अक्षराय । अंभोनिधये । अनन्तात्मने । अजाय । अनलाय । असते । अधोक्षजाय । अशोकाय । अमृतपाय । अनीशाय । अनिरुद्धाय । अमितविक्रमाय । अनिर्विण्णाय नमः ॥ ६०

ओं अनयाय नमः । अनन्ताय । अविधेयात्मने । अपराजिताय । अधिष्ठानाय । अनन्तश्रिये । अप्रमत्ताय । अप्ययाय । अग्रजाय । अयोनिजाय । अनिवर्तिने । अर्काय । अनिर्देश्यवपुषे । अर्चिताय । अर्चिष्मते । अप्रतिरथाय । अनन्तरूपाय । अपराजिताय । अनामयाय । अनलाय नमः ॥ ८०

ओं अक्षोभ्याय नमः । अनेकमूर्तये । अमूर्तिमते । अमृताशाय । अचलाय । अमानिने । अधृताय । अणवे । अनिलाय । अद्भुताय । अमूर्तये । अर्हाय । अभिप्रायाय । अचिन्त्याय । अनिर्विण्णाय । अनादये । अन्नाय । अन्नादाय । अजाय । अव्यक्ताय नमः ॥ १००

ओं अक्रूराय नमः । अमेयात्मने । अनघाय । अश्वत्थाय । अक्षोभ्याय । अरौद्राय । अधात्रे । अनन्ताय नमः ॥ १०८

# श्रीरामसहस्रनामस्तोत्रम्

## अनन्तसुतश्रीदिवाकरविरचितम्

प्रज्ञागोदावरी तीरेचेतः पर्णकुटीकृते ।
वैदेहीशक्तिसंयुक्तं तपस्यालक्ष्मणद्वयम् ।।

पञ्चेन्द्रियपञ्चवटीनिवासस्थं धनुर्धरम् ।
ध्यायाम्यात्मस्वरूपं तं राघवं भयनाशनम् ।।

वाल्मीकि-भरद्वाज-दिवाकराः ऋषयः, अनुष्टुप् छंदः, श्रीरामचन्द्रो देवता । प्रातर्ध्येयः सदाभद्रो भयभंजनकोविदः इति बीजम्, सूक्ष्मबुद्धिर्महातेजा अनासक्तः प्रियाहवः इति शक्तिः, वर्धिष्णु-र्विजयी प्राज्ञो रहस्यज्ञो विमर्शवित् इति कीलकम्, श्रीरामसहस्रनाम-स्तोत्रस्य जपे विनियोगः ।

कदाचित्पूर्णसंकल्पो वाल्मीकिकविरात्मवान् ।
ध्यायन् राममुपाविष्टः स्वाश्रमे शान्तचेतसा ।। १

अभिगम्य भरद्वाजस्तमुवाचादरेण भोः ।
श्रुतं दृष्टं च चरितं रामचन्द्रस्य पावनम् ।। २

ललितं विस्तरं सौम्यं कारुण्यमधुरं शुभम् ।
स्मृत्वा स्वानन्दभरितं हृदयं मे भवत्यहो ।। ३

तत्तथा प्राकृतैर्लोकैर्यथा साङ्गं न गीयते ।
कलौ स्वल्पात्मधैर्येभ्यो दुरापस्तं विशेषतः ।। ४

भवान्प्रातिभविद्यायां प्रवीणः परमार्थतः ।
तद्ब्रवीतु हि रामस्य संक्षेपेण महागुणान् ।। ५

किं नित्यं पठनीयं किं स्वल्पसारैर्जनैः श्रुतम् ।
भवेत्कल्याणकृल्लोके प्रेरणादायकं तथा ।। ६

तत् श्रुत्वा सादरं वाक्यं वाल्मीकिकविरब्रवीत् ।
शृणु नामानि रामस्य सहस्राणि यथाक्रमम् ।। ७

स्तोत्रमेतत्पठित्वा हि भक्तो ज्ञास्यति सर्वथा ।
राघवस्य गुणान् मुख्यान् ध्यात्वा शांतिं निगच्छति ।। ८

ओं । आर्यश्रेष्ठो धरापालः साकेतपुरपालकः ।
एकबाणो धर्मवेत्ता सत्यसन्धोऽपराजितः ।। १

इक्ष्वाकुकुलसंभूतो रघुनाथः सदाश्रयः ।
अघध्वंसी महापुण्यो मनस्वी मोहनाशनः ।। २

अप्रमेयो महाभागः सीतासौन्दर्यवर्धनः ।
अहल्योद्धारकः शास्ता कुलदीपः प्रभाकरः ।। ३

आपद्विनाशी गुह्यज्ञः सीताविरहव्याकुलः ।
अन्तर्ज्ञानी महाज्ञानी शुद्धसंज्ञोऽनुजप्रियः ।। ४

असाध्यसाधको भीमो मितभाषी विदां वरः ।
अवतीर्णः समुत्तारो दशस्यन्दनमानदः ।। ५

आत्मारामो विमानार्हो हर्षामर्षसुसङ्गतः ।
अभिगम्यो विशालात्मा विरामश्चिन्तनात्मकः ।। ६

अद्वितीयो महायोगी साधुचेताः प्रसादनः ।
उग्रश्रीरन्तकस्तेजस्तारणो भूरिसंग्रहः ।। ७

एकदारः सत्त्वनिधिः सन्निधिः स्मृतिरूपवान् ।
उत्तमालङ्कृतः कर्ता उपमारहितः कृती ।। ८

आजानुबाहुरक्षुब्धः क्षुब्धसागरदर्पहा।
आदित्यकुलसंतानो वंशोचितपराक्रमः ।। ९

अनुकूलः सतां सद्भिर्भावबद्धकरैः स्तुतः ।
उपदेष्टा नृपोत्कृष्टो भूजामाता खगप्रियः ।। १०

ओजोराशिर्निधिः साक्षात्क्षणदृष्टात्मचेतनः ।
उमापरीक्षितो मूकः संधिज्ञो रावणान्तकः ।। ११

अलौकिको लोकपालस्त्रैलोक्यव्याप्तवैभवः ।
अनुजाश्वासितः शिष्टो वरिष्ठश्चापधारिषु ।। १२

उद्यमी बुद्धिमान्गुप्तो युयुत्सुः सर्वदर्शनः ।
ऐक्ष्वाको लक्ष्मणप्राणो लक्ष्मीवान्भार्गवप्रियः ।। १३

इष्टदः सत्यदिदृक्षुर्दिग्जयी दक्षिणायनः ।
अनन्यवृत्तिरुद्योगी चन्द्रशेखरशान्तिदः ।। १४

अनुजार्थसमुत्कण्ठः सुरत्राणः सुराकृतिः ।
अश्वमेधी यशोवृद्धस्तरुणस्तारणेक्षणः ।। १५

अप्राकृतः प्रतिज्ञाता वरप्राप्तो वरप्रदः ।
अभूतपूर्वोऽद्भुतध्येयो रुद्रप्रेमी सुशीतलः ।। १६

अन्तःस्पृक् धनुःस्पृक्चैव भरतापृष्टकौशलः ।
आत्मसंस्थो मनःसंस्थः सत्त्वसंस्थो रणस्थितः ।। १७

ईर्ष्याहीनो महाशक्तिः सूर्यवंशी जनस्तुतः ।
आसनस्थो बांधवस्थः श्रद्धास्थानं गुणस्थितः ।। १८

इन्द्रमित्रोऽशुभहरो मायाविमृगघातकः ।
अमोघेषुः स्वभावज्ञो नामोच्चारणसंस्मृतः ।। १९

अरण्यरुदनाक्रान्तो बाष्पसंकुललोचनः ।
अमोघाशीर्वचोऽमन्दो विद्धद्वंद्यो वनेचरः ।। २०

इन्द्रादिदेवतातोषः संयमी व्रतधारकः ।
अन्तर्यामी विनष्टारिर्दम्भहीनो रविद्युतिः ।। २१

काकुत्स्थो गिरिगंभीरस्ताटकाप्राणकर्षणः ।
कन्दमूलान्नसन्तुष्टो दण्डकारण्यशोधनः ।। २२

कर्तव्यदक्षः स्नेहार्द्रः स्नेहकृत् कामसुन्दरः ।
कैकेयीलीनप्रवृत्तिर्निवृत्तिर्नामिकीर्तितः ।। २३

कबंधघ्नो भयत्राणो भरद्वाजकृतादरः ।
करुणः पुरुषश्रेष्ठः पुरुषः परमार्थवित् ।। २४

केवलः सुतसंगीताकर्षित ऋषिसङ्गतः ।
काव्यात्मा नयविन्मान्यो मुक्तात्मा गुरुविक्रमः ।। २५

क्रमज्ञः कर्मशास्त्रज्ञः संबंधज्ञः सुलक्षणः ।
किष्किन्धेशहिताकांक्षी लघुवाक्यविशारदः ।। २६

कपिश्रेष्ठसमायुक्तः प्राचीनो वल्कलावृतः ।
काकप्रेरितब्रह्मास्त्रः सप्ततालविभंजनः ।। २७

कपटज्ञः कपिप्रीतः कविस्फूर्तिप्रदायकः ।
किंवदन्तीद्विधावृत्तिर्निधाराद्रिर्विधिप्रियः ।। २८

कालमित्रः कालकर्ता कालदिग्दर्शितान्तवित् ।
क्रान्तदर्शी विनिष्क्रांतो नीतिशास्त्रपुरःसरः ।। २९

कुंडलालंकृतश्रोत्रो भ्रांतिहा भ्रमनाशकः ।
कमलायताक्षो नीरोगः सुबद्धांगो मृदुस्वनः ।। ३०

क्रव्यादघ्नो वदान्यात्मा संशयापन्नमानसः ।
कौसल्याक्रोडविश्रामः काकपक्षधरः शुभः ।। ३१

खलक्षयोऽखिलश्रेष्ठः पृथुख्यातिपुरस्कृतः ।
गुहकप्रेमभाग् देवो मानवेशो महीधरः ।। ३२

गूढात्मा जगदाधारः कलत्रविरहातुरः ।
गूढाचारो नरव्याघ्रो बुधो बुद्धिप्रचोदनः ।। ३३

गुणभृद्गुणसङ्घातः समाजोन्नतिकारणः ।
गृध्रहृद्गतसङ्कल्पो नलनीलाङ्गदप्रियः ।। ३४

गृहस्थो विपिनस्थायी मार्गस्थो मुनिसङ्गतः ।
गूढजत्रुर्वृषस्कंधो महोदारः शमास्पदः ।। ३५

चारवृत्तान्तसन्दिष्टो दुरवस्थासहः सखा ।
चतुर्दशसहस्रघ्नो नानाऽसुरनिषूदनः ।। ३६

चैत्रेयश्चित्रचरितः चमत्कारक्षमोऽलघुः ।
चतुरो बान्धवो भर्ता गुरुरात्मप्रबोधनः ।। ३७

जानकीकान्त आनन्दो वात्सल्यबहुलः पिता ।
जटायुसेवितः सौम्यो मुक्तिधाम परन्तपः ।। ३८

जनसङ्ग्रहकृत् सूक्ष्मश्चरणाश्रितकोमलः ।
जनकानन्दसङ्कल्पः सीतापरिणयोत्सुकः ।। ३९

तपस्वी दंडनाधारो देवासुरविलक्षणः ।
त्रिबन्धुर्विजयाकाङ्क्षी प्रतिज्ञापारगो महान् ।। ४०

त्वरितो द्वेषहीनेच्छः स्वस्थः स्वागततत्परः ।
जननीजनसौजन्यः परिवाराग्रणीर्गुरुः ।। ४१

तत्त्ववित्तत्त्वसन्देष्टा तत्त्वाचारी विचारवान्।
तीक्ष्णबाणश्चापपाणिः सीतापाणिग्रही युवा ।। ४२

तीक्ष्णाशुगः सरित्तीर्णो लङ्घितोच्चमहीधरः ।
देवतासङ्गतोऽसङ्गो रमणीयो दयामयः ।। ४३

दिव्यो देदीप्यमानाभो दारुणारिनिषूदनः ।
दुर्धर्षो दक्षिणो दक्षो दीक्षितोऽमोघवीर्यवान्।। ४४

दाता दूरगताख्यातिर्नियन्ता लोकसंश्रयः ।
दुष्कीर्तिशङ्कितो वीरो निष्पापो दिव्यदर्शनः ।। ४५

देहधारी ब्रह्मवेत्ता विजिगीषुर्गुणाकरः ।
दैत्यघाती बाणपाणिर्ब्रह्मास्त्राढ्यो गुणान्वितः ।। ४६

दिव्याभरणलिप्ताङ्गो दिव्यमाल्यसुपूजितः ।
दैवज्ञो देवताराध्यो देवकार्यसमुत्सुकः ।। ४७

दृढप्रतिज्ञो दीर्घायुर्दुष्टदण्डनपण्डितः ।
दंडकारण्यसंचारी चतुर्दिग्विजयी जयः ।। ४८

दिव्यजन्मा इन्द्रियेशः स्वल्पसन्तुष्टमानसः ।
देवसंपूजितो रम्यो दीनदुर्बलरक्षकः ।। ४९

दशास्यहननोऽदूरः स्थाणुसदृशनिश्चयः ।
दोषहा सेवकारामः सीतासन्तापनाशनः ।। ५०

दूषणघ्नः खरध्वंसी समग्रनृपनायकः ।
दुर्धरो दुर्लभो दीप्तो दुर्दिनाहतवैभवः ।। ५१

दीननाथो दिव्यरथः सज्जनात्ममनोरथः ।
दिलीपकुलसन्दीपो रघुवंशसुशोभनः ।। ५२

दीर्घबाहुर्दूरदर्शी विचारी विधिपण्डितः ।
धनुर्धरो धनी दान्तस्तापसो नियतात्मवान् ।। ५३

धर्मसेतुर्धर्ममार्गः सेतुबन्धनसाधनः ।
धर्मोद्धारो मनोरूपो मनोहारी महाधनः ।। ५४

ध्यातृध्येयात्मको मध्यो मोहलोभप्रतिक्रियः ।
धाममुक् पुरमुग् वक्ता देशत्यागी मुनिव्रती ।। ५५

ध्यानशक्तिर्ध्यानमूर्तिर्ध्यातृरूपो विधायकः ।
धर्माभिप्रायविज्ञानी दृढो दुःस्वप्ननाशनः ।। ५६

धुरन्धरो धराभर्ता प्रशस्तः पुण्यबान्धवः ।
नीलाभो निश्चलो राजा कौसल्येयो रघूत्तमः ।। ५७

नीलनीरजसङ्काशः कर्कशो विषकर्षणः ।
निरन्तरः समाराध्यः सेनाध्यक्षः सनातनः ।। ५८

निशाचरभयावर्तो वर्तमानस्त्रिकालवित् ।
नीतिज्ञो राजनीतिज्ञो धर्मनीतिज्ञ आत्मवान् ।। ५९

नायकः सायकोत्सारी विपक्षासुविकर्षणः ।
नौकागामी कुशेशायी तपोधामार्तरक्षणः ।। ६०

निःस्पृहः स्पृहणीयश्रीर्निजानन्दो वितन्द्रितः ।
नित्योपायो वनोपतो गुहकःश्रेयसां निधिः ।। ६१

निष्ठावान्निपुणो धुर्यो धृतिमानुत्तमस्वरः ।
नानाऋषिमखाहूतो यजमानो यशस्करः ।। ६२

मैथिलीदूषितार्तान्तःकरणो विबुधप्रियः ।
नित्यानित्यविवेकी सत्कार्यसज्जः सदुक्तिमान् ।। ६३

पुरुषार्थदर्शको वाग्मी हनुमत्सेवितः प्रभुः ।
प्रौढप्रभावो भावज्ञो भक्ताधीन ऋषिप्रियः ।। ६४

पावनो राजकार्यज्ञो वसिष्ठानन्दकारणः ।
पर्णगेही विगूढात्मा कूटज्ञः कमलेक्षणः ।। ६५

प्रियार्हः प्रियसङ्कल्पः प्रियामोदनपण्डितः ।
परदुःखार्तचेता दुर्व्यसनेऽचलनिश्चयः ।। ६६

प्रमाणः प्रेमसंवेद्यो मुनिमानसचिन्तनः ।
प्रीतिमान् ऋतवान् विद्वान् कीर्तिमान् युगधारणः ।। ६७

प्रेरकश्चन्द्रवच्चारुर्जागृतःसज्जकार्मुकः ।
पूज्यः पवित्रः सर्वात्मा पूजनीयः प्रियंवदः ।। ६८

प्राप्यः प्राप्तोऽनवद्यः स्वर्निलयो नीलविग्रही ।
परतत्त्वार्थसन्मूर्तिः सत्कृतः कृतविद्वरः ।। ६९

प्रसन्नः प्रयतः प्रीतः प्रियप्रायः प्रतीक्षितः ।
पापहा शक्रदत्तास्त्रः शक्रदत्तरथस्थितः ।। ७०

प्रातर्ध्येयः सदाभद्रो भयभंजनकोविदः ।
पुण्यस्मरणः सन्नद्धः पुण्यपुष्टिपरायणः ।। ७१

पुत्रयुग्मपरिस्पृष्टो विश्वासः शांतिवर्धनः ।
परिचर्यापरामर्शी भूमिजापतिरीश्वरः ।। ७२

पादुकादोऽनुजप्रेमी ऋजुनामाऽभयप्रदः ।
पुत्रधर्मविशेषज्ञः समर्थः सङ्गरप्रियः ।। ७३

पुष्पवर्षाविशुभ्रांगो जयवानमरस्तुतः ।
पुण्यश्लोकः प्रशांतार्चिश्चन्दनाङ्गविलेपनः ।। ७४

पौरानुरंजनः शुद्धः सुग्रीवकृतसङ्गतिः ।
पार्थिवः स्वार्थसन्यासी सुवृत्तः परचित्तवित् ।। ७५

पुष्पकारूढवैदेहीसंलापस्नेहवर्धनः ।
पितृमोदकरोऽरूक्षो नष्टराक्षसवल्गनः ।। ७६

प्रावृण्मेघसमोदारः शिशिरः शत्रुकालनः ।
पौरानुगमनोऽवध्यो वैरिविध्वंसनव्रती ।। ७७

पिनाकिमानसाह्लादो वालुकालिङ्गपूजकः ।
पुरस्थो विजनस्थायी हृदयस्थो गिरिस्थितः ।। ७८

पुण्यस्पर्शः सुखस्पर्शः पदसंस्पृष्टप्रस्तरः ।
प्रतिपन्नसमग्रश्रीः सत्प्रपन्नः प्रतापवान् ।। ७९

प्रणिपातप्रसन्नात्मा चन्दनाद्भुतशीतलः ।
पुण्यनामस्मृतो नित्यो मनुजो दिव्यतां गतः ।। ८०

बन्धच्छेदी वनच्छन्दः स्वच्छन्दश्छादनो ध्रुवः ।
बन्धुत्रयसमायुक्तो हृन्निधानो मनोमयः ।। ८१

विभीषणशरण्यः श्रीयुक्तः श्रीवर्धनः परः ।
बन्धुनिक्षिप्तराज्यस्वः सीतामोचनधोरणी ।। ८२

भव्यभालः समुन्नासः किरीटांकितमस्तकः ।
भवाब्धितरणो बोधो धनमानविलक्षणः ।। ८३

भूरिभृद्भव्यसङ्कल्पो भूतेशात्मा विबोधनः ।
भक्तचातकमेघार्द्रो मेधावी वर्धितश्रुतिः ।। ८४

भयनिष्कासनोऽजेयो निर्जराशाप्रपूरकः ।
भवसारो भावसारो भक्तसर्वस्वरक्षकः ।। ८५

भार्गवौजाः समुत्कर्षो रावणस्वसृमोहनः ।
भरतन्यस्तराज्यश्रीर्जानकीसुखसागरः ।। ८६

मिथिलेश्वरजामाता जानकीहृदयेश्वरः ।
मातृभक्तो ह्यनन्तश्रीः पितृसन्दिष्टकर्मकृत् ।। ८७

मर्यादापुरुषः शान्तः श्यामो नीरजलोचनः ।
मेघवर्णो विशालाक्षः शरवर्षाविभीषणः ।। ८८

मन्त्रविद्याधिजादिष्टो गौतमाश्रमपावनः ।
मधुरोऽमन्दगः सत्त्वः सात्त्विको मृदुलो बली ।। ८९

मन्दस्मितमुखोऽलुब्धो विश्रामः सुमनोहरः ।
मानवेन्द्रः सभासज्जो घनगंभीरगर्जनः ।। ९०

मैथिलीमोहनो मानी गर्वघ्नः पुण्यपोषणः ।
मधुजो मधुराकारो मधुवाङ्मधुराननः ।। ९१

महाकर्मा विराधघ्नो विघ्नशान्तिररिन्दमः ।
मर्मस्पर्शी नवोन्मेषः क्षत्रियः पुरुषोत्तमः ।। ९२

मारीचवंचितो भार्याप्रियकृत्प्रणयोत्कटः ।
महात्यागी रथारूढः पदगामी बहुश्रुतः ।। ९३

महावेगो महावीर्यो वीरो मातलिसारथिः ।
मखत्राता सदाचारी हरकार्मुकभंजनः ।। ९४

महाप्रयासः प्रामाण्यग्राही सर्वस्वदायकः ।
मुनिविघ्नान्तकः शस्त्री शापसंभ्रान्तलोचनः ।। ९५

मलहारी कलाविज्ञो मनोज्ञः परमार्थवित् ।
मिताहारी सहिष्णुर्भूपालकः परवीरहा ।। ९६

मातृस्नेही सुतस्नेही स्निग्धाङ्गः स्निग्धदर्शनः ।
मातृपितृपदस्पर्शी अश्मस्पर्शी मनोगतः ।। ९७

मृदुस्पर्शी इषुस्पर्शी सीतासंमितविग्रहः ।
मातृप्रमोदनो जप्यो वनप्रस्थः प्रगल्भधीः ।। ९८

यज्ञसंरक्षणः साक्षी आधारो वेदविन्नृपः ।
योजनाचतुरः स्वामी दीर्घान्वेषी सुबाहुहा ।। ९९

युगेन्द्रो भारतादर्शः सूक्ष्मदर्शी ऋजुस्वनः ।
यदृच्छालाभलघ्वाशी मन्त्ररश्मिप्रभाकरः ।। १००

यज्ञाहूतनृपवृन्दो ऋक्षवानरसेवितः ।
यज्ञदत्तो यज्ञकर्ता यज्ञवेत्ता यशोमयः ।। १०१

यतेन्द्रियो यती युक्तो राजयोगी हरप्रियः ।
राघवो रविवंशाढ्यो रामचन्द्रोऽरिमर्दनः ।। १०२

रुचिरश्चिरसंधेयः संघर्षज्ञो नरेश्वरः ।
रुचिरस्मितशोभाढ्यो दृढोरस्को महाभुजः ।। १०३

राज्यहीनः पुरत्यागी बाष्पसंकुललोचनः ।
ऋषिसंमानितः सीमापारीणो राजसत्तमः ।। १०४

रामो दाशरथिः श्रेयान् परमात्मसमो भुवि ।
लङ्केशक्षोभणो धन्यश्चेतोहारी स्वयंधनः ।। १०५

लावण्यखनिराख्यातः प्रमुखः क्षत्ररक्षणः ।
लङ्कापतिभयोद्रेकः सुपुत्रो विमलान्तरः ।। १०६

विवेकी कोमलः कान्तः क्षमावान् दुरितान्तकः ।
वनवासी सुखत्यागी सुखकृत्सुन्दरो वशी ।। १०७

विरागी गौरवो धीरः शूरो राक्षसघातकः ।
वर्धिष्णुर्विजयी प्राज्ञो रहस्यज्ञो विमर्शवित् ।। १०८

वाल्मीकिप्रतिभास्रोतः साधुकर्मा सतां गतिः ।
विनयी न्यायविज्ञाता प्रजारंजनधर्मवित् ।। १०९

विमलो मतिमान्नेता नेत्रानन्दप्रदायकः ।
विनीतो वृद्धसौजन्यो वृक्षभित् चेतसा ऋजुः ।। ११०

वत्सलो मित्रहृन्मोदः सुग्रीवहितकृद् विभुः ।
वालिनिर्दलनोऽसह्यो ऋक्षसाह्यो महामतिः ।। १११

वृक्षालिङ्गनलीलाविन्मुनिमोक्षपटुः सुधीः ।
वरेण्यः परमोद्योगो निग्रही चिरविग्रही ।। ११२

वासवोपमसामर्थ्यो ज्यासङ्घातोग्रनिःस्वनः ।
विश्वामित्रपरामृष्टः पूर्णो बलसमायुतः ।। ११३

वैदेहीप्राणसन्तोषः शरणागतवत्सलः ।
विनम्रः स्वाभिमानार्हः पर्णशालासमाश्रितः ।। ११४

वृत्तगण्डः शुभ्रदन्ती समभ्रूद्वयशोभितः ।
विकसत्पङ्कजाभास्यः प्रेमदृष्टिः सुलोचनः ।। ११५

वैष्णवो नरशार्दूलो भगवान्भक्तरक्षणः ।
वसिष्ठप्रियशिष्यश्चित्स्वरूपश्चेतनात्मकः ।। ११६

विविधापत्पराक्रान्तो वानरोत्कर्षकारणः ।
वीतरागी शर्मदायी मुनिमन्तव्यसाधनः ।। ११७

विरही हरसंकल्पो हर्षोत्फुल्लवराननः ।
वृत्तिज्ञो व्यवहारज्ञः क्षेमकारी पृथुप्रभः ।। ११८

विप्रप्रेमी वनक्रान्तः फलभुक् फलदायकः ।
विपन्मित्रं महामन्त्रः शक्तियुक्तो जटाधरः ॥ ११९

व्यायामव्यायताकारो विदां विश्रामसंभवः ।
वन्यमानवकल्याणः कुलाचारविचक्षणः ॥ १२०

विपक्षोरःप्रहारज्ञश्चापधारिबहूकृतः ।
विपल्लङ्घी घनश्यामो घोरकृद्राक्षसासहः ॥ १२१

वामाङ्काश्रयिणीसीतामुखदर्शनतत्परः ।
विविधाश्रमसंपूज्यः शरभङ्गकृतादरः ॥ १२२

विष्णुचापधरः क्षत्रो धनुर्धरशिरोमणिः ।
वनगामी पदत्यागी पादचारी व्रतस्थितः ॥ १२३

विजिताशो महावीरो दाक्षिण्यनवनिर्झरः ।
विष्णुतेजोंशसम्भूतः सत्यप्रेमी दृढव्रतः ॥ १२४ ॥

वानरारामदो नम्रो मृदुभाषी महामनाः ।
शत्रुहा विघ्नहन्ता सल्लोकसम्मानतत्परः ॥ १२५

शत्रुघ्नाग्रजनिः श्रीमान् सागरादरपूजकः ।
शोककर्ता शोकहर्ता शीलवान् हृदयङ्गमः ॥ १२६

शुभकृत् शुभसङ्कल्पः कृतान्तो दृढसङ्गरः ।
शोकहन्ता विशेषार्हः शेषसङ्गतजीवनः ॥ १२७

शत्रुजित्सर्वकल्याणो मोहजित्सर्वमङ्गलः ।
शंबूकवधकोऽभीष्टो युगधर्माग्रही यमः ॥ १२८

शक्तिमान् रणमेधावी श्रेष्ठः सामर्थ्यसंयुतः ।
शिवस्वः शिवचैतन्यः शिवात्मा शिवबोधनः ॥ १२९

शबरीभावनामुग्धः सर्वमार्दवसुन्दरः ।
शमी दमी समासीनः कर्मयोगी सुसाधकः ।। १३०

शाकभुक् क्षेपणास्त्रज्ञो न्यायरूपो नृणां वरः ।
शून्याश्रमः शून्यमनाः लतापादपपृच्छकः ।। १३१

शापोक्तिरहितोद्धारो निर्मलो नामपावनः ।
शुद्धान्तःकरणः प्रेष्ठो निष्कलङ्कोऽविकंपनः ।। १३२

श्रेयस्करः पृथुस्कन्धो बन्धनासिः सुरार्चितः ।
श्रद्धेयः शीलसंपन्नः सुजनः सज्जनान्तिकः ।। १३३

श्रमिकः श्रान्तवैदेहीविश्रामः श्रुतिपारगः ।
श्रद्धालुर्नीतिसिद्धान्ती सभ्यः सामान्यवत्सलः ।। १३४

सुमित्रासुतसेवार्थी भरतादिष्टवैभवः ।
साध्यः स्वाध्यायविज्ञेयः शब्दपालः परात्परः ।। १३५

संजीवनो जीवसखा धनुर्विद्याविशारदः ।
सूक्ष्मबुद्धिर्महातेजाः अनासक्तः प्रियावहः ।। १३६

सिद्धः सर्वाङ्गसंपूर्णः कारुण्यार्द्रपयोनिधिः ।
सुशीलः शिवचित्तज्ञः शिवध्येयः शिवास्पदः ।। १३७

समदर्शी धनुर्भङ्गी संशयोच्छेदनः शुचिः ।
सत्यवादी कार्यवाहश्चैतन्यः सुसमाहितः ।। १३८

सन्मित्रो वायुपुत्रेशो विभीषणकृतानतिः ।
सगुणः सर्वथाऽऽरामो निर्द्वंद्वः सत्यमास्थितः ।। १३९

सामकृद्दण्डविद्दण्डी कोदण्डी चण्डविक्रमः ।
साधुक्षेमो रणावेशी रणकर्ता दयार्णवः ।। १४०

सत्त्वमूर्तिः परंज्योतिः ज्येष्ठपुत्रो निरामयः ।
स्वकीयाभ्यन्तराविष्टोऽविकारी नभसंदृशः ॥ १४१

सरलः सारसर्वस्वः सतां सङ्कल्पसौरभः ।
सुरसङ्घसमुद्धर्ता चक्रवर्ती महीपतिः ॥ १४२

सुज्ञः स्वभावविज्ञानी तितिक्षुः शत्रुतापनः ।
समाधिस्थः शस्त्रसज्जः पित्राज्ञापालनप्रियः ॥ १४३

समकर्णः सुवाक्यज्ञो गन्धरेखितभालकः ।
स्कन्धस्थापिततूणीरो धनुर्धारणधोरणी ॥ १४४

सर्वसिद्धिसमावेशो वीरवेषो रिपुक्षयः ।
सङ्कल्पसाधकोऽक्लिष्टो घोरासुरविमर्दनः ॥ १४५

समुद्रपारगो जेता जितक्रोधो जनप्रियः ।
संस्कृतः सुषमः श्यामः समुत्क्रान्तः सदा शुचिः ॥ १४६

सद्धर्मप्रेरको धर्मो धर्मसंरक्षणोत्सुकः ।
भयनिष्कासने नः स संभवेत् पुनरात्मनि ॥ १४७

इति श्रीअनन्तसुत श्रीदिवाकरविरचितं
श्रीरामसहस्रनामस्तोत्रम् संपूर्णम् ॥



## श्रीरामसहस्रनामावलिः

ओं आर्यश्रेष्ठाय नमः । धरापालाय । साकेतपुरपालकाय । एकबाणाय । धर्मनेत्रे । सत्यसन्धाय । अपराजिताय । इक्ष्वाकुकुलसंभूताय । रघुनाथाय । सदाश्रयाय । अघध्वंसिने ।

महापुण्याय। मनस्विने। मोहनाशनाय। अप्रमेयाय। महाभागाय । सीतासौन्दर्यवर्धनाय। अहल्योद्धारकाय। शास्त्रे। कुलदीपाय नमः ।। २०

ओं प्रभाकराय नमः । आपद्विनाशिने । गुह्यज्ञाय । सीताविरहव्याकुलाय। अन्तर्ज्ञानिने। महाज्ञानिने। शुद्धसंज्ञाय। अनुजप्रियाय । असाध्यसाधकाय । भीमाय । मितभाषिणे । विदांवराय । अवतीर्णाय । समुत्ताराय । दशस्यन्दनमानदाय । आत्मारामाय। विमानार्हाय। हर्षामर्षसुसंगताय। अभिगम्याय। विशालात्मने नमः ।। ४०

ओं विरामाय नमः । चिन्तनात्मकाय । अद्वितीयाय । महायोगिने। साधुचेतसे। प्रसादनाय। उग्रश्रिये। अन्तकाय। तेजसे । तारणाय । भूरिसंग्रहाय । एकदाराय । सत्वनिधये । सन्निधये । स्मृतिरूपवते। उत्तमालंकृताय। कर्त्रे। उपमारहिताय। कृतिने। आजानबाहवे नमः ।। ६०

ओं अक्षुब्धाय नमः । क्षुब्धसागरदर्पघ्ने । आदित्युकलसन्तानाय । वंशोचितपराक्रमाय। सतामनुकूलाय। भावबद्धकरैः सद्भिः स्तुताय। उपदेष्ट्रे। नृपोत्कृष्टाय। भूजामात्रे। खगप्रियाय। ओजोराशये। निधये। साक्षात्क्षणदृष्टात्मचेतनाय। उमापरीक्षिताय । मूकाय । सन्धिज्ञाय । रावणान्तकाय । अलैकिकाय । लोकपालाय। त्रैलोक्यव्याप्तवैभवाय नमः ।। ८०

ओं अनुजाश्वासिताय नमः। शिष्टाय। चापधारिषु वरिष्ठाय। उद्यमिने। बुद्धिमते। गुप्ताय। युयुत्सवे। सर्वदर्शनाय। ऐक्ष्वाकाय। लक्ष्मणप्राणाय। लक्ष्मीवते। भार्गवप्रियाय। इष्टदाय। सत्यदिदृक्षवे ।

दिग्जयिने । दक्षिणायनाय । अनन्यवृत्तये । उद्योगिने । चन्द्रशेखरशान्तिदाय। अनुजार्थसमुत्कण्ठाय नमः ।। १००

ओं सुरत्राणाय नमः । सुराकृतये। अश्वमेधिने। यशोवृद्धाय। तरुणाय । तारणेक्षणाय । अप्राकृताय । प्रतिज्ञात्रे । वरप्राप्ताय । वरप्रदाय। अभूतपूर्वाय। अद्भुतध्येयाय। रुद्रप्रेमिणे। सुशीतलाय। अन्तःस्पृशे । धनुःस्पृशे । भरतापृष्टकौशलाय । आत्मसंस्थाय । मनःसंस्थाय। सत्वसंस्थाय नमः ।। १२०

ओं रणस्थिताय नमः । ईर्ष्याहीनाय । महाशक्तये । सूर्यवंशिने । जनस्तुताय । आसनस्थाय । बान्धवस्थाय । श्रद्धास्थानाय । गुणस्थिताय । इन्द्रमित्राय । अशुभहराय । मायाविमृगघातकाय । अमोघेषवे । स्वभावज्ञाय । नामोच्चारणसंस्मृताय । अरण्यरुदनाक्रान्ताय । बाष्पसङ्कुललोचनाय ।अमोघाशीर्वचसे। अमन्दाय। विद्वद्वन्द्याय नमः ।। १४०

ओं वनेचराय नमः । इन्द्रादिदेवतातोषाय । संयमिने । व्रतधारकाय। अन्तर्यामिणे। विनष्टारये। दंभहीनाय। रविद्युतये। काकुत्स्थाय । गिरिगंभीराय । ताटकाप्राणकर्षणाय । कन्दमूलान्नसन्तुष्टाय । दण्डकारण्यशोधनाय । कर्तव्यदक्षाय । स्नेहार्द्राय। स्नेहकृते। कामसुन्दराय। कैकयीलीनप्रवृत्तये। निवृत्तये । नामकीर्तिताय नमः ।। १६०

ओं कबन्धघ्नाय नमः । भयत्राणाय । भरद्वाजकृतादराय । करुणाय । पुरुषश्रेष्ठाय । पुरुषाय । परमार्थविदे । केवलाय । सुतसङ्गीताकर्षिताय । ऋषिसङ्गताय । काव्यात्मने । नयविदे ।

मान्याय। मुक्तात्मने। गुरुविक्रमाय। क्रमज्ञाय। कर्मशास्त्रज्ञाय। संबन्धज्ञाय। सुलक्षणाय। किष्किन्धेशहिताकांक्षिणे नमः ।। १८०

ओं लघुवाक्यविशारदाय नमः । कपिश्रेष्ठसमायुक्ताय। प्राचीनाय । वल्कलावृताय । काकप्रेरितब्रह्मास्त्राय । सप्ततालविभञ्जनाय । कपटज्ञाय । कपिप्रीताय । कविस्फूर्तिप्रदायकाय। किंवदन्तीद्विधावृत्तये। निधाराद्रये। विधिप्रियाय। कालमित्राय। कालकर्त्रे। कालदिग्दर्शितान्तविदे। क्रान्तदर्शिने । विनिष्क्रान्ताय । नीतिशास्त्रपुरःसराय । कुण्डलालंकृतश्रोत्राय। भ्रान्तिघ्ने नमः ।। २००

ओं भ्रमनाशकाय नमः । कमलायताक्षाय। नीरोगाय। सुबद्धांगाय । मृदुस्वनाय । क्रव्यादघ्नाय । वदान्यात्मने । संशयापन्नमानसाय। कौसल्याक्रोडविश्रामाय। काकपक्षधराय। शुभाय । खलक्षयाय । अखिलश्रेष्ठाय । पृथुख्यातिपुरस्कृताय । गुहकप्रेमभाजे । देवाय । मानवेशाय । महीधराय । गूढात्मने । जगदाधाराय नमः ।। २२०

ओं कलत्रविरहातुराय नमः । गूढाचाराय। नरव्याघ्राय। बुधाय । बुद्धिप्रचोदनाय । गुणभृते । गुणसंघाताय । समाजोन्नतिकारणाय। गृध्रहृद्गतसंकल्पाय। नलनीलांगदप्रियाय। गृहस्थाय विपिनस्थायिने। मार्गस्थाय। मुनिसङ्गताय। गूढजत्रवे। वृषस्कन्धाय। महोदाराय। शमास्पदाय। चारवृत्तान्तसन्दिष्टाय। दुरवस्थासहाय नमः ।। २४०

ओं सख्ये नमः । चतुर्दशसहस्रघ्नाय। नानासुरनिषुदनाय। चैत्रेयाय। चित्रचरिताय। चमत्कारक्षमाय। अलघवे। चतुराय।

बान्धवाय । भर्त्रे । गुरवे । आत्मप्रबोधनाय । जानकीकान्ताय । आनन्दाय । वात्सल्यबहुलाय । पित्रे । जटायुसेविताय । सौम्याय । मुक्तिधाम्ने । परन्तपाय नमः ।। २६०

ओं जनसङ्ग्रहकृते नमः । सूक्ष्माय । चरणाश्रितकोमलाय । जनकानन्दसङ्कल्पाय । सीतापरिणयोत्सुकाय । तपस्विने । दण्डनाधाराय । देवासुरविलक्षणाय । त्रिबन्धवे । विजयाकांक्षिणे । प्रतिज्ञापारगाय । महते । त्वरिताय । द्वेषहीनेच्छाय । स्वस्थाय । स्वागततत्पराय । जननीजनसौजन्याय । परिवाराग्रण्ये । गुरवे । तत्त्वविदे नमः ।। २८०

ओं तत्वसन्देष्ट्रे नमः । तत्वाचारिणे । विचारवते । तीक्ष्णबाणाय । चापपाणये । सीतापाणिग्रहिणे । यूने । तीक्ष्णाशुगाय । सरित्तीर्णाय । लंघितोच्चमहीधराय । देवतासङ्गताय । असङ्गाय । रमणीयाय । दयामयाय । दिव्याय । देदीप्यमानाभाय । दारुणारिनिषूदनाय । दुर्धर्षाय । दक्षिणाय । दक्षाय नमः ।। ३००

ओं दीक्षिताय नमः । अमोघवीर्यवते । दात्रे । दूरगताख्यातये । नियन्त्रे । लोकसंश्रयाय । दुष्कीर्तिशङ्किताय । वीराय । निष्पापाय । दिव्यदर्शनाय । देहधारिणे । ब्रह्मवेत्त्रे । विजिगीषवे । गुणाकराय । दैत्यघातिने । बाणपाणये । ब्रह्मास्त्राढ्याय । गुणान्विताय । दिव्याभरणलिप्ताङ्गाय । दिव्यमाल्यसुपूजिताय नमः ।। ३२०

ओं दैवज्ञाय नमः । देवताराध्याय । देवकार्यसमुत्सुकाय । दृढप्रतिज्ञाय । दीर्घायुषे । दुष्टदण्डनपण्डिताय । दण्डकारण्य सञ्चारिणे । चतुर्दिग्विजयिने । जयाय । दिव्यजन्मने । इन्द्रियेशाय ।

स्वल्पसन्तुष्टमानसाय । देवसंपूजिताय । रम्याय । दीनदुर्बल-रक्षकाय । दशास्यहननाय । अदूराय । स्थाणुसदृशनिश्चयाय । दोषघ्ने । सेवकारामाय नमः ।। ३४०

ओं सीतासन्तापनाशनाय नमः । दूषणघ्नाय । खरध्वंसिने । समग्रनृपनायकाय । दुर्धराय । दुर्लभाय । दीप्ताय । दुर्दिनाहत-वैभवाय । दीननाथाय । दिव्यरथाय । सज्जनात्ममनोरथाय । दिलीपकुलसन्दीपाय । रघुवंशसुशोभनाय । दीर्घबाहवे । दूरदर्शिने । विचाराय । विधिपण्डिताय । धनुर्धराय । धनिने । दान्ताय नमः ।। ३६०

ओं तापसाय नमः । नियतात्मवते । धर्मसेतवे । धर्ममार्गाय । सेतुबन्धनसाधनाय । धर्मोद्धाराय । मनोरूपाय । मनोहारिणे । महाधनाय । ध्यातृध्येयात्मकाय । मध्याय । मोहलोभप्रतिक्रियाय । धाममुचे । पुरमुचे । वक्त्रे । देशत्यागिने । मुनिव्रतिने । ध्यानशक्तये । ध्यानमूर्तये । ध्यातृरूपाय नमः ।। ३८०

ओं विधायकाय नमः । धर्माभिप्रायविज्ञानिने । दृढाय । दुःस्वप्ननाशनाय । धुरन्धराय । धराभर्त्रे । प्रशस्ताय । पुण्यबान्धवाय । नीलाभाय । निश्चलाय । राज्ञे । कौसल्येयाय । रघूत्तमाय । नीलनीरजसङ्काशाय । कर्कशाय । विषकर्षणाय । निरन्तराय । समाराध्याय । सेनाध्यक्षाय । सनातनाय नमः ।। ४००

ओं निशाचरभयावर्ताय नमः । वर्तमानाय । त्रिकालविदे । नीतिज्ञाय । राजनीतिज्ञाय । धर्मनीतिज्ञाय । आत्मवते । नायकाय । सायकोत्सारिणे । विपक्षासुनिकर्षणाय । नौकागामिने । कुशेशायिने । तपोधाम्ने । आर्तरक्षणाय । (तपोधामार्तरक्षणाय ।)

निःस्पृहाय । स्पृहणीयश्रिये । निजानन्दाय । वितन्द्रिताय । नित्योपायाय । वनोपेताय नमः ।। ४२०

ओं गुहकाय नमः । श्रेयसांनिधये । निष्ठावते । निपुणाय । धुर्याय । धृतिमते । उत्तमस्वराय । नानाऋषिमखाहूताय । यजमानाय । यशस्कराय । मैथिलीदूषितार्तान्तःकरणाय । विबुधप्रियाय । नित्यानित्यविवेकिने । सत्कार्यसज्जाय । सदुक्तिमते । पुरुषार्थदर्शकाय । वाग्मिने । हनुमत्सेविताय । प्रभवे । प्रौढप्रभावाय नमः ।। ४४०

ओं भावज्ञाय नमः । भक्ताधीनाय । ऋषिप्रियाय । पावनाय । राजकार्यज्ञाय । वसिष्ठानन्दकारणाय । पर्णगेहिने । विगूढात्मने । कूटज्ञाय । कमलेक्षणाय । प्रियार्हाय । प्रियसङ्कल्पाय । प्रियामोदन-पण्डिताय । परदुःखार्तचेतसे । दुर्व्यसनेऽचलनिश्चयाय । प्रमाणाय । प्रेमसंवेद्याय । मुनिमानसचिन्तनाय । प्रीतिमते । ऋतवते नमः ।। ४६०

ओं विदुषे नमः । कीर्तिमते । युगधारणाय । प्रेरकाय । चन्द्रवच्चारवे । जागृताय । सज्जकार्मुकाय । पूज्याय । पवित्राय । सर्वात्मने । पूजनीयाय । प्रियंवदाय । प्राप्याय । प्राप्ताय । अनवद्याय । स्वर्निलयाय । नीलविग्रहिणे । परतत्त्वार्थसन्मूर्तये । सत्कृताय । कृतविदे नमः ।। ४८०

ओं वराय नमः । प्रसन्नाय । प्रयताय । प्रीताय । प्रियप्रायाय । प्रतीक्षिताय । पापघ्ने । शक्रदत्तास्त्राय । शक्रदत्तरथस्थिताय । प्रातर्ध्येयाय । सदाभद्राय । भयभञ्जनकोविदाय । पुण्यस्मरणाय । सन्नद्धाय । पुण्यपुष्टिपरायणाय । पुत्रयुग्मपरिस्पृष्टाय । विश्वासाय । शान्तिवर्धनाय । परिचर्यापरामर्शिने । भूमिजापतये नमः ।। ५००

ओं ईश्वराय नमः । पादुकादाय । अनुजप्रेमिणे । ऋजुनाम्ने । अभयप्रदाय । पुत्रधर्मविशेषज्ञाय । समर्थाय । सङ्गरप्रियाय । पुष्पवर्षाविशुभ्राङ्गाय । जयवते । अमरस्तुताय । पुण्यश्लोकाय । प्रशान्तार्चिषे । चन्दनाङ्ग विलेपनाय । पौरानुरञ्जनाय । शुद्धाय । सुग्रीवकृतसंगतये । पार्थिवाय । स्वार्थसंन्यासिने । सुवृत्ताय नमः ।। ५२०

ओं परचित्तविदे नमः । पुष्पकारूढवैदेहीसंलापस्नेहवर्धनाय । पितृमोदकराय । अरूक्षाय । नष्टराक्षसवल्गनाय । प्रावृण्मेघ-समोदाराय । शिशिराय । शत्रुकालनाय । पौरानुगमनाय । अवध्याय । वैरिविध्वंसनव्रतिने । पिनाकि मानसाह्लादाय । वालु-कालिङ्गपूजकाय । पुरस्थाय । विजनस्थायिने । हृदयस्थाय । गिरिस्थिताय । पुण्यस्पर्शाय । सुखस्पर्शाय । पदसंसृष्टप्रस्तराय नमः ।। ५४०

ओं प्रतिपन्नसमग्रश्रिये नमः । सत्प्रपन्नाय । प्रतापवते । प्रणिपातप्रसन्नात्मने । चन्दनाद्भुतशीतलाय । पुण्यनामस्मृताय । नित्याय । मनुजाय । दिव्यतां गताय । बन्धच्छेदिने । वनच्छन्दाय । स्वच्छन्दाय । छादनाय । ध्रुवाय । बन्धुत्रयसमायुक्ताय । हृन्नि-धानाय । मनोमयाय । विभीषणशरण्याय । श्रीयुक्ताय । श्रीवर्धनाय नमः ।। ५६०

ओं पराय नमः । बन्धुनिक्षिप्तराज्यस्वाय । सीता-मोचनधोरण्ये । भव्यभालाय । समुल्लासाय । किरीटाङ्कित-मस्तकाय । भवाब्धितरणाय । बोधाय । धनमानविलक्षणाय । भूरि-भूते । भव्यसङ्कल्पाय । भूतेशात्मने । विबोधनाय । भक्तचातकमेघा-

द्राय । मेधाविने । वर्धितश्रुतये । भयनिष्कासनाय । अजेयाय । निर्जराशाप्रपूरकाय । भवसाराय नमः ।। ५८०

ओं भावसाराय नमः । भक्तसर्वस्वरक्षकाय । भार्गवौजसे । समुत्कर्षाय । रावणस्वसृमोहनाय । भरतन्यस्तराज्यश्रिये । जानकीसुखसागराय । मिथिलेश्वरजामात्रे । जानकीहृदयेश्वराय । मातृभक्ताय । अनन्तश्रिये । पितृसन्दिष्टकर्मकृते । मर्यादापुरुषाय । शान्ताय । श्यामाय । नीरजलोचनाय । मेघवर्णाय । विशालाक्षाय । शरवर्षाविभीषणाय । मन्त्रविदे नमः ।। ६००

ओं गाधिजादिष्टाय नमः । गौतमाश्रमपावनाय । मधुराय । अमन्दगाय । सत्वाय । सात्विकाय । मृदुलाय । बलिने । मन्दस्मितमुखाय । अलुब्धाय । विश्रामाय । सुमनोहराय । मानवेन्द्राय । सभासज्जाय । घनगंभीरगर्जनाय । मैथिलीमोहनाय । मानिने । गर्वघ्नाय । पुण्यपोषणाय । मधुजाय नमः ।। ६२०

ओं मधुराकाराय नमः । मधुवाचे । मधुराननाय । महाकर्मणे । विराधघ्नाय । विघ्नशान्तये । अरिन्दमाय । मर्मस्पर्शिने । नवोन्मेषाय । क्षत्रियाय । पुरुषोत्तमाय । मारीचवञ्चिताय । भार्याप्रियकृते । प्रणयोत्कटाय । महात्यागिने । रथारूढाय । पदगामिने । बहुश्रुताय । महावेगाय । महावीर्याय नमः ।। ६४०

ओं वीराय नमः । मातलिसारथये । मखत्रात्रे । सदाचारिणे । हरकार्मुकभञ्जनाय । महाप्रयासाय । प्रामाण्यग्राहिणे । सर्वस्व-दायकाय । मुनिविघ्नान्तकाय । शस्त्रिणे । शापसंभ्रान्तलोचनाय । मलहारिणे । कलाविज्ञाय । मनोज्ञाय । परमार्थविदे । मिताहारिणे । सहिष्णवे । भूपालकाय । परवीरघ्ने । मातृस्नेहिने नमः ।। ६६०

ओं सुतस्नेहिने नमः । स्निग्धाङ्गाय । स्निग्धदर्शनाय । मातृपितृपदस्पर्शिने । अम्भस्पर्शिने । मनोगताय । मृदुस्पर्शाय । इषुस्पर्शिने । सीतासंमितविग्रहाय । मातृप्रमोदनाय । जप्याय । वनप्रस्थाय । प्रगल्भधिये । यज्ञसंरक्षणाय । साक्षिणे । आधाराय । वेदविदे । नृपाय । योजनाचतुराय । स्वामिने नमः ।। ६८०

ओं दीर्घान्वेषिणे नमः । सुबाहुघ्ने । युगेन्द्राय । भारतादर्शाय । सूक्ष्मदर्शिने । ऋजुस्वनाय । यदृच्छालाभलब्धाशिने । मन्त्ररश्मिप्रभाकराय । यज्ञाहूतनृपबृन्दाय । ऋक्षवानरसेविताय । यज्ञदत्ताय । यज्ञकर्त्रे । यज्ञवेत्त्रे । यशोमयाय । यतेन्द्रियाय । यतिने । युक्ताय । राजयोगिने । हरप्रियाय । राघवाय नमः ।। ७००

ओं रविवंशाढ्याय नमः । रामचन्द्राय । अरिमर्दनाय । रुचिराय । चिरसन्धेयाय । संघर्षज्ञाय । नरेश्वराय । रुचिरस्मित-शोभाढ्याय । दृढोरस्काय । महाभुजाय । राज्यहीनाय । पुरत्यागिने । बाष्पसंकुललोचनाय । ऋषिसंमानिताय । सीमापारीणाय । राजसत्तमाय । रामाय । दाशरथये । श्रेयसे । भुवि परमात्मसमाय नमः ।। ७२०

ओं लंकेशक्षोभणाय नमः । धन्याय । चेतोहारिणे । स्वयंधनाय । लावण्यखनये । आख्याताय । प्रमुखाय । क्षत्र-रक्षणाय । लंकापतिभयोद्रेकाय । सुपुत्राय । विमलान्तराय । विवेकिने । कोमलाय । कान्ताय । क्षमावते । दुरितान्तकाय । वनवासिने । सुखत्यागिने । सुखकृते । सुन्दराय नमः ।। ७४०

ओं वशिने नमः । विरागिणे । गौरवाय । धीराय । शूराय । राक्षसघातकाय । वर्धिष्णवे । विजयिने । प्राज्ञाय । रहस्यज्ञाय । विमर्शविदे । वाल्मीकिप्रतिभास्रोतसे । साधुकर्मणे । सतां गतये ।

विनयिने। न्यायविज्ञात्रे। प्रजारञ्जनधर्मविदे। विमलाय। मतिमते । नेत्रे नमः ।। ७६०

ओं नेत्रानन्दप्रदायकाय नमः । विनीताय। वृद्धसौजन्याय। वृक्षभिदे। चेतसा ऋजवे। वत्सलाय। मित्रहृन्मोदाय। सुग्रीवहित-कृते । विभवे । वालिनिर्दलनाय । असह्याय । ऋक्षसाह्याय । महामतये । वृक्षालिङ्गनलीलाविदे । मुनिमोक्षपटवे । सुधिये । वरेण्याय । परमोदाराय। निग्रहिणे। चिरविग्रहिणे नमः ।। ७८०

ओं वासवोपमसामर्थ्याय । ज्यासंघातोग्रनिःस्वनाय । विश्वामित्रपरामृष्टाय । पूर्णाय । बलसमायुताय । वैदेहीप्राण-सन्तोषाय । शरणागतवत्सलाय। विनम्राय। स्वाभिमानार्हाय। पर्णशालासमाश्रिताय । वृत्तगण्डाय । शुभ्रदन्तिने । समभ्रूद्वय-शोभिताय । विकसत्पङ्कजाभास्याय । प्रेमदृष्टये । सुलोचनाय । वैष्णवाय। नरशार्दूलाय। भगवते। भक्तरक्षणाय नमः ।। ८००

ओं वसिष्ठप्रियशिष्याय नमः । चित्स्वरूपाय । चेतनात्मकाय । विविधापत्पराक्रान्ताय। वानरोत्कर्षकारणाय। वीतरागिणे । शर्मदायिने । मुनिमन्तव्यसाधनाय । विरहिणे । हरसङ्कल्पाय । हर्षोत्फुल्लवराननाय । वृत्तिज्ञाय । व्यवहारज्ञाय । क्षेमकारिणे। पृथुप्रभाय। विप्रप्रेमिणे। वनक्रान्ताय। फलभुजे। फलदायकाय। विपन्मित्राय नमः ।। ८२०

ओं महामन्त्राय नमः । शक्तियुक्ताय । जटाधराय । व्यायामव्यायताकाराय । विदां विश्रामसंभवाय । वन्यमानव-कल्याणाय । कुलाचारविचक्षणाय । विपक्षोरःप्रहारज्ञाय । चापधारिबहूकृताय । विपल्लंघिने । घनश्यामाय । घोरकृद्राक्ष-सासहाय । वामाङ्काश्रयिणीसीतामुखदर्शनतत्पराय। विविधाश्रम-

संपूज्याय । शरभङ्गकृतादराय । विष्णुचापधराय । क्षत्राय । धनुर्धरशिरोमणये । वनगामिने । पदत्यागिने नमः ।। ८४०

ओं पादचारिणे नमः । व्रतस्थिताय । विजिताशाय । महावीराय । दाक्षिण्यनवनिर्झराय । विष्णुतेजोंशसंभूताय । सत्यप्रेमिणे । दृढव्रताय । वानरारामदाय । नम्राय । मृदुभाषिणे । महामनसे । शत्रुघ्ने । विघ्नहन्त्रे । सल्लोकसंमानतत्पराय । शत्रुघ्नाग्रजनये । श्रीमते । सागरादरपूजकाय । शोककर्त्रे । शोकहर्त्रे नमः ।। ८६०

ओं शीलवते नमः । हृदयंगमाय । शुभकृते । शुभसङ्कल्पाय । कृतान्ताय । दृढसङ्गराय । शोकहन्त्रे । विशेषार्हाय । शेषसंगत-जीवनाय । शत्रुजिते । सर्वकल्याणाय । मोहजिते । सर्वमङ्गलाय । शंबूकवधकाय । अभीष्टाय । युगधर्माग्रहिणे । यमाय । शक्तिमते । रणमेधाविने । श्रेष्ठाय नमः ।। ८८०

ओं सामर्थ्यसंयुताय नमः । शिवस्वाय । शिवचैतन्याय । शिवात्मने । शिवबोधनाय । शबरीभावनामुग्धाय । सर्वमार्द-वसुन्दराय । शमिने । दमिने । समासीनाय । कर्मयोगिने । सुसाध-काय । शाकभुजे । क्षेपणास्त्रज्ञाय । न्यायरूपाय । नृणांवराय । शून्याश्रमाय । शून्यमनसे । लतापादपपृच्छकाय । शापोक्तिरहितोद्धाराय नमः ।। ९००

ओं निर्मलाय नमः । नामपावनाय । शुद्धान्तःकरणाय । प्रेष्ठाय । निष्कलङ्काय । अविकंपनाय । श्रेयस्कराय । पृथुस्कन्धाय । बन्धनासये । सुरार्चिताय । श्रद्धेयाय । शीलसंपन्नाय । सुजनाय । सज्जनान्तिकाय । श्रमिकाय । श्रान्तवैदेहीविश्रामाय । श्रुतिपारगाय । श्रद्धालवे । नीतिसिद्धान्तिने । सभ्याय नमः ।। ९२०

ओं सामान्यवत्सलाय नमः । सुमित्रासुतसेवार्थिने । भरतादिष्टवैभवाय । साध्याय । स्वाध्यायविज्ञेयाय । शब्दपालाय । परात्पराय । सञ्जीवनाय । जीवसख्ये । धनुर्विद्याविशारदाय । सूक्ष्मबुद्धये । महातेजसे । अनासक्ताय । प्रियावहाय । सिद्धाय । सर्वाङ्गसंपूर्णाय । कारुण्यार्द्रपयोनिधये । सुशीलाय । शिवचित्तज्ञाय । शिवध्येयाय नमः ।। ९४०

ओं शिवास्पदाय नमः । समदर्शिने । धनुर्भङ्गिने । संशयोच्छेदनाय । शुचये । सत्यवादिने । कार्यवाहाय । चैतन्याय । सुसमाहिताय । सन्मित्राय । वायुपुत्रेशाय । विभीषणकृतानतये । सगुणाय । सर्वथाऽऽरामाय । निर्द्वन्द्वाय । सत्यमास्थिताय । सामकृते । दण्डविदे । दण्डिने । कोदण्डिने नमः ।। ९६०

ओं चण्डविक्रमाय नमः । साधुक्षेमाय । रणावेशिने । रणकर्त्रे । दयार्णवाय । सत्त्वमूर्तये । परस्मैज्योतिषे । ज्येष्ठपुत्राय । निरामयाय । स्वकीयाभ्यन्तराविष्टाय । अविकारिणे । नभसंदृशाय । सरलाय । सारसर्वस्वाय । सतां संकल्पसौरभाय । सुरसंघसमुद्धर्त्रे । चक्रवर्तिने । महीपतये । सुज्ञाय । स्वभावविज्ञानिने नमः ।। ९८०

ओं तितिक्षवे नमः । शत्रुतापनाय । समाधिस्थाय । शस्त्रसज्जाय । पित्राज्ञापालनप्रियाय । समकर्णाय । सुवाक्यज्ञाय । गन्धरेखितभालकाय । स्कन्धस्थापिततूणीराय । धनुर्धारणधौरण्ये । सर्वसिद्धिसमावेशाय । वीरवेषाय । रिपुक्षयाय । संकल्पसाधकाय । अक्लिष्टाय । घोरासुरविमर्दनाय । समुद्रपारगाय । जेत्रे । जितक्रोधाय । जनप्रियाय नमः ।। १०००

ओं संस्कृताय नमः । सुषमाय । श्यामाय । समुत्क्रान्ताय । सदाशुचये । सद्धर्मप्रेरकाय । धर्माय । धर्मसंरक्षणोत्सुकाय नमः ।। १००८

# श्रीरामसहस्रनामावलिः

ओं अनादये नमः। अधिवासाय। अच्युताय। आधाराय। आत्मप्रचालकाय। आदये। आत्मभुजे। इच्छाचारिणे। इभबंधधारिणे। इडानाडीश्वराय। इंन्द्रियेशाय। ईश्वराय। ईतिविनाशकाय। उमाप्रियाय। उदारज्ञाय। उमोत्साहाय। उत्साहाय। उत्कंठाय। उद्यमप्रियाय। ऊनसत्वबलप्रदाय नमः। २०

ओं ऊधाब्धिदानकर्त्रे नमः। ऋणदुःखविमोचकाय। ऋणमुक्तिकराय। एकपत्नये। एकबाणधृषे। ऐंद्रजालिकाय। ऐश्वर्यभोक्त्रे। ऐश्वर्याय। ओषधिरसप्रदाय। ओंड्रपुष्पाभिलाषिणे। औत्तानपादिसुखप्रियाय। औदार्यगुणसंपन्नाय। औदराय। औषधाय। अंसिने। अंकूरपूरकाय। काकुत्स्थाय। कमलानाथाय। कोदंडिने। कामनाशनाय नमः। ४०

ओं कार्मुकिने। काननस्थाय। कौसल्यानंदवर्धनाय। कोदंडभंजनाय। काकध्वंसिने। कार्मुकभंजनाय। कामारिपूजकाय। कर्त्रे। कर्बूरकुलनाशनाय। कबंधारये। क्रतुत्रात्रे। कौशिकाह्लादकारकाय। काकपक्षधराय। कृष्णाय। कृष्णोत्पलदलप्रभाय। कंजनेत्राय। कृपामूर्तये। कुंभकर्णविदारणाय। कपिमित्राय। कपित्रात्रे नमः॥ ६०

ओं कपिकालाय नमः। कपीश्वराय। कृतसत्याय। कलाभोगिने। कलानाथमुखच्छवये। काननिने। कामिनीसंगिने। कुशताताय। कुशासनाय। कैकेयीयशःसंहर्त्रे। कृपासिंधवे। कृपामयाय। कुमाराय। कुकुरत्रात्रे। करुणामयविग्रहाय। कारुण्याय। कुमुदानंदाय। कौसल्यागर्भसेवनाय। कंदर्पनिंदितांगाय। कोटिचंद्रनिभाननाय नमः॥ ८०

ओं कमलापूजिताय नमः । कामाय । कमलापरिसेविताय । कौसल्येयाय । कृपाधात्रे । कल्पद्रुमनिषेविताय । खड्गहस्ताय । खरध्वंसिने । खरसैन्यविदारणाय । खरपुत्रप्राणहर्त्रे । खंडितासुरजीवनाय । खलांतकाय । खस्थवराय । खंडितेशधनुषे । खेदिने । खेदहराय । खेददायकाय । खेदवारणाय । खेदघ्ने । खरघ्ने नमः ।। १००

ओं खड्गीक्षिप्रप्रसाददायकाय नमः । खेलत्खंजननेत्राय । खेलत्सरसिजाननाय । खगचंचुसुनासाय । खंजनेशसुलोचनाय । खंजरीटपतये । खंजरीटविर्चंचलाय । गुणाकराय । गुणानंदाय । गंजितेशधनुषे । गुणसिंधवे । गयावासिने । गयाक्षेत्रप्रकाशकाय । गुहमित्राय । गुहत्रात्रे । गुहपूज्याय । गुहेश्वराय । गुरुगौरवकर्त्रे । गुरुगौरवरक्षकाय । गुणिने नमः । १२०

ओं गुणप्रियाय नमः । गीताय । गर्गाश्रमनिषेवकाय । गवेशाय । गवयत्रात्रे । गवाक्षामोददायकाय । गंधमादनपूज्याय । गंधमादनसेविताय । गौरभार्याय । गुरुत्रात्रे । गुरुयज्ञाधिपालकाय । गोदावरीतीरवासिने । गंगास्नायिने । गणाधिपाय । गरुत्मद्रथिने । गुर्विणे । गुणात्मने । गुणेश्वराय । गरुडिने । गंडकीवासिने नमः ।। १४०

ओं गंडकीतीरच्चारणाय नमः । गर्भवासनियंत्रे । गुरुसेवा-परायणाय । गीष्पतिस्तूयमानाय । गीर्वाणत्राणकारकाय । गौरीश-पूजकाय । गौरीहृदयानंदवर्धनाय । गीतप्रियाय । गीतरताय । गीर्वाणवंदिताय । घनश्यामाय । घनानंदाय । घोरराक्षसघातकाय । घनविघ्नविनाशाय । घननादविनाशकाय । घनानंदाय । घनानादिने । घनगर्जिनिवारणाय । घोरकाननवासिने । घोरशस्त्रविनाशकाय नमः ।। १६०

ओं घोरबाणधराय। घोराय। घोरधन्वने। घोरपराक्रमाय। घर्मबिंदुमुखश्रीमते। घर्मबिंदुविभूषिताय। घोरमारीचहंत्रे। घोरवीरविघातकाय। चंद्रवक्त्राय। चंचलाक्षाय। चंद्रमूर्तये। चतुष्कलाय। चन्द्रकांतये। चकोराक्षाय। चकोरीनयनप्रियाय। चंडबाणाय। चंडधन्वने। चकोरीप्रियदर्शनाय। चतुराय। चातुरीयुक्ताय नमः। १८०

ओं चातुरीचित्तचारकाय नमः। चलत्खड्गाय। चलद्बाणाय। चतुरंगबलान्विताय। चारुनेत्राय। चारुवक्त्राय। चारुहासाय। चारुप्रियाय। चिंतामणिविभूषांगाय। चिंतामणि-मनोरथिने। चिंतामणिमणिप्रियाय। चित्तहर्त्रे। चित्तरूपिणे। चलच्चित्ताय। चितांचिताय। चराचरभयत्रात्रे। चराचरमनोहराय। चतुर्वेदमयाय। चिंत्याय। चिन्तादूराय नमः।। २००

ओं चिंतासागरवारणाय नमः। चंडकोदंडधारिणे। चंडकोदंडखंडनाय। चंडप्रतापयुक्ताय। चंडेषवे। चंडविक्रमाय। चतुर्विक्रमयुक्ताय। चतुरंगबलापहाय। चतुराननपूज्याय। चतुःसागरशासित्रे। चमूनाथाय। चमूभर्त्रे। चमूपूज्याय। चमूयुताय। चमूहर्त्रे। चमूभंजिने। चमूतेजोविनाशकाय। चामरिणे। चारुचरणाय। चरणारुणशोभनाय नमः।। २२०

ओं चर्मिणे नमः। चर्मप्रियाय। चारुमृगचर्मविभूषिताय। चिद्रूपिणे। चिदानंदाय। चित्स्वरूपिणे। चराचराय। छत्ररूपिणे। छत्रसंगिने। छात्रगणविभूषिताय। छात्राय। छत्रप्रियाय। छत्रिणे। छत्रमोहार्तपालकाय। छत्रचामरयुक्ताय। छत्रचामरमंडिताय। छत्रचामरहर्त्रे। छत्रचामरदायकाय। छत्रधारिणे। छत्रहर्त्रे नमः।। २४०

ओं छत्रत्यागिने नमः। छत्रदाय। छत्ररूपिणे। छलत्यागिने । छलात्मने । छलनिग्रहाय । छिद्रहर्त्रे । छिद्ररूपिणे । छिद्रौघविनिषूदनाय । छिन्नशत्रवे । छिन्नरोगाय । छिन्नधन्वने । छलापहाय । छिन्नच्छत्रप्रदाय । छेदकारिणे । छलापघ्ने । जानकीशाय । जितामित्राय । जानकीहृदयप्रियाय । जानकीपालकाय नमः ।। २६०

ओं जेत्रे नमः। जितशत्रवे। जितासुराय। जानक्युद्धारकाय। जिष्णवे । जितसिंधवे । जयप्रदाय । जानकीजीवनानंदाय । जानकीप्राणवल्लभाय। जानकीप्राणभर्त्रे। जानकीदृष्टिमोहनाय। जानकीचित्तहर्त्रे । जानकीदुःखभंजनाय । जयदाय । जयकर्त्रे । जगदीशाय। जनार्दनाय। जनप्रियाय। जनानंदाय। जनपालाय नमः ।। २८०

ओं जनोत्सुकाय नमः । जितेन्द्रियाय । जितक्रोधाय । जीवेशाय । जीवनप्रियाय । जटायुमोक्षदाय । जीवत्रात्रे । जीवनदायकाय। जयंतारये। जानकीशाय। जनकोत्सवदायकाय। जगत्त्रात्रे । जगत्पात्रे । जगत्कर्त्रे । जगत्पतये । जाड्यघ्ने । जाड्यहर्त्रे । जाड्येंधनहुताशनाय। जगन्मूर्तये। जगत्कर्त्रे नमः ।। ३००

ओं जगतांपापनाशनाय नमः। जगच्चिंत्याय। जगद्वंद्याय। जगज्जेत्रे। जगत्प्रभवे। जनकारिविहर्त्रे। जगज्जाड्यविनाशकाय। जटिने। जटिलरूपाय। जटाधारिणे। जटावहाय। झर्झरप्रियवाद्याय । झंझावातनिवारकाय । झंझारवस्वनाय । झांताय । झार्णाय । झार्णविभूषिताय। टंकारये। टंकदात्रे। टीकादृष्टिस्वरूपधृषे नमः।। ३२०

ओं ठकारवर्णनियमाय नमः । डमरुध्वनिकारकाय । ढक्कावाद्यप्रियाय । ढार्णाय । ढक्कावाद्यमहोत्सुकाय । तीर्थसेविने । तीर्थवासिने । तरवे । तीर्थतीरनिवासकाय । तालभेत्त्रे । तालघातिने । तपोनिष्ठाय । तपःप्रभवे । तापसाश्रमसेविने । तपोधनसमाश्रयाय । तपोवनस्थिताय । तपसे । तापसपूजिताय । तन्वीभार्याय । तनूकर्त्रे नमः ।। ३४०

ओं त्रैलोक्यवशकारकाय नमः । त्रिलोकीशाय । त्रिगुणकाय । त्रिगुण्याय । त्रिदिवेश्वराय । त्रिदिवेशाय । त्रिसर्गेशाय । त्रिमूर्तये । त्रिगुणात्मकाय । तंत्ररूपाय । तंत्रविज्ञाय । तंत्रविज्ञानदायकाय । तारेशवदनोद्योतिने । तारेशमुखमंडलाय । त्रिविक्रमाय । त्रिपादूर्ध्वाय । त्रिस्वराय । त्रिप्रवाहकाय । त्रिपुरारिकृतभक्तये । त्रिपुरारिप्रपूजिताय नमः ।। ३६०

ओं त्रिपुरेशाय नमः । त्रिसर्गाय । त्रिविधाय । त्रितनवे । तूणिने । तूणीरयुक्ताय । तूणबाणधराय । ताटकावधकर्त्रे । ताटकाप्राणघातकाय । ताटकाभयकर्त्रे । ताटकादर्पनाशकाय । थकारवर्णनियमाय । थकारप्रियदर्शनाय । दीनबंधवे । दयासिंधवे । दारिद्र्यापद्विनाशकाय । दयामयाय । दयामूर्तये । दयासागराय । दिव्यमूर्तये नमः ।। ३८०

ओं दीर्घबाहवे नमः । दीर्घनेत्राय । दुरासदाय । दुराधर्षाय । दुराराध्याय । दुर्मदाय । दुर्गनाशनाय । दैत्यारये । दनुजेंद्रारये । दानवेंद्रविनाशनाय । दूर्वादलश्याममूर्तये । दूर्वादलघनच्छवये । दूरदर्शिने । दीर्घदर्शिने । दुष्टारिबलहारकाय । दशग्रीववधाकांक्षिणे । दशकंधरनाशकाय । दूर्वादलश्यामकांतये । दूर्वादलसमप्रभाय । दात्रे नमः ।। ४००

ओं दानपराय नमः । दिव्याय । दिव्यसिंहासनस्थिताय । दिव्यदोलासमासीनाय । दिव्यचामरमंडिताय । दिव्यच्छत्रसमायुक्ताय । दिव्यालंकारमंडिताय । दिव्यांगनाप्रमोदाय । दिलीपान्वयसंभवाय । दूषणारये । दिव्यरूपिणे । देवाय । दशरथात्मजाय । दिव्यदाय । दधिभुजे । दात्रे । दुःखसागरभंजनाय । दंडिने । दंडधराय । दांताय नमः ।। ४२०

ओं दंतुराय नमः । दनुजापहाय । धैर्याय । धीराय । धरानाथाय । धनेशाय । धरणीपतये । धन्विने । धनुष्मते । धे(धा)नुष्काय । धनुर्भक्त्रे । धनाधिपाय । धार्मिकाय । धर्मशीलाय । धर्मिष्ठाय । धर्मपालकाय । धर्मपात्रे । धर्मयुक्ताय । धर्मनिंदकवर्जकाय । धर्मात्मने नमः ।। ४४०

ओं धरणीत्यागिने । धर्मयूपाय । धनार्थदाय । धर्मारण्यकृतावासाय । धर्मारण्यनिषेवकाय । धरोद्धर्त्रे । धरावासिने । धैर्यवते । धरणीधराय । नारायणाय । नराय । नेत्रे । नंदिकेश्वरपूजिताय । नायकाय । नृपतये । नेत्रे । नेयाय । नटाय । नरपतये । नरेशाय नमः ।। ४६०

ओं नगरत्यागिने नमः । नंदिग्रामकृताश्रयाय । नवीनेंदुकलाकांतये । नौपतये । नृपतेःपतये । नीलेशाय । नीलसंतापिने । नीलदेहाय । नलेश्वराय । नीलांगाय । नीलमेघाभाय । नीलांजनसमद्युतये । नीलोत्पलदलप्रख्याय । नीलोत्पलदलेक्षणाय । नवीनकेतकीकुंदाय । मालावृंदविराजिताय । नारीशाय । नागरीप्राणाय । नीलबाहवे । नदिने नमः ।। ४८०

ओं नदाय नमः । निद्रात्यागिने । निद्रिताय । निद्रालवे । नदबंधकाय । नादाय । नादस्वरूपाय । नादात्मने । नादमंडिताय ।

पूर्णानंदाय। परब्रह्मणे। परस्मैतेजसे। परात्पराय। परस्मैधाम्ने। परस्मैमूर्तये। परहंसाय। परावराय। पूर्णाय। पूर्णोदराय। पूर्वाय नमः ॥ ५००

ओं पूर्णारिविनिषूदनाय नमः। प्रकाशाय। प्रकटाय। प्राप्याय। पद्मनेत्राय। परात्पराय। पूर्णब्रह्मणे। पूर्णमूर्तये। पूर्णतेजसे। परस्मैवपुषे। पद्मबाहवे। पद्मवक्त्राय। पंचाननप्रपूजिताय। प्रपंचाय। पंचपूताय। पंचाम्नायाय। परप्रभवे। पराय। पद्मेशाय। पद्मकोशाय नमः ॥ ५२०

ओं पद्माक्षाय नमः। पद्मलोचनाय। पद्मापतये। पुराणाय। पुराणपुरुषाय। प्रभवे। पयोधिशयनाय। पालाय। पालकाय। पृथिवीपतये। पवनात्मजवंद्याय। पवनात्मजसेविताय। पंचप्राणाय। पंचवायवे। पंचांगाय। पंचसायकाय। पंचबाणाय। पूरकाय। प्रपंचनाशकाय। प्रियाय नमः ॥ ५४०

ओं पातालाय नमः। प्रमथाय। प्रौढाय। पाशिने। प्रार्थ्याय। प्रियंवदाय। प्रियंकराय। पंडितात्मने। पापघ्ने। पापनाशनाय। पांड्येशाय। पूर्णशीलाय। पद्मिने। पद्मसमर्चिताय। फणीशाय। फणिशायिने। फणिपूज्याय। फणान्विताय। फलमूलप्रभोक्त्रे। फलदात्रे नमः ॥ ५६०

ओं फलेश्वराय नमः। फणिरूपाय। फणिभर्त्रे। फणिभुग्वाहनाय। फल्गुतीर्थसदास्नायिने। फल्गुतीर्थप्रकाशकाय। फलाशिने। फलदाय। फुल्लाय। फलकाय। फलभक्षकाय। बुधाय। बौद्धप्रियाय। बुद्धाय। बुद्धाचारनिवारकाय। बहुदाय। बलदाय। ब्रह्मणे। ब्रह्मण्याय। ब्रह्मदायकाय नमः ॥ ५८०

ओं भरतेशाय नमः । भारतीशाय । भरद्वाजप्रपूजिताय । भर्त्रे । भगवते । भोक्त्रे । भीतिघ्ने । भयनाशनाय । भवाय । भीतिहराय । भव्याय । भूपतये । भूपवंदिताय । भूपालाय । भवनाय । भोगिने । भावनाय । भुवनप्रियाय । भारताराय । भारहर्त्रे नमः ।। ६००

ओं भारभृते नमः । भरताग्रजाय । भूभुजे । भुवनभर्त्रे । भूनाथाय । भूतिसुंदराय । भेद्याय । भेदकराय । भेत्त्रे । भूतासुरविनाशनाय । भूमिदाय । भूमिहर्त्रे । भूमिदात्रे । भूमिपाय । भूतेशाय । भूतनाशाय । भूतेशपरिपूजिताय । भूधराय । भूधराधीशाय । भूधरात्मने नमः ।। ६२०

ओं भयापहाय नमः । भयदाय । भयदात्रे । भयहर्त्रे । भयावहाय । भक्षाय । भक्ष्याय । भवानंदाय । भवमूर्तये । भवोदयाय । भवाब्धये । भारतीनाथाय । भरताय । भूमये । भूधराय । मारीचारये । मरुत्त्रात्रे । माधवाय । मधुसूदनाय । मंदोदरीस्तूयमानाय नमः ।। ६४०

ओं मधुगद्गदभाषणाय नमः । मंदाय । मंदरारये । मंत्रिणे । मंगलाय । मतिदायकाय । मायिने । मारीचहंत्रे । मदनाय । मातृपालकाय । महामायाय । महाकायाय । महातेजसे । महाबलाय । महाबुद्धये । महाशक्तये । महादर्पाय । महायशसे । महात्मने । माननीयाय नमः ।। ६६०

ओं मूर्ताय नमः । मरकतच्छवये । मुरारये । मकराक्षारये । मत्तमातंगविक्रमाय । मधुकैटभहंत्रे । मातंगवनसेविताय । मदनारिप्रभवे । मत्ताय । मार्तंडवंशभूषणाय । मदाय । मदविनाशिने । मर्दनाय । मुनिपूजकाय । मुक्तिदाय । मरकताभाय । महिम्ने । मननाश्रयाय । मर्मज्ञाय । मर्मघातिने नमः ।। ६८०

ओं मंदारकुसुमप्रियाय नमः । मंदरस्थाय । मुहूर्तात्मने । मंगलाय। मंगलालकाय। मिहिराय। मंडलेशाय। मन्यवे। मन्याय। महोदधये। मारुताय। मारुतेयाय। मारुतीशाय। मरुते। यशस्याय । यशोराशये। यादवाय। यदुनंदनाय। यशोदाहृदयानंदाय। यशोदात्रे नमः ।। ७००

ओं यशोहराय नमः । युद्धतेजसे । युद्धकर्त्रे । योधाय । युद्धस्वरूपकाय । योगाय । योगीश्वराय । योगिने । योगेंद्राय । योगपावनाय । योगात्मने । योगकर्त्रे । योगभृते । योगदायकाय । योधाय। योधगणासंगिने। योगकृते। योगभूषणाय। यूने। युवतीभर्त्रे नमः ।। ७२०

ओं युवभ्रात्रे नमः । युवाजकाय । रामभद्राय । रामचंद्राय । राघवाय। रघुनंदनाय। रामाय। रावणहंत्रे। रावणारये। रमापतये। रजनीचरहंत्रे । राक्षसीप्राणहारकाय । रक्ताक्षाय । रक्तपद्माक्षाय । रमणाय । राक्षसांतकाय । राघवेंद्राय । रमाभर्त्रे । रमेशाय । रक्तलोचनाय नमः ।। ७४०

ओं रणरामाय नमः । रणासक्ताय । रणाय । रक्ताय । रणात्मकाय। रंगस्थाय। रंगभूमिस्थाय। रंगशायिने। रणार्गलाय। रेवास्नायिने । रमानाथाय । रणदर्पविनाशनाय । राजराजेश्वराय । राज्ञे । राजमंडलमंडिताय । राज्यदाय । राज्यहर्त्रे । रमणीप्राण-वल्लभाय । राज्यत्यागिने। राज्यभोगिने नमः ।। ७६०

ओं रसिकाय नमः । रघूद्वहाय । राजेंद्राय । रघुनाथाय । रक्षोघ्ने । रावणांतकाय। लक्ष्मीकांताय। लक्ष्मीनाथाय। लक्ष्मी-शाय । लक्ष्मणाग्रजाय। लक्ष्मणत्राणकर्त्रे। लक्ष्मणप्रतिपालकाय। लीलावताराय । लंकारये । लंकेशाय । लक्ष्मणेश्वराय । लक्ष्मण-प्राणदाय । लक्ष्मणप्रतिपालकाय। लंकेशघातकाय। लंकेशप्राण-हारकाय नमः ।। ७८०

ओं लंकानाथवीर्यहर्त्रे नमः। लाक्षारसविलोचनाय। लवंग-कुसुमासक्ताय। लवंगकुसुमप्रियाय। ललनापालनाय। लक्षाय। लिंगरूपिणे। लसत्तनवे। लावण्यरामाय। लावण्याय। लक्ष्मी-नारायणात्मकाय। लवणांबुधिबंधाय। लवणांबुधिसेतुकृते। लीला-मयाय। लवणजिते। लीलाय। लवणजित्प्रियाय। वसुधापालकाय। विष्णवे। विदुषे नमः ॥ ८००

ओं विद्वज्जनप्रियाय नमः। वसुधेशाय। वासुकीशाय। वरिष्ठाय। वरवाहनाय। वेदाय। विशिष्टाय। वक्त्रे। वदान्याय। वरदाय। विभवे। विधये। विधात्रे। वासिष्ठाय। वसिष्ठाय। वसुपालकाय। वसवे। वसुमतीभर्त्रे। वसुमते। वसुदायकाय नमः ॥ ८२०

ओं वार्ताधारिणे नमः। वनस्थाय। वनवासिने। वनाश्रयाय। विश्वभर्त्रे। विश्वपात्रे। विश्वनाथाय। विभावसवे। विभवे। विभज्यमानाय। विभक्ताय। वधबंधनाय। विविक्ताय। वरदाय। वंद्याय। विरक्ताय। वीरदर्पघ्ने। वीराय। वीरगुरवे। वीरदर्पध्वंसिने नमः ॥ ८४०

ओं विशांपतये नमः। वानरारये। वानरात्मने। वीराय। वानरपालकाय। वाहनाय। वाहनस्थाय। वनाशिने। विश्वकारकाय। वरेण्याय। वरदात्रे। वरदाय। वरवंचकाय। वसुदाय। वासुदेवाय। वसवे। वंदनाय। विद्याधराय। विद्याविंध्याय। विंध्याचलाशनाय नमः ॥ ८६०

ओं विद्याप्रियाय नमः। विशिष्टात्मने। वाद्यभांडप्रियाय। वंद्याय। वसुदेवाय। वसुप्रियाय। वसुप्रदाय। श्रीदाय। श्रीशाय। श्रीनिवासाय। श्रीपतये। शरणाश्रयाय। श्रीधराय। श्रीकराय।

श्रीलाय। शरण्याय। शरणात्मकाय। शिवार्चिताय। शिवप्राणाय। शिवदाय नमः ।। ८८०

ओं शिवपूजकाय नमः । शिवकर्त्रे। शिवहर्त्रे। शिवात्मने। शिववांछकाय । शायकिने । शंकरात्मने । शंकरार्चनतत्पराय । शंकरेशाय। शिशवे। शौरये। शाब्दिकाय। शब्दरूपकाय। शब्द-भेदिने । शब्दहर्त्रे। शायकाय। शरणार्तिघ्ने। शर्वाय। शर्वप्रभवे । शूलिने नमः ।। ९००

ओं शूलपाणिप्रपूजिताय नमः । शार्ङ्गिणे । शंकरात्मने । शिवाय। शकटभंजनाय। शांताय। शांतये। शांतिदात्रे। शांतिकृते। शांतिकारकाय। शांतिकाय। शंखधारिणे। शंखिने। शंखध्वनि-प्रियाय । षट्चक्रभेदनकराय। षड्गुणाय। षडूर्मिकाय। षडिंद्रि-याय । षडंगाय। षोडशाय नमः ।। ९२०

ओं षोडशात्मकाय नमः। स्फुरत्कुंडलहाराढ्याय। स्फुरन्मर-कतच्छवये। सदानंदाय। सतीभर्त्रे। सर्वेशाय। सज्जनप्रियाय । सर्वात्मने। सर्वकर्त्रे। सर्वपात्रे। सनातनाय। सिद्धाय । साध्याय। साधकेंद्राय। साधकाय। साधकप्रियाय। सिद्धेशाय। सिद्धिदाय। साधवे। सत्कर्त्रे नमः ।। ९४०

ओं सदीश्वराय नमः । सद्गतये। सच्चिदानंदाय। सद्ब्रह्मणे। सकलात्मकाय । सतीप्रियाय । सतीभार्याय । स्वाध्यायाय । सतीपतये । सत्कवये । सकलत्रात्रे । सर्वपापप्रमोचकाय । सर्वशास्त्रमयाय। सर्वाम्नायनमस्कृताय। सर्वदेवमयाय। सर्वयज्ञस्व-रूपकाय। सर्वाय। संकटहर्त्रे। साहसिने। सगुणात्मकाय नमः ।। ९६०

ओं सुस्निग्धाय । सुखदात्रे । सत्त्वाय । सत्त्वगुणाश्रयाय । सत्याय । सत्यव्रताय । सत्यवते । सत्यपालकाय । सत्यात्मने । सुभगाय । सौभाग्याय । सगरान्वयाय । सीतापतये । ससीताय । सात्त्वताय । सात्त्वतांपतये । हरये । हलिने । हलाय । हरकोदंडखंडनाय नमः ।। ९८०

ओं हुंकारध्वनिकर्त्रे नमः । हुंकारध्वनिपूरणाय । हुंकारध्वनिसंभवाय । हर्त्रे । हरये । हरात्मने । हारभूषणभूषिताय । हरकार्मुकभंक्त्रे । हरपूजापरायणाय । क्षोणीशाय । क्षितिभुजे । क्षमापराय । क्षमाशीलाय । क्षमायुक्ताय । क्षोदिने । क्षोदविमोचनाय । क्षेमंकराय । क्षेमाय । क्षेमप्रदायकाय । ज्ञानप्रदाय नमः ।। १०००

## रामाष्टोत्तरशतनामावलिः - १

ओं नारायणाय नमः । जगन्नाथाय । अभिरामाय । जगत्पतये । कवये । पुराणाय । वागीशाय । रामाय । दशरथात्मजाय । राजराजाय । रघुवराय । कौसल्यानंदवर्धनाय । भर्गाय । वरेण्याय । विश्वेशाय । रघुनाथाय । जगद्गुरवे । सत्याय । सत्यप्रियाय । श्रेष्ठाय नमः । २०

ओं जानीकवल्लभाय नमः । विभवे । सौमित्रिपूर्वजाय । शांताय । कामदाय । कमलेक्षणाय । आदित्याय । रवये । ईशानाय । घृणये । सूर्याय । अनामयाय । आनंदरूपिणे । सौम्याय । राघवाय । करुणामयाय । जामदग्न्याय । तपोमूर्तये । रामाय । परशुधारिणे नमः । ४०

ओं वाक्पतये नमः । वरदाय । वाच्याय । श्रीपतये । पक्षिवाहनाय । श्रीशार्ङ्गधारिणे । रामाय । चिन्मयानंदविग्रहाय । हलधृग्विष्णवे । ईशानाय । बलरामाय । कृपानिधये । श्रीवल्लभाय ।

कृपानाथाय । जगन्मोहनाय । अच्युताय । मत्स्यकूर्मवराहादि-रूपधारिणे । अव्ययाय । वासुदेवाय । जगद्योनये नमः । ६०

ओं अनादिनिधनाय नमः । हरये । गोविंदाय । गोपतये । विष्णवे । गोपीजनमनोहराय । गोगोपालपरीवाराय । गोपकन्या-समावृताय । विद्युत्पुंजप्रतीकाशाय । रामाय । कृष्णाय । जगन्म-याय । गोगोपिकासमाकीर्णाय । वेणुवादनतत्पराय । कामरूपाय । कलावते । कामिनीकामदाय । विभवे । मन्मथाय । मथुरानाथाय नमः । ८०

ओं माधवाय नमः । मकरध्वजाय । श्रीधराय । श्रीकराय । श्रीशाय । श्रीनिवासाय । परात्पराय । भूतेशाय । भूपतये । भद्राय । विभूतये । भूमिभूषणाय । सर्वदुःखहराय । वीराय । दुष्टदानववैरिणे । श्रीनृसिंहाय । महाबाहवे । महते । दीप्ततेजसे । चिदानंदमयाय नमः । १००

ओं नित्याय नमः । प्रणवाय । ज्योतीरूपिणे । आदित्य-मंडलगताय । निश्चितार्थस्वरूपिणे । भक्तप्रियाय । पद्मनेत्राय । भक्तानामीप्सितप्रदाय नमः । १०८

## श्रीरामरसायनं नाम
## श्रीरामाष्टोत्तरशतनामावलिः - २

ओं सर्वदेव समाराध्य पदपङ्कज शोभिताय नमः ।

वेदमौलि समाम्नात परमानन्द वैभवाय नमः ।

मुनि वृन्द समाराध्य दिव्यमङ्गळ विग्रहाय नमः ।

दिव्य गन्ध रसाद्याढ्य परलोक विराजिताय नमः ।

दिव्य मोहनरूपाढ्य नित्यसूरि निषेविताय नमः ।

महामणि विचित्राङ्ग मण्टपान्तर्विराजिताय नमः ।

श्रीभूमिनीळा संसेव्य पादपीठलसत्पदाय नमः ।

शङ्ख चक्र गदा पद्म संशोभित करांबुजाय नमः ।

लोकरक्षण संप्राप्त विविधाकृतिपूजिताय नमः ।

पौलस्त्य विक्रमप्लुष्ट विधिमुख्य सुरस्तुताय नमः ॥ १०

देवाभय प्रदानार्थ परसौलभ्य सागराय नमः ।

वानरीकृत विध्यादि देवनायक सन्नुताय नमः ।

चक्रवर्ति गृहावास रोचनायुत चेतनाय नमः ।

कौसल्या भक्ति पूर्त्यर्थ तद्गर्भवसतिप्रियाय नमः ।

ऋश्यशृङ्ग मुनिश्रेष्ठ कारितेष्टि फलोद्गमाय नमः ।

यज्ञपावक संजात पायसान्नस्वरूपधृते नमः ।

तत्प्राशन सुसंहृष्ट कौसल्या गर्भसंभवाय नमः ।

चैत्रशुद्ध नवम्याढ्य पुनर्वसुविनिर्गताय नमः ।

रामाजन समाह्लाद शङ्खचक्रादि शोभिताय नमः ।

रामनाम विराजच्छ्रीभक्तसंघकृतार्हणाय नमः । २०

भरतादि महोदार भ्रातृमध्य विराजिताय नमः ।

वयस्य केलिसंजात सुन्दर स्वेद भूषिताय नमः ।

कस्तूरी तिलकोद्भासिचूर्णकुन्तलराजिमते नमः ।

राकाचन्द्रनिभ श्रीमद्वदनाम्बुज शोभिताय नमः ।

विकासोन्मुखपद्मश्रीमन्दहासाति सुन्दराय नमः ।

प्रियभाषण संसक्त भक्तसङ्घ विराजिताय नमः ।

राजलक्षण माधुर्य सन्तोषित महीपतये नमः ।

विश्वामित्रानुग श्रीमल्लक्ष्मणानुचरादृताय नमः ।

ताटकाख्य महामृत्युभय विध्वंसकारकाय नमः ।

यज्ञप्रत्यूह कृद्रक्षोविक्षोभण कृताभयाय नमः ।। ३०

कुशिकात्मज संप्रोक्त तुषाराद्रिसुताकथाय नमः ।

गौतमाख्य मुनिश्रेष्ठवनितापाप भञ्जकाय नमः ।

चन्द्रशेखर कोदण्ड भञ्जनात्त महोन्नतये नमः ।

जानकी हस्त संदत्त हारशोभि भुजान्तराय नमः ।

वधूयुक्त सहोदर्य वंदिताङ्घ्रि सरोरुहाय नमः ।

भार्गवास्त्रगृहीत श्री संतोषित महीपतये नमः ।

वसिष्ठादि मुनिप्रीत जननीजन पूजिताय नमः ।

जानकी मानसोल्लास कुमुदोद्भासि चन्द्रमसे नमः ।

ज्ञानवृद्ध वयोवृद्ध शीलवृद्धसुसंमताय नमः ।

माधुर्याढ्य महौदार्य गुणलुब्ध महीप्रियाय नमः । ४०

महागज समारूढ दर्शनेच्छुजनावृताय नमः ।

कैकेयीवाक्य संतप्त महीपति समीपगाय नमः ।

अनायासगृहीत स्ववनवास विराजिताय नमः ।

मुनिरक्षा त्वरात्यक्त जनन्यादि जनार्थनाय नमः ।

सीतासौमित्रि संसेव्य रथोत्तम विराजिताय नमः ।

गुहानीत वटक्षीर धृतकेश जटाततये नमः ।

गङ्गातीर परित्यक्त खिन्नसारथिमित्रवते नमः ।

भरद्वाज मुनिप्रोक्त चित्रकूट निवासकृते नमः ।

मृततातसुसंस्कारक्षणागत सहोदराय नमः ।

बहुन्याय समाख्यान वितीर्ण निजपादुकाय नमः ।। ५०

वसिष्ठादि महीदेव देवनाथादि पूजिताय नमः ।

खरभीत मुनिव्रात सूचितात्म व्यवस्थितये नमः ।

शरभङ्ग महायोगि नित्यलोक प्रदायकाय नमः ।

अगस्त्यादि महामौनि पूजितांघ्रि सरोरुहाय नमः ।

राक्षसार्त मुनिश्रेष्ठ संरक्षण कृताभयाय नमः ।

विराधवध सन्तुष्ट देहिबृन्द निषेविताय नमः ।

गृध्रराज महाप्रीतिस्थित पञ्चवटीतटाय नमः ।

कामार्त राक्षसी कर्णनासिका च्छेदनादराय नमः ।

खरकोप विनिष्क्रान्त खरमुख्य निषूदनाय नमः ।

मायामृग तनुच्छन्न मारीचतनुदारणाय नमः ।। ६०

सीता वचन संखिन्न सौमित्रि भृशकोपनाय नमः ।

शून्योटज समालोक व्यथिताशय भिन्नधिये नमः ।

वृत्तबोधि जटाय्वर्थ दत्तलोक महोन्नतये नमः ।

मुक्तशाप कबन्धोक्त जानकी प्राप्ति निश्चयाय नमः ।

शबरी चिरकालाप्त तद्भुक्त फलसंस्पृहाय नमः ।

भिक्षुरूप प्रतिच्छन्न हनुमद्वचनादराय नमः ।

स्निग्ध सुग्रीव विस्रम्भ दत्तवीर्य परीक्षणाय नमः ।

विद्धवालि समाख्यात शास्त्रसार विनिर्णयाय नमः ।
वर्षर्तु सर्वसमय गिरि प्रस्रवणस्थिताय नमः ।
विस्मृताखिलसुग्रीवप्रेषितात्मसहोदराय नमः ।। ७०
नतसुग्रीव सन्दिष्ट हनुमद्दत्तभूषणाय नमः ।
प्राप्तचूडामणिप्रेक्षा संस्मारित गुरुत्रयाय नमः ।
वायुसूनु वितीर्ण स्वशरीरालिङ्गनोज्वलाय नमः ।
कपिसैन्यमहोत्साह प्राप्तनीरधिसत्तटाय नमः ।
विभीषण परित्राणप्रथितात्म महाव्रताय नमः ।
महोदधि महावेग जातक्रोधातिभीषणाय नमः ।
शरार्तवार्धि रत्नौघ पूजिताब्ज पदद्वयाय नमः ।
कार्यप्रत्यूहविध्वंस संपूजितमहेश्वराय नमः ।
महासेतु महादेव विधिमुख्य सुरार्चिताय नमः ।
वालिसूनु दशग्रीव समाश्रावित तद्धिताय नमः । ८०
समागत घटीकर्ण मुखराक्षस सूदनाय नमः ।
दशग्रीव शिरोराजत् किरीटाग्रच विभेदकाय नमः ।
इन्द्रजिद् वधकार्याप्त सुमित्रासुत वन्दिताय नमः ।
राक्षसाधिपविद्ध्वंस देवसंङ्घ कृतस्तुतये नमः ।
वह्निप्रवेश दीप्तांग जानकी प्रीतमानसाय नमः ।
चक्रवर्ति महेशान विधिमुख्य स्तुतोन्नतये नमः ।
अभिषिक्त समायात विभीषणकृत स्तुताय नमः ।
निजपादाब्ज संसक्त रक्षोवैभवशंसनाय नमः ।

यूथनायक तत्पत्नी विभीषण परीवृताय नमः ।

पुष्पकागति सुप्रीत भरद्वाज कृतार्चनाय नमः ।। ९०

भरतानन्द सन्दोह वर्धनादृत मारुतये नमः ।

महासाम्राज्यलब्धश्रीनन्दिताखिलचेतनाय नमः ।

काशीक्षेत्र महेशान चिन्तितात्म महामनवे नमः ।

मृतौ तद्दत्त तन्मन्त्र लब्ध मुक्तिपदस्तुताय नमः ।

श्रीरामतापिनीप्रोक्त विश्रुतानन्तवैभवाय नमः ।

मकाराक्षर सञ्जात शिवांश हनुमत्प्रियाय नमः ।

निजचारित्रसंपूत वाल्मीकि वरदायकाय नमः ।

नामवैभव लेशांश विध्वंसित विपत्ततये नमः ।

चेतनासेचनानन्द निजवैभव भूषिताय नमः ।

अविशेष वितीर्णार्त रक्षणोत्थ महोन्नतये नमः । १००

महेशविदितानन्द निजवैभव भूषिताय नमः ।

लक्ष्मीविष्णवंशसंम्पूर्ण सीतारामशरीरवते नमः ।

विष्णुशंभु महामन्त्र साराक्षर सुनामवते नमः ।

मित्रभाव समायात भक्तरक्षैक दीक्षिताय नमः ।

सकृत्प्रपन्न जनतासंरक्षण धुरंधराय नमः ।

श्रितचित्त परानन्ददायि मङ्गलविग्रहाय नमः ।

धर्मार्थकाममोक्षाख्य फलसर्वार्थदायकाय नमः ।

भक्तेष्टफलदानोत्ककरुणा सान्द्रचेतसे नमः । १०८

# श्रीरामाष्टोत्तरशतनामस्तोत्रम्

श्रीगणेशाय नमः ॥

वाल्मीकिरुवाच ।

यैस्तु नामसहस्रस्य पठनं न भवेत्सदा ।
रचितं नित्यपाठाय तेभ्यः स्वल्पाक्षरं मया ॥ १

अष्टोत्तरशतं नाम्नामादरेण पठन्तु ते ।
रामपादारविंदश्रीप्राप्तिं तेषां च प्रार्थये ॥ २

गुणानां चिन्तनं नित्यं दुर्गुणानां विवर्जनम् ।
साधकानां सदा वृत्तिः परमार्थपरा भवेत् ॥ ३

यथा तु व्यसने प्राप्ते राघवः स्थिरनिश्चयः ।
विजयं प्राप्तवानन्ते प्राप्नुवन्तु च सज्जनाः ॥ ४

श्रीगणेशाय नमः ।

सम्राड् दक्षिणमार्गस्थः सहोदरपरीवृतः ।
साधुकल्पतरुर्वश्यो वसंतक्रतुसंभवः ॥ ५

सुमन्त्रादरसंपूज्यो यौवराज्यविनिर्गतः ।
सुबन्धुः सुमहन्मार्गी मृगयाखेलकोविदः ॥ ६

सरित्तीरनिवासस्थो मारीचमृगमार्गणः ।
सदोत्साही चिरस्थायी स्पष्टभाषणशोभनः ॥ ७

स्त्रीशीलसंशयोद्विग्नो जातवेदःप्रकीर्तितः ।
स्वयंबोधस्तमोहारी पुण्यपादोऽरिदारुणः ॥ ८

साधुपक्षपरो लीनः शोकलोहितलोचनः ।
संसारवनदावाग्निः सहकार्यसमुत्सुकः ॥ ९

सेनाव्यूहप्रवीणः स्त्रीलांछनकृतसंगरः ।
सत्याग्रही वनग्राही करग्राही शुभाकृतिः ।। १०

सुग्रीवाभिमतो मान्यो मन्युनिर्जितसागरः ।
सुतद्वययुतः सीताभूगर्भगमनाकुलः ।। ११

सुप्रमाणितसर्वाङ्गः पुष्पमालासुशोभितः ।
सुगतः सानुजो योद्धा दिव्यवस्त्रादिशोभनः ।। १२

समाधाता समाकारः समाहारः समन्वयः ।
समयोगी समुत्कर्षः समभावः समुद्यतः ।। १३

समदृष्टिः समारंभः समवृत्तिः समद्युतिः ।
सदोदितो नवोन्मेषः सदसद्वाचकःपुमान् ।। १४

हरिणाकृष्टवैदेहीप्रेरितः प्रियदर्शनः ।
हृतदार उदारश्रीर्जनशोकविशोषणः ।। १५

हनुमद्वाहनोऽगम्यः सुगमः सज्जनप्रियः ।
हनुमद्दूतसंपन्नो मृगाकृष्टः सुखोदधिः ।। १६

हृन्मन्दिरस्थचिन्मूर्तिर्मृदू राजीवलोचनः ।
क्षत्राग्रणीस्तमालाभो रुदनक्लिन्नलोचनः ।। १७

क्षीणायुर्जनकाहूतो रक्षोघ्नो ऋक्षवत्सलः ।
ज्ञानचक्षुर्योगविज्ञो युक्तिज्ञो युगभूषणः ।। १८

सीताकान्तश्चित्रमूर्तिः कैकेयीसुतबान्धवः ।
पौरप्रियः पूर्णकर्मा पुण्यकर्मपयोनिधिः ।। १९

सुराज्यस्थापकश्चातुर्वर्ण्यसंयोजकः क्षमः ।
द्वापरस्थो महानात्मा सुप्रतिष्ठो युगन्धरः ।। २०

पुण्यप्रणतसंतोषः शुद्धः पतितपावनः ।
पूर्णोऽपूर्णोऽनुजप्राणः प्राप्यो निजहृदि स्वयम् ।। २१

वैदेहीप्राणनिलयः शरणागतवत्सलः ।
शुभेच्छापूर्वकं स्तोत्रं पठनीयं दिने दिने ।
अष्टोत्तरशतं नाम्नां राघवस्य पठेन्नरः ।। २२

इष्टं लब्ध्वा सदा शान्तः सामर्थ्यसहितो भवेत् ।
नित्यं रामेण सहितो निवासस्तस्य वा भवेत् ।। २३

इति श्री अनन्तसुतश्रीदिवाकर-विरचितं
श्रीरामाष्टोत्तरशतनामस्तोत्रं संपूर्णम् ।।

## श्रीरामाष्टोत्तरशतनामावलिः

ओं सम्राजे नमः । दक्षिणमार्गस्थाय । सहोदरपरीवृताय । साधुकल्पतरवे । वश्याय । वसन्तऋतुसंभवाय । सुमन्त्रादर-संपूज्याय । यौवराज्यविनिर्गताय । सुबन्धवे । सुमहन्मार्गिणे । मृगयाखेलकोविदाय । सरित्तीरनिवासस्थाय । मारीचमृग-मार्गणाय । सदोत्साहिने । चिरस्थायिने । स्पष्टभाषणशोभनाय । स्त्रीशीलसंशयोद्विग्नाय । जातवेदःप्रकीर्तिताय । स्वयंबोधाय । तमोहारिणे नमः ।। २०

ओं पुण्यपादाय नमः । अरिदारुणाय । साधुपक्षपराय । लीनाय । शोकलोहितलोचनाय । संसारवनदावाग्नये । सहकार्य-समुत्सुकाय । सेनाव्यूहप्रवीणाय । स्त्रीलाञ्छनकृतसङ्गराय । सत्याग्रहिणे । वनग्राहिणे । करग्राहिणे । शुभाकृतये । सुग्रीवाभिमताय । मान्याय । मन्युनिर्जितसागराय । सुतद्वययुताय ।

सीताभूगर्भगमनाकुलाय । सुप्रमाणितसर्वाङ्गाय । पुष्पमाला-सुशोभिताय नमः ॥ ४०

ओं सुगताय नमः । सानुजाय । योद्ध्रे । दिव्यवस्त्रादि-शोभनाय । समाधात्रे । समाकाराय । समाहाराय । समन्वयाय । समयोगिने । समुत्कर्षाय । समभावाय । समुद्यताय । समदृष्टये । समारंभाय । समवृत्तये । समद्युतये । सदोदिताय । नवोन्मेषाय । सदसद्वाचकाय । पुंसे नमः ॥ ६०

ओं हरिणाकृष्टवैदेहीप्रेरिताय नमः । प्रियदर्शनाय । हृतदाराय । उदारश्रिये । जनशोकविशोषणाय । हनुमद्वाहनाय । अगम्याय । सुगमाय । सज्जनप्रियाय । हनुमद्दूतसंपन्नाय । मृगाकृष्टाय । सुखोदधये । हृन्मन्दिरस्थचिन्मूर्तये । मृदवे । राजीवलोचनाय । क्षत्राग्रण्ये । तमालाभाय । रुदनक्लिन्नलोचनाय । क्षीणायुर्जनकाहूताय । रक्षोघ्नाय नमः ॥ ८०

ओं ऋक्षवत्सलाय नमः । ज्ञानचक्षुषे । योगविज्ञाय । युक्तिज्ञाय । युगभूषणाय । सीताकान्ताय । चित्रमूर्तये । कैकयीसुतबान्धवाय । पौरप्रियाय । पूर्णकर्मणे । पुण्यकर्म-पयोनिधये । सुराज्यस्थापकाय । चातुर्वर्ण्यसंयोजकाय । क्षमाय । द्वापरस्थाय । महते । आत्मने । सुप्रतिष्ठाय । युगन्धराय । पुण्यप्रणतसन्तोषाय नमः ॥ १००

ओं शुद्धाय नमः । पतितपावनाय । पूर्णाय । अपूर्णाय । अनुजप्राणाय । निजहृदिस्वयं प्राप्याय । वैदेहीप्राणनिलयाय । शरणागतवत्सलाय नमः ॥ १०८

कार्यकारस्वामिनाथार्यविरचिता

रामनामाङ्किता

## हनुमदष्टोत्तरशतनामस्तुतिः

रामदूतो रामभृत्यो रामचित्तापहारकः ।
रामनामजपासक्तो रामकीर्तिप्रचारकः ॥ १

रामालिङ्गनसौख्यज्ञो रामविक्रमहर्षितः ।
रामबाणप्रभावज्ञो रामसेवाधुरंधरः ॥ २

रामहृत्पद्ममार्तण्डो रामसङ्कल्पपूरकः ।
रामामोदितवाग्वृत्तिः रामसन्देशवाहकः ॥ ३

रामतारकगुह्यज्ञो रामाह्लादनपण्डितः ।
रामभूपालसचिवो रामधर्मप्रवर्तकः ॥ ४

रामानुजप्राणदाता रामभक्तिलतासुमम् ।
रामचन्द्रजयाशंसी रामधैर्यप्रवर्धकः ॥ ५

रामप्रभावतत्त्वज्ञो रामपूजनतत्परः ।
राममान्यो रामहृद्यो रामकृत्यपरायणः ॥ ६

रामसौलभ्यसंवेत्ता रामानुग्रहसाधकः ।
रामार्पितवचश्चित्तदेहवृत्तिप्रवर्त्तितः ॥ ७

रामसामुद्रिकाभिज्ञो रामपादाब्जषट्पदः ।
रामायणमहामालामध्याञ्चितमहामणिः ॥ ८

रामायणरसास्वादस्रवदश्रु परिप्लुतः ।
रामकोदण्डटङ्कारसहकारिमहास्वनः ॥ ९

रामसायुज्यसाम्राज्यद्वारोद्घाटनकर्मकृत् ।
रामपादाब्जनिष्यन्दिमधुमाधुर्यलोलुपः ॥ १०

रामकैङ्कर्यमात्रैकपुरुषार्थकृतादरः ।
रामायणमहाम्भोधिमथनोत्थसुधाघटः ।। ११

रामाख्यकामधुग्दोग्धा रामवक्त्रेन्दुसागरः ।
रामचन्द्रकरस्पर्श द्रवच्छीतकरोपलः ।। १२

रामायणमहाकाव्यशुक्तिनिक्षिप्तमौक्तिकः ।
रामायणमहारण्यविहाररतकेसरी ।। १३

रामपत्न्येकपत्नीत्वसपत्नायितभक्तिमान् ।
रामेङ्गितरहस्यज्ञो राममन्त्रप्रयोगवित् ।। १४

रामविक्रमवर्षर्तुपूर्वभूनीलनीरदः ।
रामकारुण्यमार्त्तण्ड प्रागुद्यदरुणायितः ।। १५

रामराज्याभिषेकाम्बुपवित्रीकृतमस्तकः ।
रामविश्लेषदावाग्निशमनोद्यतनीरदः ।। १६

रामायणवियद्गङ्गाकल्लोलायितकीर्तिमान् ।
रामप्रपन्नवात्सल्यव्रततात्पर्यकोविदः ।। १७

रामाख्यानसमाश्वस्तसीतामानससंशयः ।
रामसुग्रीवमैत्र्याख्यहव्यवाहेन्धनायितः ।। १८

रामांगुलीयमाहात्म्यसमेधितपराक्रमः ।
रामार्त्तिध्वंसनचणचूडामणिलसत्करः ।। १९

रामनाममधुस्यन्दद्वदनाम्बुजशोभितः ।
रामनामप्रभावेण गोष्पदीकृतवारिधिः ।। २०

रामौदार्यप्रदीपार्चिर्वर्धकस्नेहविग्रहः ।
रामश्रीमुखजीमूतवर्षणोन्मुखचातकः ।। २१

रामभक्त्येकसुलभब्रह्मचर्यव्रते स्थितः ।
रामलक्ष्मणसंवाहकृतार्थीकृतदोर्युगः ।। २२

रामलक्ष्मणसीताख्यत्रयीराजितहृद्गुहः ।
रामरावणसंग्रामवीक्षणोत्फुल्लविग्रहः ।। २३

रामानुजेन्द्रजिद्युद्धलब्धव्रणकिणाङ्कितः ।
रामब्रह्मानुसन्धानविधिदीक्षाप्रदायकः ।। २४

रामरावणसंग्राममहाध्वरविधानकृत् ।
रामनाममहारत्ननिक्षेपमणिपेटकः ।। २५

रामताराधिपज्योत्स्नापानोन्मत्तचकोरकः ।
रामायणाख्यसौवर्णपञ्जरस्थितशारिकः ।। २६

रामवृत्तान्तविध्वस्तसीताहृदयशल्यकः ।
रामसन्देशवर्षाम्बुवहन्नीलपयोधरः ।। २७

रामराकाहिमकरज्योत्स्नाधवलविग्रहः ।
रामसेवामहायज्ञदीक्षितो रामजीवनः ।। २८

रामप्राणो रामवित्तं रामायत्तकलेबरः ।
रामशोकाशोकवनभञ्जनोद्यत्प्रभञ्जनः ।। २९

रामप्रीतिवसन्तर्तुसूचकायितकोकिलः ।
रामकार्यार्थोपरोधदूरोत्सारणलम्पटः ।। ३०

रामायणसरोजस्थहंसो रामहिते रतः ।
रामानुजक्रोधवह्निदग्धसुग्रीवरक्षकः ।। ३१

रामसौहार्दकल्पद्रुसुमोद्गमनदोहदः ।
रामेषुगतिसंवेत्ता रामजैत्ररथध्वजः ।। ३२

रामब्रह्मनिदिध्यासनिरतो रामवल्लभः ।
रामसीताख्ययुगलयोजको राममानितः ।। ३३

रामसेनाग्रणी रामकीर्तिघोषणडिण्डिमः ।
रामेतिद्व्यक्षराकारकवचावृतविग्रहः ।। ३४

रामायणमहावृक्षफलासक्तकपीश्वरः ।
रामपादाश्रयान्वेषिविभीषणविचारवित् ।। ३५

राममाहात्म्यसर्वस्वं रामसद्गुणगायकः ।
रामजायाविषादाग्निनिर्दग्धरिपुसैनिकः ।। ३६

रामकल्पद्रु मूलस्थो रामजीमूतवैद्युतः ।
रामन्यस्तसमस्ताशो रामविश्वासभाजनम् ।। ३७

रामप्रभावरचितशैत्यवालाग्निशोभितः ।
रामभद्राश्रयोपात्तधीरोदात्तगुणाकरः ।। ३८

रामदक्षिणहस्ताब्जमुकुटोद्भासिमस्तकः ।
रामश्रीवदनोद्भासिस्मितोत्पुलकमूर्तिमान् ।
रामब्रह्मानुभूत्याप्त पूर्णानन्दनिमज्जितः ।। ३९

इतीदं रामदूतस्य वायुसूनोर्महात्मनः ।
रामनामाङ्कितं नाम्नामष्टोत्तरशतं शुभम् ।। ४०

प्रसादादाञ्जनेयस्य देशिकानुग्रहेण च ।
रचितं स्वामिनाथेन कार्यकारेण भक्तितः ।। ४१

भूयादभीष्टफलदं श्रद्धया पठतां नृणाम् ।
इहलोके परत्रापि रामसायुज्यदायकम् ।। ४२



रामनामाङ्किता

## हनुमदष्टोत्तरशतनामावलिः

ओं रामदूताय नमः । रामभृत्याय । रामचित्तापहारकाय । रामनामजपासक्ताय । रामकीर्तिप्रचारकाय । रामालिङ्गनसौख्यज्ञाय । रामविक्रमहर्षिताय । रामबाणप्रभावज्ञाय । रामसेवाधुरन्धराय । रामहृत्पद्ममार्ताण्डाय । रामसंकल्पपूरकाय । रामामोदितवाग्वृत्तये । रामसन्देशवाहकाय । रामतारकगुह्यज्ञाय । रामाह्लादनपण्डिताय । रामभूपालसचिवाय । रामधर्मप्रवर्तकाय । रामानुजप्राणदात्रे । रामभक्तिलतासुमाय । रामचन्द्रजयाशंसिने नमः । २०

ओं रामधैर्यप्रवर्धकाय नमः । रामप्रभावतत्त्वज्ञाय । रामपूजनतत्पराय । राममान्याय । रामहृद्याय । रामकृत्यपरायणाय । रामसौलभ्यसंवेत्त्रे । रामानुग्रहसाधकाय । रामार्पितवचश्चित्तदेहवृत्तिप्रवर्तिताय । रामसामुद्रिकाभिज्ञाय । रामपादब्जषट्पदाय । रामायणमहामालामध्याश्रितमहामणये । रामायणरसास्वाद स्रवदश्रुपरिप्लुताय । रामकोदण्डटङ्कारसहकारिमहास्वनाय । रामसायुज्यसाम्राज्य द्वारोद्घाटनकर्मकृते । रामपादाब्जनिष्यन्दिमधु माधुर्यलोलुपाय । रामकैङ्कर्यमात्रैकपुरुषार्थकृतादराय । रामायणमहांभोधिमथनोत्थसुधाघटाय । रामाख्यकामधुग्दोग्ध्रे । रामवक्त्रेन्दुसागराय नमः ॥ ४०

ओं रामचन्द्रकरस्पर्शद्रवच्छीतकरोपलाय नमः । रामायणमहाकाव्यशुक्तिनिक्षिप्तमौक्तिकाय। रामायणमहारण्यविहाररतकेसरिणे । रामपत्न्येकपत्नीत्वसपत्नायितभक्तिमते । रामेङ्गितरहस्यज्ञाय । राममन्त्रप्रयोगविदे । रामविक्रमवर्षर्तुपूर्वभूनीलनीरदाय । रामकारुण्यमार्तण्डप्रागुद्यदरुणायिताय । रामराज्याभिषेकांबुपवित्रीकृतमस्तकाय । रामविश्लेषदावाग्निशमनोद्यतनीरदाय । रामायणवियद्गङ्गाकल्लोलायितकीर्तिमते । रामप्रपन्नवात्सल्यव्रततात्पर्यकोविदाय। रामाख्यानसमाश्वस्तसीतामानससंशयाय। रामसुग्रीवमैत्र्याख्यहव्यवाहेन्धनायिताय । रामाङ्गुलीयमाहात्म्यसमेधितपराक्रमाय । रामार्तिध्वंसनचणचूडामणिलसत्कराय । रामनाममधुस्यन्दद्वदनांबुजशोभिताय । रामनामप्रभावेण गोष्पदीकृतवारिधये । रामौदार्यप्रदीपार्चिर्वर्धकस्नेहविग्रहाय। रामश्रीमुखजीमूतवर्षणोन्मुखचातकाय नमः । ६०

ओं रामभक्त्येकसुलभब्रह्मचर्यव्रते स्थिताय नमः । रामलक्ष्मणसंवाहकृतार्थीकृतदोर्युगाय । रामलक्ष्मणसीताख्यत्रयीराजितहृद्गुहाय । रामरावणसङ्ग्रामवीक्षणोत्फल्लविग्रहाय। रामानुजेन्द्रजिद्युद्धलब्धव्रणकिणाङ्किताय। रामब्रह्मानुसन्धानविधिदीक्षाप्रदायकाय। रामरावणसङ्ग्राममहाध्वरविधानकृते। रामनाममहारत्ननिक्षेपमणिपेटकाय। रामताराधिपज्योत्स्नापानोन्मत्तचकोरकाय। रामायणाख्यसौवर्णपञ्जरस्थितशारिकाय। रामवृत्तान्तविध्वस्तसीताहृदयशल्यकाय । रामसन्देशवर्षांबुवहन्नीलपयोधराय ।

रामराकाहिमकरज्योत्स्नाधवलविग्रहाय । रामसेवामहा-यज्ञदीक्षिताय । रामजीवनाय । रामप्राणाय । रामवित्ताय । रामायत्तकलेवराय । रामशोकाशोकवनभञ्जनोद्यत्प्रभ-ञ्जनाय । रामप्रीतिवसन्तर्तुसूचकायितकोकिलाय नमः । ८०

ओं रामकार्यार्थोपरोधदूरोत्सारणलम्पटाय नमः । रामायणसरोजस्थहंसाय । रामहिते रताय । रामानुजक्रोध-वह्निदग्धसुग्रीवरक्षकाय । रामसौहार्दकल्पद्रुसुमो-द्गमनदोहदाय । रामेषुगतिसंवेत्त्रे । रामजैत्ररथध्वजाय । रामब्रह्मनिदिध्यासनिरताय । रामवल्लभाय । रामसीताख्य-युगलयोजकाय । राममानिताय । रामसेनाग्रण्ये । रामकीर्ति-घोषणडिण्डिमाय । रामेतिव्यक्षराकारकवचावृतविग्रहाय । रामायणमहावृक्षफलासक्तकपीश्वराय । रामपादाश्रयान्वेषि-विभीषणविचारविदे । राममाहात्म्यसर्वस्वाय । रामसद्गुण-गायकाय । रामजायाविषादाग्निनिर्दग्धरिपुसैनिकाय । रामकल्पद्रुमूलस्थाय नमः । १००

ओं रामजीमूतवैद्युताय नमः । रामन्यस्तसमस्ता-शाय । रामविश्वासभाजनाय । रामप्रभावरचितशैत्यवाला-ग्निशोभिताय । रामभद्राश्रयोपात्तधीरोदात्तगुणाकराय । रामदक्षिण हस्ताब्जमुकुटोद्भासिमस्तकाय । रामश्रीवद-नोद्भासि स्मितोत्पुलकमूर्तिमते । रामब्रह्मानुभूत्याप्त-पूर्णानन्दनिमज्जिताय नमः ॥ १०८



# श्रीवेङ्कटेशसहस्रनामस्तोत्रम्

अस्य श्रीवेङ्कटेशदिव्यसहस्रनामस्तोत्रमन्त्रस्य, श्रीरुद्र ऋषिः। अनुष्टुप् छन्दः। श्रीवेङ्कटेशः परमात्मा देवता। ओं अं आं ऐं क्लीं श्रीं ओं क्षौं ओं इति बीजम्। श्रीं भूं दुं शक्तिः। मम चतुर्विधपुरुषार्थसिद्ध्यर्थे नामपारायणे विनियोगः। करन्यासः - ओं अं आं वेङ्कटेशाय अंगुष्ठाभ्यां नमः। ओं ऐं श्रीं कं सदञ्जनगिरीशाय तर्जनीभ्यां नमः। ओं श्रीं शं वृषभूपतये क्षौं मध्यमाभ्यां नमः। ओं क्लौं दुः नमः सरः स्वामितटीजुषे अनामिकाभ्यां नमः। ओं श्रीं शं वृषभूपतये नमः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्सुवरोमिति दिग्बन्धः। ध्यानम्-

सत्यज्ञानमयं सुखस्य सदनं श्रीशैलमध्यस्थलं
भोगारूढमतिप्रसन्नवदनं भूषासहस्रोज्ज्वलम्।
त्र्यक्षं पद्मगदा सुचक्रजलजं बिभ्राणमर्कच्छविं
छत्रीभूतफणीन्द्रमाद्यममलं श्रीवेङ्कटेशं भजे॥

उपास्महे उपेन्द्राख्यं ब्रह्म वेदान्तगोचरम्।
संसारद्रुमविच्छेदकारणं कलिनाशनम्॥

ध्यायेद्वेङ्कटनायकं करयुगे शंखं च चक्रं मुदा
चान्ये पाणियुगे वरं कटितटे बिभ्राणमर्कच्छविम्।
देवं देवशिखामणिं श्रियमधो वक्षे दधानं हरिं
भूषाजालमनेकरत्नखचितं दिव्यं किरीटाङ्गदम्॥

मध्ये सुधाब्धि मणिमण्टपरत्नवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम्।

चित्रांबराभरणमाल्यविभूषिताङ्गीं
देवीं भजामि धृतमुद्गरवैरिचिह्नाम् ॥

ओं नमो वेङ्कटेशाय विष्वक्सेनाय वज्रिणे ।
वरदाय नमस्तुभ्यं वन्द्याय परमात्मने ॥ १

वरदाभयहस्ताय नमस्ते वसुरूपिणे ।
वामनाय वरेण्याय वरिष्ठाय वराय च ॥ २

नमो वेदान्तवेद्याय वृषभूपतये नमः ।
नमस्ते वज्रदंष्ट्राय वलयांगदशोभिने ॥ ३

विश्वेशाय नमस्तुभ्यं वामदेवाय ते नमः ।
वासुदेवाय वर्याय वृषदृग्गोचराय च ॥ ४

नमो वैकुण्ठ नाथाय विष्टरश्रवसे नमः ।
विशेषज्ञानरूपाय वैकुण्ठाय च विष्णवे ॥ ५

वीतरागाय विप्राय वज्रहस्ताय ते नमः ।
वीतशोकाय विस्तीर्णवदनाय नमो नमः ॥ ६

विद्याधीशाय विश्वाय वित्ताधीशाय ते नमः ।
विद्याप्रदाय वीराय विशेषाय विनोदिने ॥ ७

वित्तरक्षणचित्ताय वित्तार्जनपराय च ।
वित्तदात्रे नमस्तुभ्यं वित्तहर्त्रे नमो नमः ॥ ८

वित्तप्रत्यूह संहर्त्रे विमानवरशालिने ।
नमस्ते वीरसेनाय वीरावासाय ते नमः ॥ ९

वीरक्षत्रविनाशाय नमो विश्वंभराय च ।
वराहाय नमस्तुभ्यं वरपक्षीन्द्रगामिने ॥ १०

वज्रदेहाय वज्राय नमो वज्रप्रियाय च।
वज्रकञ्चुकदेहाय वंशवाद्यप्रियाय च ॥ ११

अगम्याय ह्यनन्ताय अनिरुद्धाय ते नमः।
अधोक्षजाय आद्याय अनर्घ्याय नमो नमः ॥ १२

अतीन्द्रियाय मन्दाय विधातृपतये नमः।
अमितापत्य परायाथाहल्योद्धारकाय च ॥ १३

अपमृत्युविनाशाय अदृश्याय नमो नमः।
नमस्तेऽमृतकल्पाय अमृतायाव्ययाय च ॥ १४

अजेयायादिदेहाय अट्टहासाय ते नमः।
अक्रूराय अघोराय अनन्तशयनाय च ॥ १५

अरुणाय नमस्तुभ्यमशेष सुखदायिने।
अहल्यासङ्गमस्थाय आर्ति हर्त्रे नमो नमः ॥ १६

असङ्गिने नमस्तुभ्यमग्निकुण्डस्थिताय च।
आकाशाय नमस्तुभ्यं कपिलातीर्थवासिने ॥ १७

कपिलाय नमस्तुभ्यं आदिनारायणाय च।
कल्पातीताय कल्पाय कनकांगदशालिने ॥ १८

कालाध्यक्षाय कालाय कलिकाल विसूदिने।
कण्ठीरवाय कालाय कालातीताय ते नमः ॥ १९

कारणज्ञान कार्याय कमलावल्लभाय च।
कुमाराकल्पसेव्याय केशवाय नमो नमः ॥ २०

सदा द्विभुजरूपाय नमः कन्दर्परूपिणे।
किरीटिने नमस्तुभ्यं केवलाय नमो नमः ॥ २१

कोटिकन्दर्परूपाय श्रीकृष्णाय नमो नमः ।
कलाय कलिरूपाय करवीरधराय च ।। २२

कुशेशयाय कुल्याय कूर्माय च नमो नमः ।
कालान्तराय कल्पाय कल्पातीताय ते नमः ।। २३

खगेशाय नमस्तुभ्यं खेटकाय नमो नमः ।
खेचराय नमो नित्यं खेटमुद्गरपाणये ।। २४

खट्वांगधरनाथाय कर्पूराय नमो नमः ।
खनित्राय च खेटाय नमस्ते खड्गपाणये ।। २५

गदिने गरुडेशाय गुप्तकुञ्जविहारिणे ।
नमो गुह्याय गूढाय गरुडेशध्वजाय च ।। २६

गूढप्रियाय गुण्याय गुणातीताय ते नमः ।
नमस्ते गुणिने तुभ्यं गगनांगणशालिने ।। २७

गगनाङ्गणदीप्ताय गगनाकारमूर्तये ।
नमस्ते गुणरूपाय गुणग्रामविहारिणे ।। २८

गन्धर्वाय नमस्तुभ्यं गंभीराय नमो नमः ।
गर्जिताय गरिष्ठाय नमो गरुडगामिने ।। २९

गूढाशयाय गूढाय गुप्तरूपाय ते नमः ।
गुरुसेव्याय नाथाय गीर्वाणपतये नमः ।। ३०

गङ्गातटविहाराय गोप्त्रे गोपतये नमः ।
गोपालाय नमस्तुभ्यं गोवर्धनधराय च ।। ३१

गोप्रियाय च गोपाय गोपांगणविहारिणे ।
गर्भेशाय शिखीशाय नमस्ते गिरिवासिने ।। ३२

नमस्ते गिरिरूपाय गिरीशाय प्रियाय च।
गिरीशरिपुहर्त्रे च गिरीशप्रीतिदायिने ॥ ३३

गिरिगम्याय गोपाय गोब्राह्मणरताय च।
घण्टानादाय घण्टाय घण्टानादप्रियाय च ॥ ३४

घस्मरादिनिहन्त्रे च घटिकाचलिने नमः ।
महाघण्टाय घण्टाय चण्डघण्टाय ते नमः ॥ ३५

घण्टोदिताय घटितप्रियाय च नमो नमः ।
घोरनादाय नादाय नमस्ते घनरूपिणे ॥ ३६

घनान्तराय घनिने घननादाय ते नमः ।
नमश्चंपकमालाय गिरिपंकज जीविने ॥ ३७

चारुवेषाय चिन्त्याय नमश्चारुस्वराय च।
नमस्तेऽमितगुणिने अचिन्त्याय नमो नमः ॥ ३८

चित्तस्थाय च चित्याय नमस्ते चित्स्वरूपिणे।
चित्राय च विचित्राय चित्रसंकल्पिने नमः ॥ ३९

चिदानन्दाय नन्दाय चिन्मयाय च ते नमः ।
चिदावासाय चित्तस्य विषयाय च ते नमः ॥ ४०

चिन्मयाय च चर्याय चन्द्रमौलिप्रियाय च।
छत्रिणे छत्रपतये छिन्न दैत्याय ते नमः ॥ ४१

छर्दीशाय नमस्तुभ्यं छिन्नमूलाय ते नमः ।
छन्दोमयस्वरूपाय छन्दसां पतये नमः ॥ ४२

छद्माय छद्मरूपाय छिन्नयज्ञाय ते नमः ।
जगद्रूपाय यज्ञाय जगन्नाथाय ते नमः ॥ ४३

जगत्प्राणाय च जगज्जीवनाय च ते नमः ।
जगद्भासाय शुद्धाय जगत्कर्त्रे नमो नमः ।। ४४

जगद्बीजाय बीजाय श्रीमत्सद्गुरवे नमः ।
जगदीशाय केशाय जनावासाय ते नमः ।। ४५

जित्वराय नमस्तुभ्यं जीवदाय जयाय च ।
जयभूमि प्रदे नित्यं नमस्ते जयहेतवे ।। ४६

जयीश्वराय जटिने जामदग्न्यप्रियाय च ।
जनाध्यक्षाय दक्षाय जनकाय नमो नमः ।। ४७

जनजाड्यविनाशाय जनसन्तोषिताय च ।
जल्पांघ्रि छिन्नवीराय जनाध्यक्षाय ते नमः ।। ४८

जगज्जितस्वरूपाय नमस्ते जयमूर्तये ।
जगदाभासरूपाय जगज्जीवनिवासिने ।। ४९

जयदाय च जीवाय जीवानां पतये नमः ।
नमस्ते यज्ञरूपाय झंझावाताय ते नमः ।। ५०

झञ्झानिनादनादाय झल्लशब्दप्रियाय च ।
यज्ञरूपाय यज्ञाय यज्ञकर्त्रे नमो नमः ।। ५१

यज्ञभोक्त्रे नमस्तुभ्यं नमो यज्ञप्रियाय च ।
ज्ञानात्मकाय ज्ञानाय कृतज्ञाय नमो नमः ।। ५२

अज्ञानज्ञानदात्रे च ज्ञानहर्त्रे नमो नमः ।
ज्ञानभर्त्रे नमस्तुभ्यं नमो ज्ञानप्रियाय च ।। ५३

योगीशाय नमस्तुभ्यं नमस्ते योगदायिने ।
योगाधिपतये नित्यं नमो योगिप्रियाय च ।। ५४

नमस्ते योगरूपाय योगज्ञानप्रियाय च।
योगिहृत्पद्मवासाय योगारूढाय ते नमः ॥ ५५

युगाय युगभीदाय युगसंरंभकाय च।
संयुगाय नमस्तुभ्यं युगसंहारकारिणे ॥ ५६

टित्काराय नमस्तुभ्यं टणत्कारकराय च।
टंकीशाय नमस्तुभ्यं नमस्ते टङ्कमालिने ॥ ५७

टरंघ्रीशाय टंकार टरणाय नमो नमः।
टंकाराय पवित्राय टंकामाराय ते नमः ॥ ५८

डाकिनीद्रोह संहर्त्रे डाकिनी रक्षकाय च।
डाकिनीस्वामिने तुभ्यं डाकिनी पतये नमः ॥ ५९

डुण्डिप्रियाय दीपाय नमो डंकप्रियाय च।
डाकिनी सृष्टमालाय डुण्डिकर्त्रे नमो नमः ॥ ६०

नारायणाय नित्याय निर्मलाय नराय च।
नीलतोयदरूपाय नीलमेघनिभाय च ॥ ६१

निराश्रयाय नित्याय निष्प्रपञ्चाय ते नमः।
निष्कलाय निजानन्दरूपिणे परमात्मने ॥ ६२

निरालयाय निर्वाणपदाय निबिडाय च।
निराभासाय नीलाय निमेषगमनाय च ॥ ६३

निबन्धाय निमेषाय निर्मोहाय नमो नमः।
निश्चयाय निवासाय नीरातीरनिवासिने ॥ ६४

नृसिंहक्षेत्ररक्षाय नारसिंहाय ते नमः।
निर्गुणाय च नीराय नमो नीलाञ्जनाय च ॥ ६५

नमो नागारिपत्राय नानारूपधराय च।
नागकेयूरहाराय नागयज्ञोपवीतिने ॥ ६६

नागेशयाय नगरप्रियाय च नमो नमः।
तप्तहाटकवर्णाय तरुणारुणतेजसे ॥ ६७

तटित्प्रभाय तीर्थाय तापनाय तरस्विने।
तपनाय च तत्त्वाय तारकाय नमो नमः ॥ ६८

तरुणाय तमोघ्नाय तापत्रयहराय च।
तरलाय तनुत्राय तटिने तक्षकाय च ॥ ६९

तेजोमयाय तेजाय तेजोऽधिपतये नमः।
त्रिधाम्ने चित्रदेहाय त्रिकालज्ञानरूपिणे ॥ ७०

नमस्त्रिमूर्तिविद्याय त्रयीदेहाय ते नमः।
त्रितत्त्वज्ञानिने नित्यं त्रिलोकपतये नमः ॥ ७१

तत्त्वज्ञाय तमालाय तमालश्यामलाय च।
स्थावराय स्थलेशाय स्थिरदेहाय ते नमः ॥ ७२

नमस्ते स्थाणुरूपाय स्थिररूपाय ते नमः।
दत्तात्रेयाय दीपाय दानवान्तकराय च ॥ ७३

दानप्रियाय दक्षाय नमो दारिद्र्यघातिने।
दामोदराय दत्ताय दिव्यदेहाय ते नमः ॥ ७४

दानवश्याय दिव्याय नमस्ते दिव्यबाहवे।
गदिने दीप्तदेहाय दयालुपतये नमः ॥ ७५

दीर्घकेशाय दक्षाय दारिताखिलवैरिणे।
दिवाकराय ते नित्यं देवेशाय नमो नमः ॥ ७६

दयाकराय च नमो देशाधिपतये नमः ।
नमो देव प्रमोदाय देवकीतनयाय च ।। ७७

धनाढ्याय धनेशाय धनदाय नमो नमः ।
धनिष्ठाय च धीराय धेनुरूपाय ते नमः ।। ७८

धनाध्यक्षाय धन्याय धीवराय च ते नमः ।
धात्री ध्रुवाय धूम्राय धराधीशाय ते नमः ।। ७९

धराधराय धीशाय नमो धाराप्रियाय च ।
धनञ्जयाय धैर्याय नमस्ते धैर्यकारिणे ।। ८०

धृतराष्ट्राय धृष्टाय धकाराय नमो नमः ।
धर्माय धर्मराजाय धर्ममूलाय ते नमः ।। ८१

धनराजाय धवलच्छत्रिणे ते नमो नमः ।
धनुर्धराय धन्याय धनुष्काराय ते नमः ।। ८२

नारदाय नमस्तुभ्यं नरेशाय नमो नमः ।
नमो नम्राय नेत्राय नतिलभ्याय ते नमः ।। ८३

पाण्डवाय च पार्थाय पृथ्वीशाय च ते नमः ।
पारदाय च पान्थाय पाञ्चाली रक्षकाय च ।। ८४

नमः प्रियाय पूर्वाय प्रीतिदाय नमो नमः ।
नमः पद्माधिपतये नमः पद्मेक्षणाय च ।। ८५

पद्महस्ताय पद्माय पद्मसंभवकारिणे ।
पद्मनाभाय पात्राय पुरुषाय नमो नमः ।। ८६

पूर्वेशाय परेशाय परानन्दाय ते नमः ।
प्रणवाय पुराणाय पृथुरूपाय ते नमः ।। ८७

प्रद्युम्नाय नमस्तुभ्यं नमस्ते पापनाशिने।
पावनाय नमस्तुभ्यं पुष्कराक्षाय ते नमः ।। ८८

पूर्वजाय च पुष्टाय परितुष्टाय ते नमः ।
परानन्दाय पूर्णाय नमः पर्वतवासिने ।। ८९

फणिरूपाय फणिने फणीन्द्राय नमो नमः ।
स्फुरत्कौस्तुभवक्षाय स्फुरद्रत्नकिरीटिने ।। ९०

नमस्ते स्फट् स्वरूपाय नमः फट्कारकारिणे ।
फेनाय फेनरूपाय फणिनाथाय ते नमः ।। ९१

फणीशाय नमो नित्यं फणीन्द्रशयनाय च ।
बलभद्राय बालाय बलाशाय नमो नमः ।। ९२

नमस्ते बलधीशाय बलप्राणाय ते नमः ।
बलिराजाय च नमो बलिदानाय ते नमः ।। ९३

नमस्ते फ(ब)ट्स्वरूपाय बलीशाय नमो नमः ।
बलिप्रियाय बलिने बलहर्त्रे नमो नमः ।। ९४

बहूदराय ते नित्यं बहुभक्ताय ते नमः ।
भद्रप्रदाय भीमाय नमो भीमस्वरूपिणे ।। ९५

भयङ्कराय च नमो भीमसेनाय ते नमः ।
भव्याय भूतपतये नमो भव्यप्रदाय च ।। ९६

नमो भूतनिवासाय भूतिदाय नमो नमः ।
नमो भवनशीलाय भार्गवाय नमो नमः ।। ९७

नमस्ते भूतभव्याय नमो भव्यप्रियाय च ।
नमो भूतस्वरूपाय भूधराय नमो नमः ।। ९८

भास्कराय नमस्तुभ्यं भूभारहरणाय च।
नमो भूतात्मने तुभ्यं भवाब्धितरणाय च॥ ९९

भूतवेतालघाताय भूपालाय नमो नमः।
भूतावासाय च नमो भूतसंमनवे नमः॥ १००

भूतिने च नमस्तुभ्यं भूतघ्नाय नमो नमः।
भावनाय नमस्तुभ्यं महाभूताय ते नमः॥ १०१

नमो भूतात्मने नित्यं भूतग्रहविनाशिने।
भूतसंयमिने नित्यं भूतभर्त्रे नमो नमः॥ १०२

भूतहर्त्रे नमस्तुभ्यं भूतकर्त्रे नमो नमः।
महादेवाय मन्त्राय मौनिने मानिने नमः॥ १०३

महीधराय मित्राय मन्त्रनाथाय ते नमः।
मेरुपुत्रगिरीशाय मन्त्राधिपतये नमः॥ १०४

मणिरम्याय रम्याय मन्थराय च ते नमः।
माषमुद्गप्रियायाथ मल्लदैत्यविघातिने॥ १०५

महीधराय मुनये मायिने मदहारिणे।
महामायाप्रसूताय मायातीताय ते नमः॥ १०६

माधवाय नमस्तुभ्यं नमस्ते मधुघातिने।
महादंष्ट्राय महते महाचार्याय ते नमः॥ १०७

नमस्ते मत्स्यरूपाय महामोहविनाशिने।
महान्धकार पाताय मुक्तिदाय मुरारये॥ १०८

मुक्तिकेशाय मुक्ताय मुक्ताहारधराय च।
नमो मानस्वरूपाय मदाय मददायिने॥ १०९

मुनिनाथाय मुनये मुनिबृन्दस्तुताय च।
मोक्षदाय च मोक्षाय महालक्ष्मीप्रियाय च ।। ११०

मुग्धाय मण्डपस्थाय मण्डलाय नमो नमः ।
मल्लप्रियाय मल्लाय मार्ताण्डाय नमो नमः ।। १११

मूलदाय च मूलाय मूलाभासाय ते नमः ।
मनःस्थाय मनोज्ञाय मुकुन्दाय नमो नमः ।। ११२

माणिक्यरोचिषे तुभ्यं मेघनाथाय ते नमः ।
मणिप्रियाय मणये महामणिधराय च ।। ११३

मणिकञ्चुकदेहाय मायासाधनरूपिणे ।
महीन्द्राय नमस्तुभ्यं महीधरनिवासिने ।। ११४

नमो मदनकर्त्रे च श्रीमहीधरिणे नमः ।
माषप्रियाय मेषाय मालतीपुष्पमालिने ।। ११५

महाबलाय च नमो नमो माहेश्वराय च ।
मर्मघ्नाय च मर्माय महामर्माय ते नमः ।। ११६

शतपत्राय शर्वाय शान्ताय शतमूर्तये ।
शतचक्रस्वरूपाय शाश्वताय नमो नमः ।। ११७

शतात्मने नमस्तुभ्यं नमः शस्त्रधराय च ।
शंखप्रियाय शंखाय शंखवाद्यप्रियाय च ।। ११८

शतमूर्तिस्वरूपाय शतमूर्तिविनोदिने ।
शतमूर्ध्ने नमस्तुभ्यं नमस्ते शतबाहवे ।। ११९

शत्रुघ्नाय नमस्तुभ्यं शतानन्दसुदायिने ।
शीलदाय च शीलाय शतधाराय शार्ङ्गिणे ।। १२०

शिलीमुखाय शर्वाय शरासनधराय च।
शिलीमुखधरायैव शीतरश्मिकराय च॥ १२१

सुराध्यक्षाय साध्याय सहस्रवदनाय च।
सहस्रनामधेयाय सहस्रचरणाय च॥ १२२

स्वप्रकाशाय श(स)र्वाय सर्वसाराय ते नमः।
सर्वदात्रे सर्वकर्त्रे सर्वज्ञाय नमो नमः॥ १२३

सर्वज्ञाय नमस्तुभ्यं नमस्ते सर्वसाक्षिणे।
सहस्राक्षाय रामाय सरःस्वामितटीजुषे॥ १२४

सदञ्जनगिरीशाय सदा वायुस्तुताय च।
त्यक्तवैकुण्ठलोकाय सनकादिस्तुताय च॥ १२५

शंखराजन्यनेत्राय (नयन) विषयाय नमो नमः।
सुवर्चलासुतन्यस्त सैनापत्य प्रदाय च॥ १२६

सुरामाय सुरेन्द्राय सुराधाराय ते नमः।
नमः स्वयं प्रकाशाय शाल्योदनप्रियाय च॥ १२७

शंकरप्रियमित्राय नमस्ते शेषशायिने।
शेषाद्रिशिखरस्थाय शेषपर्वतवासिने॥ १२८

सिंहाचलनिवासाय सुहृद्धर्माय ते नमः।
सर्वज्ञाय सुवर्णाय नमः सन्तोषदायिने॥ १२९

सिद्धराजाय साध्याय सिद्धाय सर्वदाय च।
सतीप्रियाय सांख्याय सांख्ययोगस्तुताय च॥ १३०

सर्वदात्रे च सर्वाय सार्वभौमाय ते नमः।
सर्वारिष्टविनाशाय सर्वदुःखविनाशिने॥ १३१

सर्वसंपत्करायैव सौभाग्यपददायिने।
सर्वाभिचारसंहर्त्रे सर्वोपद्रवनाशिने॥ १३२

सर्वज्ञाय शतानन्ददायिने भोगशालिने।
सर्वाधाराय गर्भाय सुखदाय नमो नमः॥ १३३

सेवाप्रियाय सेव्याय सतीनाथाय ते नमः।
सतीसेव्याय सत्याय सदसस्पतये नमः॥ १३४

सूर्यकोटिप्रकाशाय नमस्ते सर्वतेजसे।
सर्वग्रहविनाशाय सर्वोत्पातविघातिने॥ १३५

सुरसेव्याय सूर्याय शूरमुख्याय ते नमः।
सर्वेश्वराय सर्वाय नित्यं सत्पथगामिने॥ १३६

सत्पथीनाथसंख्याय सांख्ययोगकराय च।
स्वभावाय सुभावाय सुशाखाय च ते नमः॥ १३७

सुनखाय सुदन्ताय सुदाय सुरथाय च।
सुधासागर सेव्याय सुदाम्ने च सुधन्विने॥ १३८

सुन्दरीप्राणदात्रे च शूलहस्ताय ते नमः।
नमः सूकररूपाय शूराणामपि स्वामिने॥ १३९

सुवर्णाद्रिनिवासाय सालिग्रामनिवासिने।
नमः सर्वनिवासाय सरितां पतये नमः॥ १४०

सोमसूर्याग्निनेत्राय सुनेत्राय नमो नमः।
हरेः पूज्याय हरये हरीन्द्रेशाय ते नमः॥ १४१

पद्मकेशाय हरये हारकाय हराय च।
हव्यवाहनरूपाय नमस्ते हव्यमूर्तये॥ १४२

हरिमुद्राय रम्याय हरिदासविहारिणे।
हरिपूज्याय हास्याय नमस्ते हाटकाय च ।। १४३

हंसिने हंसपतये हंसानां पतये नमः ।
हेरंबाय च साध्याय हेरंबहृदयाय च ।। १४४

हेरम्बप्राण संहर्त्रे हेरंबगणकारिणे।
हूयमानाय ते नित्यं हलीशाय नमो नमः ।। १४५

हिरण्यवर्णदेहाय निःसङ्गाय च देहिने।
हिरण्यकेशसंहर्त्रे हिरण्यसदनाय च ।। १४६

नमो हिरण्यशृङ्गाय हिरण्यकवचाय च।
हरस्तुत्याय हृद्याय हरभारविनाशिने ।। १४७

हनुमत्प्राणदात्रे च हनुमत्सेविताय च।
हेमदाय नमस्तुभ्यं हेमसन्दर्शिने नमः ।। १४८

हेमाभाय हिमाभाय हिमाचलरताय च।
हेमप्रकृतिरूपाय हेमधाम्ने नमो नमः ।। १४९

नमो हेमाधिवासाय नमो हेमोत्तराय च।
हिमाचलसुतानाथस्तुताय परमात्मने ।। १५०

हव्याय हव्यवर्णाय नमस्ते हलधारिणे।
नमो हरितवर्णाय हविष्याय हविर्भुजे ।। १५१

हविर्नित्याय होत्रे च हाराद्याभरणाय च।
हरिचन्दन गोत्रेन्द्रस्वामिने भारहारिणे ।। १५२

लोकेशाय च लोकाय लक्ष्मीशाय नमो नमः ।
श्रीधराय नमस्तुभ्यं नमः श्रीशैलवासिने ।। १५३

नमस्ते श्रीनिवासाय भक्तश्रीकारिणे नमः।
श्रीप्रदाय नमस्तुभ्यं नमः श्रीपतये नमः ।। १५४

शुचिश्रवाय शुभ्राय नमस्ते श्रुतिमौलये।
श्रव्याय श्रुतिमूलाय श्रुतिरूपाय ते नमः ।। १५५

नमस्तेऽस्तु प्रचण्डाय प्रचण्डमुरघातिने।
परानन्दाय नन्दाय नमस्ते सर्वतेजसे।। १५६

श्रीगर्भाय नमस्तुभ्यं श्रीपराय नमो नमः ।
श्रीवासाय नमस्तुभ्यं नमः श्रीकारिणे नमः ।। १५७

ईश्वर उवाच—

इत्थं नामसहस्रं ते कथितं भूधरात्मजे।
वेङ्कटेशस्य देवस्य किमन्यच्छ्रोतुमिच्छसि।। १५८

पार्वत्युवाच—

जप्तव्यं केन विधिना कस्मिन्मासे महेश्वर।
कथं होमः प्रकर्तव्यः केन द्रव्येण तद्वद।। १५९

ईश्वर उवाच—

जप्तव्यमाश्विने मासि नवरात्रे सुनिश्चितम्।
तथा तिलाज्यद्रव्येण होमः कार्यः प्रयत्नतः ।। १६०

यस्त्विदं प्रत्यहं देवि भक्त्या जपति मानवः ।
त्रिकालं वा द्विकालं वा एककालमथापि च।। १६१

तस्य श्रीवेङ्कटाधीशः प्रसन्नो भवति क्षणात्।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम्।। १६२

जायार्थी लभते जायां एतत्स्तोत्रजपान्नरः ।
बन्धनान्मुच्यते बद्धो रोगाद्रोगी प्रमुच्यते।। १६३

निगडस्थः प्रबद्धो वा कारागारगतोऽपि वा।
शाकिनीडाकिनीत्युक्ता नीलबालग्रहादिकाः ।। १६४

दुष्टग्रह पिशाचाश्च चाण्डालग्रहसंज्ञकाः ।
अस्य स्तोत्रस्य पठनात्सर्वे नश्यन्ति ते ग्रहाः ।। १६५

एकं नामसहस्रं तु जपन्यो विचरेन्नरः ।
स एव देववत्पूज्यः सर्वकामार्थसिद्धये।। १६६

तत्तत्काममवाप्नोति सत्यमेतन्न संशयः ।
ब्रह्मोवाच—
इत्थं रुद्रेण कथितं पार्वत्यै तच्छ्रुतं मया।। १६७

तदुक्तं भवतामद्य सद्यः प्रीतिकरं हरेः ।
भवद्भिरपि जप्तव्यं स्तोत्रमेतन्मुनीश्वराः ।। १६८

स्वल्पैरेव दिनैः श्रीशः प्रसन्नस्तु भविष्यति।
गोपनीयं प्रयत्नेन न देयं कस्यचिद्वदेः ।। १६९

लिखित्वा यस्तु बध्नीयात्कण्ठे नामसहस्रकम्।
स तु सर्वत्र विषये पूज्यः सर्वत्र भूतले।। १७०

तस्य द्वारि सदैवास्ते सिद्ध्यष्टकमनुत्तमम्।
कश्यपप्रमुखाः सर्वे श्रुत्वा तु ब्रह्मणो गिरम्।
सन्तोषं परमं प्राप्य स्वस्वस्थानं गतास्तदा।। १७१

(पद्मपुराणतः)

अष्टशतनामान्येवोपलभ्यन्ते। यरलवाक्षरादिकानि न दृश्यन्ते। श्लोकसंख्या २१३ इति मूले। १५३ - १९६ श्लोका न दृश्यन्ते। अतो मूलकोशान्तरं मृग्यम्।। चतुर्थ्यन्तानि नमोऽन्तानि च नामानीति नामावली न दत्ता।)

# श्रीवेङ्कटेशाष्टोत्तरशतनामस्तोत्रम्

मुनयः

सूत सर्वार्थतत्त्वज्ञ सर्ववेदान्तपारग।
येन चाराधितः सद्यः श्रीमद्वेङ्कटनायकः ॥ १

भवत्यभीष्टसर्वार्थप्रदस्तद् ब्रूहि नो मुने।
इति पृष्टस्तदा सूतो ध्यात्वा स्वात्मनि तत्क्षणात् ॥ २

उवाच मुनिशार्दूलाञ्छ्रूयतामिति वै मुनिः।
श्री सूतः –
अस्ति किञ्चिन्महद्गोप्यं भगवत्प्रीतिकारकम् ॥ ३

पुरा शेषेण कथितं कपिलाय महात्मने।
नाम्नामष्टशतं पुण्यं पवित्रं पापनाशनम् ॥ ४

आदाय हेमपद्मानि स्वर्णदीसंभवानि च।
ब्रह्मा तु पूर्वमभ्यर्च्य श्रीमद्वेङ्कटनायकम् ॥ ५

अष्टोत्तरशतैर्दिव्यैः नामभिर्मुनिपूजितैः।
स्वभीष्टं लब्धवान् ब्रह्मा सर्वलोकपितामहः ॥ ६

भवद्भिरपि पद्मैश्च समर्च्यस्तैश्च नामभिः।
तेषां शेषनगाधीशमानसोल्लासकारिणाम् ॥ ७

नाम्नामष्टशतं वक्ष्ये वेङ्कटाद्रिनिवासिनः।
आयुरारोग्यदं पुंसां धनधान्यसुखप्रदम् ॥ ८

ज्ञानप्रदं विशेषेण महदैश्वर्यकारकम्।
अर्चयेन्नामभिर्दिव्यैः वेङ्कटेशपदाङ्कितैः ॥ ९

नाम्नामष्टशतस्यास्य ऋषिर्ब्रह्मा प्रकीर्तितः ।
छन्दोऽनुष्टुप्तथा देवो वेङ्कटेश उदाहृतः ।। १०

नीलगोक्षीरसंभूतो बीजमित्युच्यते बुधैः ।
श्रीनिवासस्तथा शक्तिर्हृदयं वेङ्कटाधिपः ।। ११

विनियोगस्तथाऽभीष्टसिद्ध्यर्थे च निगद्यते ।
ओं नमो वेङ्कटेशाय शेषाद्रिनिलयाय च ।। १२

वृषद्दग्गोचरायाथ विष्णवे सततं नमः ।
सदञ्जनगिरीशाय वृषाद्रिपतये नमः ।। १३

मेरुपुत्रगिरीशाय सरःस्वामितटीजुषे ।
कुमाराकल्पसेव्याय वज्रिदृग्विषयाय च ।। १४

सुवर्चलासुतन्यस्तसैनापत्यभराय च ।
रामाय पद्मनाभाय सदा वायुस्तुताय च ।। १५

त्यक्तवैकुण्ठलोकाय गिरिकुञ्जविहारिणे ।
हरिचन्दनगोत्रेन्द्रस्वामिने सततं नमः ।। १६

शङ्खराजन्यनेत्राब्जविषयाय नमो नमः ।
वसूपरिचरत्रात्रे कृष्णाय सततं नमः ।। १७

अब्धिकन्यापरिष्वक्तवक्षसे वेङ्कटाय च ।
सनकादिमहायोगिपूजिताय नमो नमः ।। १८

देवजित्प्रमुखानन्तदैत्यसङ्घप्रणाशिने ।
श्वेतद्वीपवसन्मुक्तपूजिताङ्घ्रियुगाय च ।। १९

शेषपर्वतरूपत्वप्रकाशनपराय च ।
सानुस्थापितताक्ष्र्याय ताक्ष्र्याचलनिवासिने ।। २०

मायागूढविमानाय गरुडस्कन्धवासिने।
अनन्तशिरसे नित्यमनन्ताक्षाय ते नमः ।। २१

अनन्तचरणायाथ श्रीशैलनिलयाय च।
दामोदराय ते नित्यं नीलमेघनिभाय च ।। २२

ब्रह्मादिदेवदुर्दर्शविश्वरूपाय ते नमः ।
वैकुण्ठागतसद्धेमविमानान्तर्गताय च ।। २३

अगस्त्याभ्यर्थिताशेषजनदृग्गोचराय च।
वासुदेवाय हरये तीर्थपञ्चकवासिने ।। २४

वामदेवप्रियायाथ जनकेष्टप्रदाय च।
मार्कण्डेयमहातीर्थं जातपुण्यप्रदाय च ।। २५

वाक्पतिब्रह्मदात्रे च चन्द्रलावण्यदायिने।
नारायणनगेशाय ब्रह्मक्लृप्तोत्सवाय च ।। २६

शङ्खचक्रवरानम्रलसत्करतलाय च।
द्रवन्मृगमदासक्तविग्रहाय नमो नमः ।। २७

केशवाय नमो नित्यं नित्ययौवनमूर्तये।
अर्थितार्थप्रदात्रे च विश्वतीर्थाघहारिणे ।। २८

तीर्थस्वामिसरःस्नातजनाभीष्टप्रदायिने।
कुमारधारिकावासस्कन्दाभीष्टप्रदाय च ।। २९

जानुदघ्नसमुद्भूतपोत्रिणे कूर्ममूर्तये।
किन्नरद्वन्द्वशापान्तप्रदात्रे विभवे नमः ।। ३०

वैखानसमुनिश्रेष्ठपूजिताय नमो नमः ।
सिंहाचलनिवासाय श्रीमन्नारायणाय च ।। ३१

सद्भक्तनीलकण्ठार्च्य नृसिंहाय नमो नमः ।
कुमुदाक्षगणश्रेष्ठसैनापत्यप्रदाय च ।। ३२

दुर्मेधःप्राणहर्त्रे च श्रीधराय नमो नमः ।
क्षत्रियान्तकरामाय मत्स्यरूपाय ते नमः ।। ३३

पाण्डवारिप्रहर्त्रे च श्रीकराय नमो नमः ।
उपत्यकाप्रदेशस्थशङ्करध्यातमूर्तये ।। ३४

रुक्माब्जसरसीकूललक्ष्मीकृततपस्विने ।
लसल्लक्ष्मीकराम्भोजदत्तकल्हारकस्रजे ।। ३५

शालग्रामनिवासाय शुकदृग्गोचराय च ।
नारायणार्थिताशेषजनदृग्विषयाय च ।। ३६

मृगयारसिकायाथ वृषभासुरहारिणे ।
अञ्जनागोत्रपतये वृषभाचलवासिने ।। ३७

अञ्जनासुतदात्रे च माधवीयाघहारिणे ।
प्रियङ्गुप्रियभक्षाय श्वेतकोलवराय च ।। ३८

नीलधेनुपयोधारासेकदेहोद्भवाय च ।
शङ्करप्रियमित्राय चोलपुत्रप्रियाय च ।। ३९

सुधर्मिणीसुचैतन्यप्रदात्रे मधुघातिने ।
कृष्णाख्यविप्रवेदान्तदेशिकत्वप्रदाय च ।। ४०

वराहाचलनाथाय बलभद्राय ते नमः ।
त्रिविक्रमाय महते हृषीकेशाय ते नमः ।। ४१

अच्युताय नमो नित्यं नीलाद्रिनिलयाय च।
नमः क्षीराब्धिनाथाय वैकुण्ठाचलवासिने ॥ ४२

मुकुन्दाय नमो नित्यमनन्ताय नमो नमः।
विरिञ्चाभ्यर्थितानीतसौम्यरूपाय ते नमः ॥ ४३

सुवर्णमुखरीस्नातमनुजाभीष्टदायिने।
हलायुधजगत्तीर्थसमस्तफलदायिने ॥ ४४

गोविन्दाय नमो नित्यं श्रीनिवासाय ते नमः।
अष्टोत्तरशतं नाम्नां चतुर्थ्या नमसाऽन्वितम् ॥ ४५

यः पठेच्छृणुयान्नित्यं श्रद्धाभक्तिसमन्वितः।
तस्य श्रीवेङ्कटेशस्तु प्रसन्नो भवति ध्रुवम् ॥ ४६

अर्चनायां विशेषेण ग्राह्यमष्टोत्तरं शतम्।
वेङ्कटेशाभिधेयैर्यो वेङ्कटाद्रिनिवासिनम् ॥ ४७

अर्चयेन्नामभिस्तस्य फलं मुक्तिर्न संशयः।
गोपनीयमिदं स्तोत्रं सर्वेषां न प्रकाशयेत् ॥ ४८

श्रद्धाभक्तियुजामेव दापयेन्नामसंग्रहम्।
इति शेषेण कथितं कपिलाय महात्मने ॥ ४९

कपिलाख्यमहायोगिसकाशात्तु मया श्रुतम्।
तदुक्तं भवतामद्य सद्यः प्रीतिकरं हरेः ॥ ५०

—वराहपुराणतः



## वेङ्कटेशाष्टोत्तरशतरशतनामावलिः

(प्रतिनाम श्रीवेङ्कटेशायेति योजयन्ति।)

ओं श्री वेङ्कटेशाय नमः। शेषाद्रिनिलयाय। वृषदृग्गोचराय। विष्णवे। सदञ्जनगिरीशाय। वृषाद्रिपतये। मेरुपुत्रगिरीशाय। सरःस्वामितटीजुषे। कुमाराकल्पसेव्याय। वज्रिदृग्विषयाय। सुवर्चलासुतन्यस्तसैनापत्यभराय। रामाय। पद्मनाभाय। सदा वायुस्तुताय। त्यक्तवैकुण्ठलोकाय। गिरिकुञ्जविहारिणे। हरिचन्दनगोत्रेन्द्रस्वामिने। शङ्खराजन्यनेत्राब्जविषयाय। वसूपरिचरत्रात्रे। कृष्णाय नमः॥ २०

ओं अब्धिकन्यापरिष्वक्तवक्षसे नमः। वेङ्कटाय। सनकादिमहायोगिपूजिताय। देवजित्प्रमुखानन्तदैत्यसंघप्रणाशिने। श्वेतद्वीपवसन्मुक्तपूजितांघ्रियुगाय। शेषपर्वतरूपत्वप्रकाशनपराय। सानुस्थापिततार्क्ष्याय। तार्क्ष्याचलनिवासिने। मायागूढविमानाय। गरुडस्कन्धवासिने। अनन्तशिरसे। अनन्ताक्षाय। अनन्तचरणाय। श्रीशैलनिलयाय। दामोदराय। नीलमेघनिभाय। ब्रह्मादिदेवदुर्दर्शविश्वरूपाय। वैकुण्ठागतसद्धेमविमानान्तर्गताय। अगस्त्याभ्यर्थिताशेषजनदृग्गोचराय। वासुदेवाय नमः॥ ४०

ओं हरये नमः। तीर्थपञ्चकवासिने। वामदेवप्रियाय। जनकेष्टप्रदाय। मार्कण्डेयमहातीर्थजातपुण्यप्रदाय। वाक्पतिब्रह्मदात्रे। चन्द्रलावण्यदायिने। नारायणनगेशाय। ब्रह्मक्लृप्तोत्सवाय। शंखचक्रवरानम्रलसत्करतलाय। द्रवन्मृगमदासक्तविग्रहाय। केशवाय। नित्ययौवनमूर्तये।

अर्थितार्थप्रदात्रे । विश्वतीर्थाघहारिणे । तीर्थस्वामिसरः-स्नातमनुजाभीष्टदायिने । कुमारधारिकावासस्कन्दा-भीष्टप्रदायिने । जानुदघ्नसमुद्भूतपोत्रिणे । कूर्ममूर्तये । किन्नरद्वन्द्वशापान्तप्रदात्रे नमः ॥ ६०

ओं विभवे नमः । वैखानसमुनिश्रेष्ठपूजिताय । सिंहा-चलनिवासाय । श्रीमन्नारायणाय । सद्भक्तनीलकण्ठार्च्यनृ-सिंहाय । कुमुदाक्षगणश्रेष्ठसैनापत्यप्रदाय । दुर्मेधःप्राण-हन्त्रे । श्रीधराय । क्षत्रियान्तकरामाय । मत्स्यरूपाय । पाण्डवारिप्रहर्त्रे । श्रीकराय । उपत्यकाप्रदेशस्थशङ्करध्यात-मूर्तये । रुक्माब्जसरसीकूललक्ष्मीकृततपस्विने । लसल्लक्ष्मी-कराम्भोजदत्तकह्लारकस्रजे । सालग्रामनिवासाय । शुक-दृग्गोचराय । नारायणार्थिताशेषजनदृग्विषयाय । मृगयार-सिकाय । वृषभासुरहारिणे नमः ॥ ८०

ओं अञ्जनागोत्रपतये नमः । वृषभाचलवासिने । अञ्जनासुतदात्रे । माधवीयाघहारिणे । प्रियंगुप्रियभक्षाय । श्वेतकोलवराय । नीलधेनुपयोधारासेकदेहोद्भवाय । शङ्कर-प्रियमित्राय । चोलपुत्रप्रियाय । सुधर्मिणीसुचैतन्यप्रदात्रे । मधुघातिने । कृष्णाख्यविप्रवेदान्तदेशिकत्वप्रदाय । वराहाचलनाथाय । बलभद्राय । त्रिविक्रमाय । महते । हृषीकेशाय । अच्युताय । नीलाद्रिनिलयाय । क्षीराब्धि-नाथाय नमः ॥ १००

ओं वैकुण्ठाचलवासिने नमः । मुकुन्दाय । अनन्ताय । विरिञ्चाभ्यर्थनानीतसौम्यरूपाय । सुवर्णमुखरी स्नातमनुजाभीष्टदायिने । हलायुधजगत्तीर्थसमस्तफल-दायिने । गोविन्दाय । श्रीनिवासाय नमः ॥ १०८

# श्री विट्ठलसहस्रनामस्तोत्रम्

शौनक उवाच

सूत वेदार्थतत्वज्ञ श्रुतं सर्वं भवन्मुखात्।
तथापि श्रोतुमिच्छामि तीर्थं क्षेत्रञ्च दैवतम्।। १

स्तोत्रं च जगतां पूज्य मूढानामपि मोक्षदम्।
स्नानात् दर्शनतः स्मृत्या पाठमात्राच्छुभप्रदम्।। २

सूत उवाच—

स्मारितोऽहं हरेस्तीर्थं स्तोत्रं क्षेत्रं च दैवतम्।
स क्षणः सफलो यत्र स्मर्यते मधुसूदनः ।। ३

कयापि वृत्त्या विप्रेन्द्र तत् सर्वं कथयामि ते।
जनं कलिमलाक्रान्तं दृष्ट्वा विषयलालसम्।। ४

ज्ञानानधिकृतं कर्मविहीनं भक्तवत्सलः।
चन्द्रभागासरस्तीरे पितृभक्तिपरं द्विजम्।। ५

पुण्डरीकाभिधे क्षेत्रे भीमयाप्लाविते ततः।
पुण्डरीकाभिधं शान्तं निमित्तीकृत्य माधवः ।। ६

आविरासीत् समुद्धर्तुम् जनं कलिमलाकुलम्।
तत् तीर्थं चन्द्रभागाख्यं स्नानमात्रेण मोक्षदम्।। ७

तत् क्षेत्रं पाण्डुरङ्गाख्यं दर्शनान्मोक्षदायकम्।
तत् दैवतं विठ्ठलाख्यं जगत्कारणमव्ययम्।। ८

स्थितिप्रलययोर्हेतुं भक्तानुग्रहविग्रहम्।
सत्यज्ञानानन्दमयं ठानज्ञांलाति ? यद्विदा।। ९

यन्नामस्मरणादेव कामाक्रान्तोऽपि सन्तरेत्।
पुण्डरीकेण मुनिना प्राप्तं तद् दर्शनेन यत्॥ १०

शौनक उवाच—

सहस्रनामभिः स्तोत्रं कृतं वेदविदुत्तम।
सकृत्पठनमात्रेण कामितार्थ श्रुतप्रदम्॥ ११

तीर्थं क्षेत्रं दैवतं च त्वत्प्रसादात् श्रुतं मया।
इदानीं श्रोतुमिच्छामि स्तोत्रं तव मुखाम्बुजात्॥ १२

सच्चित्सुखस्वरूपोपि भक्तानुग्रहहेतवे।
कीदृशं धृतवान् रूपं कृपयाऽऽचक्ष्व तन्मम॥ १३

सूत उवाच—

शृणुष्वावहितो ब्रह्मन् भगवद्ध्यानपूर्वकम्।
सहस्रनाम सन्मन्त्रं सर्वमन्त्रोत्तमोत्तमम्॥ १४

अस्य श्रीविठ्ठलसहस्रनामस्तोत्रमन्त्रस्य श्रीपुण्डरीक ऋषिः। श्रीगुरुः परमात्मा श्री विठ्ठलो देवता। अनुष्टुप् छन्दः। पुण्डरीकवरप्रद इति बीजं। रुक्मिणीशो रमापतिरिति शक्तिः। पाण्डुरङ्गेश इति कीलकम्। श्री विठ्ठलप्रीत्यर्थं विठ्ठल सहस्रनाम स्तोत्रमन्त्रजपे विनियोगः। ओं पुण्डरीक वरप्रद इति अङ्गुष्ठाभ्यां नमः। ओं विठ्ठलः पाण्डुरंगेश इति तर्जनीभ्यां नमः। ओं चन्द्रभागासरोवासः इति मध्यमाभ्यां नमः। ओं वज्री शक्तिर्दण्डधरः इति अनामिकाभ्यां नमः। ओं कलवंशरवाक्रान्त इति कनिष्ठिकाभ्यां नमः। ओं एनोन्तकृन्नामधेयः इति करतलकरपृष्ठाभ्यां नमः॥ एवं हृदयादिन्यासः। ध्यानम्—

इष्टिकायां समपदं तिष्ठन्तं पुरुषोत्तमम् ।
जङ्घजस्थकरद्वन्द्वं क्षुल्लकादामभूषणम् ।। १५

सव्यासव्यकरोद्धासिपद्मशङ्खविभूषितम् ।
दरहासस्मेरमुखं शिक्यस्कन्धं दिगम्बरम् ।। १६

सर्वालङ्कारसंयुक्तं ब्रह्मादिगणसेवितम् ।
ज्ञानानन्दमयं देवं ध्यायामि हृदि विट्ठलम् ।। १७

क्लीं विट्ठलः पाण्डुरङ्गेश ईशः श्रीशो विशेषजित् ।
शेषशायी शम्भुवन्द्यः शरण्यः शङ्कर प्रियः ।। १

चन्द्रभागा सरोवासः कोटिचन्द्रप्रभास्मितः ।
विधातृसूचितः सर्वप्रमाणातीत अव्ययः ।। २

पुण्डरीकस्तुतो वन्द्यो भक्तचित्तप्रसादकः ।
स्वधर्मनिरतः प्रीतो गोगोपीपरिवारितः ।। ३

गोपिकाशतनीराज्यः पुलिनाक्रीड आत्मभूः ।
आत्मात्माराम आत्मस्थः आत्मारामनिषेवितः ।। ४

सच्चित्सुखं महामायी महदव्यक्तमद्भुतः ।
स्थूलरूपः सूक्ष्मरूपः कारणं परमञ्जनम् ।। ५

महाकारणमाधारः अधिष्ठानं प्रकाशकः ।
कञ्जपादो रक्तनखो रक्तपादतलः प्रभुः ।। ६

साम्राज्य चिह्नितपादो नीलगुल्फः सुजङ्घकः ।
सज्जानुः कदलीस्तम्भनिभोरुरुरुविक्रमः ।। ७

पीताम्बरावृतकटिः क्षुल्लका दामभूषणः ।
कटिविन्यस्तहस्ताब्जः शङ्खी पद्मविभूषितः ।। ८

गम्भीरनाभिर्ब्रह्माधिष्ठितनाभिसरोरुहः।
त्रिवलीमण्डितोदारोदरोमावलिमालिनः॥ ९

कपाटवक्षाः श्रीवत्सभूषितोराः कृपाकरः।
वनमाली कम्बुकण्ठः सुस्वरः सामलालसः॥ १०

कञ्जवक्त्रः श्मश्रुहीनचुबुको वेद जिह्वकः।
दाडिमीबीज सदृशरदो रक्ताधरो विभुः॥ ११

नासामुक्तापाटलिताधरच्छविररिन्दमः।
शुकनासः कञ्जनेत्रः कुण्डलाक्रमितांसकः॥ १२

महाबाहुर्घनभुजः केयूराङ्गदमण्डितः।
रत्नभूषितभूषाढ्य मणिबन्धः सुभूषणः॥ १३

रक्तपाणितलः स्वङ्गः सन्मुद्रामण्डिताङ्गुलिः।
नखप्रभा रञ्जिताब्जः सर्वसौन्दर्यमण्डितः॥ १४

सुभ्रूरर्धशशिप्रख्यललाटः कामरूपधृक्।
कुङ्कुमाङ्कितसद्भालः सुकेशो बर्हभूषणः॥ १५

किरीटभाव्याप्तनभो विकलीकृतभास्करः।
वनमाली पीतवासाः शार्ङ्गचापोऽसुरान्तकः॥ १६

दर्पापहः कंसहन्ता चाणूरमुरमर्दनः।
वेणुवादनसन्तुष्टो दध्यन्नास्वादलोलुपः॥ १७

जितारिः कामजनकः कामहा कामपूरकः।
विक्रोधो दारितामित्रो भूर्भुवःसुवरादिराट्॥ १८

अनादिरजनिर्जन्यजनको जाह्नवीपदः।
बहुजन्मा जामदग्न्यः सहस्रभुजखण्डनः॥ १९

कोदण्डधारी जनकपूजितः कमलाप्रियः ।
पुण्डरीकभवद्वेषी पुण्डरीकभवप्रियः ।। २०

पुण्डरीकस्तुतिरसः सद्भक्तपरिपालकः ।
सुषुमालासङ्गमस्थो गोगोपीचित्तरञ्जनः ।। २१

इष्टिकास्थो भक्तवश्यस्त्रिमूर्तिर्भक्तवत्सलः ।
लीलाकृतजगद्धामा जगत्पालो हरो विराट् ।। २२

अश्वत्थपद्मतीर्थस्थो नारदस्तुतवैभवः ।
प्रमाणातीततत्वज्ञस्तत्वंपदनिरूपितः ।। २३

अजाजनिरजाजानिरजायो नीरजोऽमलः ।
लक्ष्मीनिवासः स्वर्भूषो विश्ववन्द्यो महोत्सवः ।। २४

जगद्योनिरकर्ताऽऽद्यो भोक्ता भोग्यो भवातिगः ।
षड् गुणैश्वर्य संपन्नो भगवान् मुक्तिदायकः ।। २५

अधः प्राणो मनो बुद्धिः सुषुप्तिः सर्वगो हरिः ।
मत्स्यः कूर्मो वराहोऽन्त्रि वामनो हरिरूपधृत् ।। २६

नारसिंह ऋषि र्व्यासो रामो नीलांशुको हली ।
बुद्धोऽर्हन् सुगतः कल्की नरो नारायणः परः ।। २७

परात्परः करीड्येशो नक्रशापविमोचनः ।
नारदोक्ति प्रतिष्ठाता मुक्तकेशी वरप्रदः ।। २८

चन्द्रभागाप्सु सुस्नातः कामितार्थप्रदोऽनघः ।
तुलसीदामभूषाढ्यस्तुलसीकाननप्रियः ।। २९

पाण्डरङ्गः क्षेत्रमूर्तिः सर्वमूर्तिरनामयः ।
पुण्डरीकव्याजकृतजडोद्धारः सदागतिः ।। ३०

अगतिः सद्गतिः सभ्यो भवो भव्यो विधीडितः ।
प्रलम्बघ्नो द्रुपदजाचिन्ताहारी भयापहः ।। ३१

वह्निवक्त्रः सूर्यनुतो विष्णुस्त्रैलोक्यरक्षकः ।
जगद्भक्ष्यो जगद्देहो जनाराध्यो जनार्दनः ।। ३२

जेता विष्णुर्वरारोहो भीष्मपूज्यपदाम्बुजः ।
भर्ता भीष्मकसंपूज्यः शिशुपालवधोद्यतः ।। ३३

शतापराधसहनः क्षमावानादिपूजनः ।
शिशुपाल शिरश्छेत्ता दन्तवक्त्रबलापहः ।। ३४

शिशुपालकृतद्रोहः सुदर्शनविमोचनः ।। ३५

सश्रीः समायो दामेन्द्रः सुदामक्रीडनोत्सुकः ।
वसुदामकृलक्रीडः किङ्किणीदामसेवितः ।। ३६

पञ्चांगपूजनरतः शुद्धचित्तवशं वदः ।
रुक्मिणीवल्लभः सत्यभामाभूषित विग्रहः ।। ३७

नाग्नजित्या कृतोत्साहः सुनन्दाचित्तमोहनः ।
मित्रवृन्दालिङ्गिताङ्गो ब्रह्मचारी वटुप्रियः ।। ३८

सुलक्षणाधौतपदो जाम्बवत्या कृतादरः ।
सुशीलाशीलसन्तुष्टो जलकेलिकृतादरः ।। ३९

वासुदेवो देवकीड्यो नन्दानन्दकरांघ्रियुक् ।
यशोदामानसोल्लासो बलावरजनिः स्वभूः ।। ४०

सुभद्रानन्ददो गोपवश्यो गोपीप्रियोऽजयः ।
मन्दारमूलवेदिस्थः सन्तानतरुसेवितः ।। ४१

पारिजातापहरणः कल्पद्रुमपुरःसरः ।
हरिचन्दनलिप्ताङ्ग इन्द्रवन्द्योऽग्निपूजितः ।। ४२

यमनेला नैर् ऋतेयो वरुणेशः खगप्रियः ।
कुबेरवन्द्य ईशेशो विधीड्योऽनन्तवन्दितः ।। ४३

वज्री शक्तिर्दण्डधरः खड्गी पाशयङ्कुशी गदी ।
त्रिशूली कमली चक्री सत्यव्रतमयो नवः ।। ४४

महामन्त्रः प्रणवभूर्भक्तचिन्तापहारकः ।
स्वक्षेत्रवासी सुखदः कामी भक्तविमोचनः ।। ४५

स्वनाम कीर्तनप्रीतः क्षेत्रेशः क्षेत्रपालकः ।
कामश्चक्रधरार्धस्य(श्च) त्रिविक्रममयात्मकः ।। ४६

प्रज्ञानकरजित्कान्तिरूपवर्णः स्वरूपवान् ।
स्पर्शेन्द्रियं शौरिमयो वैकुण्ठः सानिरुद्धकः ।। ४७

षडक्षरमयो बालः श्रीकृष्णो ब्रह्मभावितः ।
नारदाधिष्ठितक्षेमो वेणुवादनतत्परः ।। ४८

नारदेशप्रतिष्ठाता गोविन्दो गरुडध्वजः ।
साधारणः समः सौम्यः कलावान् कमलालयः ।। ४९

क्षेत्रपः क्षणदाधीशवक्त्रः क्षेमकरक्षणः ।
लवो लवणिमा धाम लीलावान् लघुविग्रहः ।। ५०

हयग्रीवो हली हंसो हतकंसो हलिप्रियः ।
सुन्दरः सुगतिर्मुक्तः सत्सखा सुलभःस्वभूः ।। ५१

साम्राज्यदः सामराजः सत्ता सत्यः सुलक्षणः ।
षड्गुणैश्वर्य निलयः षडृतुपरिसेवितः ।। ५२

षडङ्गशोधितः षोढा षड्दर्शननिरूपितः ।
शेषतल्पः शतमखः शरणागतवत्सलः ।। ५३

सशंभुः समितिः शङ्खवहः शार्ङ्गसुचापधृत्।
वह्नितेजा वारिजास्यः कविर्वंशीधरो विगः ॥ ५४

विनीतो विप्रियो वालिदलनो वज्रभूषणः।
रुक्मिणीशो रमाजानी राजा राजन्यभूषणः ॥ ५५

रति प्राणप्रियपिता रावणान्तो रघूद्वहः।
यज्ञभोक्ता यमो यज्ञभूषणो यज्ञदूषणः ॥ ५६

यज्वा यशोवान् यमुनाकूलकुञ्जप्रियो यमी।
मेरुर्मनीषी महितो मुदितः श्यामविग्रहः ॥ ५७

मन्दगामी मुग्धमुखो महेशो मीनविग्रहः।
भीमो भीमांगजातीरवासी भीमार्तिभञ्जनः ॥ ५८

भूभारहरणो भूतभावनो भरताग्रजः।
वलं बलप्रियो बालो बालक्रीडनतत्परः ॥ ५९

बकासुरान्तको बाणासुरदर्पकवाडवः।
बृहस्पतिर्बलारातिसूनुर्बलिवरप्रदः ॥ ६०

बोद्धा बन्धुवधोद्युक्तो बन्धमोक्षप्रदो बुधः।
फाल्गुनानिष्टहा फल्गुकृताराातिः फल प्रदः ॥ ६१

फेनजातैरकावज्रकृतयादवसङ्क्षयः।
फाल्गुनोत्सवसंसक्तः फणितल्पः फणानटः ॥ ६२

पुण्यः पवित्रः पापात्मदूरगः पण्डिताग्रणीः।
पोषणः पुलिनावासः पुण्डरीकमनोर्वशः ॥ ६३

निरन्तरो निराकांक्षो निरातङ्को निरञ्जनः।
निर्विण्णमानसोल्लासो नयनानन्दनः सताम् ॥ ६४

नियमो नियमी नम्यो नन्दबन्धनमोचनः ।
निपुणो नीतिमान्नेता नरनारायणवपुः ॥ ६५

धेनुकासुरविद्वेषी धाम धाता धनी धनम् ।
धन्यो धन्यप्रियो धर्ता धीमान् धर्मविदुत्तमः ॥ ६६

धरणीधरसन्धर्ता धराभूषितदंष्ट्रकः ।
दैतेयहन्ता दिग्वासा देवो देवशिखामणिः ॥ ६७

दाम दाता दीप्तिभानुः दानवादमिता दमः ।
स्थिरकार्यः स्थितप्रज्ञः स्थविर स्थापकः स्थितिः ।
स्थितलोकत्रयवपुः स्थितिप्रलयकारणम् ॥ ६८

स्थापकस्तीर्थचरणस्तर्पकस्तरुणीरसः ।
तारुण्यकेलिनिपुणस्तरणस्तरणिप्रभुः ॥ ६९

तोयमूर्तिस्तमोतीतःस्तम्भोद्भूतस्तपःपरः ।
तडिद्वासास्तोयदाभस्तारस्तारस्वरप्रियः ॥ ७०

णकारो ढौकितजगत्त्रितूर्य प्रीत भूसुरः ।
डमरूप्रिय ऋद्धासी डिण्डिमध्वनिगोचरः ॥ ७१

ठयुगस्थ मनोर्गम्यः ठङ्कारि धनुरायुधः ।
टणत्कारितकोदण्डहतारिर्गणसौख्यदः ॥ ७२

झाङ्कारिचाञ्चरीकाङ्की श्रुति कल्हारभूषणः ।
जरासन्धार्दितजगत्सुखभूर्जंगमात्मकः ॥ ७३

जगज्जनिर्जगद्भूषो जानकीविरहाकुलः ।
जिष्णुशोकापहरणो जन्महीनो जगत्पतिः ॥ ७४

छत्रिताहीन्द्रसुभगः छद्मी छत्रितभूधरः ।
छायास्थलोकत्रितयछलेन बलिनिग्रही ।। ७५

चेतश्चमत्कारकरः चित्री चित्रस्वभाववान् ।
चारुभूश्चन्द्रचूडश्च चन्द्रकोटिसमप्रभः ।। ७६

चूडारत्नद्योति भालश्चलन्मकर कुण्डलः ।
चरुभुक् चयन प्रीतश्चंपकाटविमध्यगः ।। ७७

चाणूरहन्ता चन्द्राङ्कनाशनश्चन्द्रदीधितिः ।
चन्दनालिप्त सर्वाङ्गश्चारुचामरमण्डितः ।। ७८

घनश्यामो घनरवो घटोत्कचपितृप्रियः ।
घनस्तनीपरीवारो घनवाहनगर्वहा ।। ७९

गङ्गापदो गतक्लेशो गतक्लेशनिषेवितः ।
गणनाथो गजोद्धर्ता गायको गायनप्रियः ।। ८०

गोपतिर्गोपिकावश्यो गोपबालानुगः पतिः ।
गणकोटिपरीवारो गम्यो गगननिर्मलः ।। ८१

गायत्रीजपसंप्रीतो गण्डकीस्थो गुहाशयः ।
गुहारण्यप्रतिष्ठाता गुहासुरनिषूदनः ।। ८२

गीत कीर्तिर्गुणारामो गोपालो गुणवर्जितः ।
गोप्रियो गोचरप्रीतो गाननाट्यप्रवर्तकः ।। ८३

खड्गायुधः खरद्वेषी खातीतः खगमोचनः ।
खगपुच्छकृतोत्तंसः खेलद्बालकृतप्रियः ।। ८४

खट्वाङ्गपोथितारातिः खञ्जनाक्षः खशीर्षकः ।
कलवंशरवाक्रान्तगोपीविस्मारितार्भकः ।। ८५

कलिप्रमाथी कञ्जास्यः कमलायत लोचनः।
कालनेमिप्रहरणः कुण्ठितार्तिकिशोरकः ॥ ८६

केशवः केवलः कण्ठीरवास्यः कोमलाङ्घ्रियुक्।
कम्बली कीर्तिमान् कान्तः करुणामृतसागरः ॥ ८७

कुब्जासौभाग्यदः कुब्जाचन्दनालिप्तगात्रकः।
कालः कुवलयापीडहन्ता क्रोधसमाकुलः ॥ ८८

कालिन्दीपुलिनाक्रीडः कुञ्जकेलिकूतूहली।
काञ्चनं कमलाजानिः कलाज्ञः कामितार्थदः ॥ ८९

कारणं करणातीतः कृपापूर्णः कलानिधिः।
क्रियारूपः क्रियातीतः कालरूपः क्रतुप्रभुः ॥ ९०

कटाक्षस्तंभितारातिः कुटिलालक भूषितः।
कूर्माकारः कालरूपी करीर वन मध्यगः ॥ ९१

कलकण्ठी कलरवः कलकण्ठरुतानुकृत्।
करद्वारपुरः कूटः सर्वेषां कवलप्रियः ॥ ९२

कलिकल्मषहा क्रान्तगोकुलः कुलभूषणः।
कूटारिः कुतुपः कीश परिवारः कविप्रियः ॥ ९३

कुरुवन्द्यः कठिनदोर्दण्डखण्डितभूभरः।
किङ्करप्रियकृतत्कर्मरतभक्तप्रियङ्करः ॥ ९४

अम्बुजास्योऽङ्गनाकेलिरम्बुशाय्यम्बुधिस्तुतः।
अम्भोजमाल्यम्बुवाहलसदङ्गोऽन्त्रमालकः ॥ ९५

औदुम्बरफलप्रख्यब्रह्माण्डावलि चालकः।
ओष्ठस्फुरन्मुरलिकारवाकर्षितगोकुलः ॥ ९६

ऐरावतसमारुढ ऐन्द्रीशोकापहारकः ।
ऐश्वर्यावधिरैश्वर्यमैश्वर्याष्टदलस्थितः ।। ९७

एण शाब समानाक्ष एधस्तोषित पावकः ।
एनोऽन्त कृन्नामधेय स्मृति संसृतिदर्पहा ।। ९८

लूनपञ्चक्लेशपदो लूतातन्तुजगत्कृतिः ।
लुप्तदृश्यो लुप्तजगज्जयो लुप्तसुपावकः ।। ९९

रूपातीतो रूपनामरूपमायादिकारणम् ।
ऋणहीन ऋद्धिकारी ऋणातीत ऋतंवदः ।। १००

उषानिमित्तबाणघ्न उषाहार्यूर्जिताशयः ।
ऊर्ध्वरूपोर्ध्वाधरग ऊष्मदग्धजगत्त्रयः ।। १०१

उद्धवत्राणनिरत उद्धवज्ञानदायकः ।
उद्धर्तोद्भव उन्निद्र उद्बोध उपरिस्थितः ।। १०२

उदधिक्रीड उदधितनयाप्रिय उत्सवः ।
उच्छिन्नदेवतारातिरुदध्यावृतिमेखलः ।। १०३

ईतिघ्न ईशिता ईज्य ईड्य ईहाविवर्जितः ।
ईशध्येयपदाम्भोज इन ईन विलोचनः ।। १०४

इन्द्र इन्द्रानुजनट इन्दिराप्राणवल्लभः ।
इन्द्रादिस्तुत इन्द्रश्रीरिदमित्थमभीतकृत् ।। १०५

आनन्दाभास आनन्द आनन्दनिधिरात्मदृक् ।
आयुरार्तिघ्न आयुष्य आदिरामयवर्जितः ।। १०६

आदिकारणमाधार आधारादिकृताश्रयः ।
अच्युतैश्वर्यं अमित अरिनाश अघान्तकृत् ।। १०७

अन्नप्रदोऽन्नमखिलाधार अच्युत अब्जभृत् ।
चन्द्रभागाजलक्रीडासक्तो गोपविचेष्टितः ।। १०८

हृदयाकारहृद्भूषो यष्टिमान् गोकुलानुगः ।
गवां हुंकृतिसंप्रीतो गवालीढ पदांबुजः ।। १०९

गोगोपत्राणसुश्रान्त अश्रमी गोपवीजितः ।
पाथेयाशनसंप्रीतः स्कन्धशिक्यो मुखाम्बुपः ।। ११०

क्षेत्रपारोपितक्षेत्रो रक्षोधिकृत भैरवः ।
कार्य कारणसंघातस्ताटकान्तस्तु रक्षहा ।। १११

हन्ता तारापति स्तुत्यो यक्षः क्षेत्रं त्रयीवपुः ।
प्राञ्जलि र्लोलनयनो नवनीताशनप्रियः ।। ११२

यशोदातर्जितः क्षीरतस्करो भाण्डभेदनः ।
मुखाशनो मातृवश्यो मातृदृश्यमुखांतरः ।। ११३

व्यात्तवक्त्रो गतभयो मुख लक्ष्यजगत्त्रयः ।
यशोदास्तुतिसंप्रीतो नन्द विज्ञातवैभवः ।। ११४

संसारनौकाधर्मज्ञो ज्ञाननिष्ठो धनार्जकः ।
कुबेरः क्षत्रनिधनं ब्रह्मर्षि ब्राह्मणप्रियः ।। ११५

ब्रह्मशापप्रतिष्ठाता यदुराजकुलान्तकः ।
युधिष्ठिरसखो युद्ध दक्षः कुरुकुलान्तकृत् ।। ११६

अजामिलोद्धारकारी गणिकामोचनो गुरुः ।
जाम्बवद्युद्धरसिकः स्यमन्तमणिभूषणः ।। ११७

सुभद्राबन्धुरक्रूरवन्दितो गदपूर्वजः ।
बलानु जो बाहुयुद्धरसिको मयमोचनः ।। ११८

दग्धखाण्डवसंप्रीतहुताशो हवनप्रियः ।
उद्यदादित्यसङ्काशवसनो हनुमद्रुचिः ।। ११९

भीष्मबाणव्रणाकीर्णः सारथ्य निपुणो गणी ।
भीष्मप्रतिभटश्चक्रधरः संप्रीणितार्जुनः ।। १२०

स्वप्रतिज्ञाहानि हृष्टो मानातीतो विदूरगः ।
विरागी विषयासक्तो वैकुण्ठोऽकुण्ठवैभवः ।। १२१

सङ्कल्पः कल्पनातीतः समाधिर्निर्विकल्पकः ।
सविकल्पो वृत्तिशून्यो वृत्तिर्बीजमतीगतः ।। १२२

महादेवोऽखिलोद्धारी वेदान्तेषु प्रतिष्ठितः ।
तनुर्बृहत्तनू रण्वराजपूज्योऽजरोऽमरः ।। १२३

भीमाहतजरासंधः प्रार्थितायुधसङ्गरः ।
स्वसङ्केतप्रक्लृप्तार्थो निरर्थ्योऽर्थी निराकृतिः ।। १२४

गुणक्षोभः समगुणः सद्गुणाढ्यः प्रमाप्रजः ।
स्वाङ्गजः सात्यकि भ्राता सन्मार्गो भक्तभूषणः ।। १२५

अकार्यकार्यनिर्वेदो वेदो गोपाङ्कनिद्रितः ।
अनाथो दावपो दावो दाहको दुर्धरोऽहतः ।। १२६

ऋत वाग्याचको विप्रः खर्व इन्द्र पद प्रदः ।
बलिमूर्धस्थितपदो बलियज्ञविघातकृत् ।। १२७

यज्ञपूर्ति र्यज्ञमूर्ति र्यज्ञविघ्नमविघ्नकृत् ।
बलिद्वाःस्थो दानशीलो दानशीलप्रियो व्रती ।। १२८

अव्रतो जतुकागार स्थित पाण्डव जीवनम् ।
मार्गदर्शी मृदुर्हेलादूरीकृतजगद्भयः ।। १२९

सप्तपाताल पादोऽस्थिपर्वतो द्रुमरोमकः ।
उडुमाली ग्रहाभूषो दिक् श्रुतिस्तटिनीशिरः ॥ १३०

वेदश्वासो जितश्वासश्चित्तस्थश्चित्तशुद्धिकृत् ।
धीःस्मृतिः पुष्टिरजयः तुष्टिः कान्तिर्धृतिस्त्रपा ॥ १३१

हलः कृषिः कलं वृष्टिर्गृष्टिर्गौरवनं वनम् ।
क्षीरं हव्यं हव्यवाहो होमो वेदी समित्स्रुवः ॥ १३२

कर्म कर्मफलं स्वर्गो भूष्यो भूषा महाप्रभुः ।
भू र्भुवः स्वर्महर्लोको जनो लोक स्तपो जनः ॥ १३३

सत्यो विधिर्दैवमधोलोकः पातालमण्डनः ।
जरायुजः स्वेदजनिरुद्भीजः कुलपर्वतः ॥ १३४

कुलस्तम्भः सर्वकुलः कुलभूः कौलदूरगः ।
धर्म तत्वं निर्विषयो विषयो भोगलालसः ॥ १३५

वेदान्तसारो निर्मोक्ता जीवो बद्धो बहिर्मुखः ।
प्रधानं प्रकृतिर्विश्वद्रष्टा विश्वनिषेधनः ॥ १३६

अन्त श्चतुर्द्वारमयो बहिर्द्वारचतुष्टयः ।
भुवनेशो क्षेत्रदेवोऽनन्तकायो विनायकः ॥ १३७

पिता माता सुहृद्बन्धु र्भ्राता श्राद्धं यमोऽर्यमा ।
विश्वेदेवाः श्राद्धदेवो मनुर्नान्दीमुखो धनुः ॥ १३८

हेतिः खड्गो रथो युद्धं युद्धकर्ता शरो गुणः ।
यशो यशोरिपुः शत्रुरशत्रु र्विजितेन्द्रियः ॥ १३९

पात्रं दाता दापयिता देशः कालो धनागमः ।
काञ्चनं प्रेम सन्मित्रं पुत्रः कोशो विकोशकः ॥ १४०

अनीतिः शरभो हिंस्रो द्विपो द्वीपी द्विपांकुशः ।
यन्ता निगड आलानं सन्मनो गज शृङ्खलः ।। १४१

मनोब्ज भृङ्गो विटपि गजः क्रोष्टा वृशो वृकः ।
सत्पथाचारनलिनीषट्पदः कामभञ्जनः ।। १४२

स्वीयचित्तचकोराब्जः स्वलीलाकृतकौतुकः ।
लीलाधामाम्बुभृन्नाथः क्षोणी भर्ता सुधाब्धिदः ।। १४३

मल्लान्तको मल्लरूपो बालयुद्धप्रवर्तनः ।
चन्द्रभागासरोनीर सीकरग्लपितक्रमः ।। १४४

कन्दुकक्रीडन क्रान्तो नेत्रमीलनकेलिमान् ।
गोपीवस्त्राप हरणः कदम्बशिखरस्थितः ।। १४५

बल्लवी प्रार्थितो गोपीनतिदेष्टाञ्जलिप्रियः ।
परिहासपरो रासे रासमण्डलमध्यगः ।। १४६

बल्लवीद्वयसंवीतः स्वात्मद्वैतात्मशक्तिकः ।
चतुर्विंशतिभिन्नात्मा चतुर्विंशतिशक्तिकः ।।। १४७

स्वात्मज्ञानं स्वात्मजातजगत्त्रय मयात्मकः ।
इति विठ्ठल संज्ञस्य विष्णोर्नाम सहस्रकम् ।। १४८

त्रिकालमेककालं वा श्रद्धया प्रयतः पठेत् ।
स विष्णोर्नात्र संदेहः किं बहूक्तेन शौनक ।। १४९

कामी चेन्नियताहारो जितचित्तो जितेन्द्रियः ।
जपन् कामा नवाप्नोति इति वै निश्चितं द्विज ।। १५०

*____*____*

# श्रीविठ्ठलसहस्रनामावलिः

ओं क्लीं विठ्ठलाय नमः। पाण्डुरङ्गेशाय। ईशाय। श्रीशाय। विशेषजिते। शेषशायिने। शंभुवन्द्याय। शरण्याय। शङ्करप्रियाय। चन्द्रभागासरोवासाय। कोटिचन्द्रप्रभास्मिताय। विधातृ-सूचिताय। सर्वप्रमाणातीताय। अव्ययाय। पुण्डरीकस्तुताय। वन्द्याय। भक्तचित्तप्रसादकाय। स्वधर्मनिरताय। प्रीताय। गोगोपीपरिवारिताय नमः॥ २०

ओं गोपिकाशतनीराज्याय नमः। पुलिनाक्रीडाय। आत्मभुवे। आत्मने। आत्मरामाय। आत्मस्थाय। आत्मराम-निषेविताय। सच्चित्सुखाय। महामायिने। महते। अव्यक्ताय। अद्भुताय। स्थूलरूपाय। सूक्ष्मरूपाय। कारणाय। परस्मै। अञ्जनाय। महाकारणाय। आधाराय। अधिष्ठानाय नमः॥ ४०

ओं प्रकाशकाय नमः। कञ्जपादाय। रक्तनखाय। रक्तपादतलाय। प्रभवे। साम्राज्यचिह्नितपदाय। नीलगुल्फाय। सुजङ्घकाय। सज्जानवे। कदलीस्तंभनिभोरवे। उरुविक्रमाय। पीतांबरावृतकटये। क्षुल्लकादामभूषणाय। कटिविन्यस्तहस्ता-ब्जाय। शङ्खिने। पद्मविभूषिताय। गंभीरनाभये। ब्रह्माधिष्ठितनाभि-सरोरुहाय। त्रिवलीमण्डितोदारोदरोमावलिमालिनाय। कपाटवक्षसे नमः॥ ६०

ओं श्रीवत्सभूषितोरसे नमः। कृपाकराय। वनमालिने। कंबुकण्ठाय। सुस्वराय। सामलालसाय। कञ्जवक्त्राय। श्मश्रुहीनचुबुकाय। वेदजिह्वकाय। दाडिमीबीजसदृशरदाय। रक्ताधराय। विभवे। नासामुक्तापाटलिताधरच्छवये। अरिन्दमाय।

शुकनासाय। कञ्जनेत्राय। कुण्डलाक्रामितांसकाय। महाबाहवे। घनभुजाय। केयूराङ्गदमण्डिताय नमः ॥ ८०

ओं रत्नभूषितभूषाढ्यमणिबन्धाय नमः । सुभूषणाय । रक्तपाणितलाय । स्वङ्गाय । सन्मुद्रामण्डिताङ्गुलये । नखप्रभा-रञ्जिताब्जाय । सर्वसौन्दर्यमण्डिताय । सुभ्रुवे । अर्धशशि-प्रख्यललाटाय। कामरूपधृशे। कुङ्कुमाङ्कितसद्भालाय। सुकेशाय । बर्हभूषणाय । किरीटभाव्याप्तनभसे । विकलीकृतभास्कराय । वनमालिने। पीतवाससे। शार्ङ्गचापाय। असुरान्तकाय। दर्पापहाय नमः ॥ १००

ओं कंसहन्त्रे नमः । चाणूरमुरमर्दनाय । वेणुवादन-सन्तुष्टाय । दध्यन्नास्वादलोलुपाय । जितारये । कामजनकाय । कामघ्ने । कामपूरकाय । विक्रोधाय । दारितामित्राय । भूर्भुवः-सुवरादिराजे। अनादये। अजनये। जन्यजनकाय। जाह्नवीपदाय। बहुजन्मने। जामदग्न्याय। सहस्रभुजखण्डनाय। कोदण्डधारिणे। जनकपूजिताय नमः ॥ १२०

ओं कमलाप्रियाय नमः । पुण्डरीकभवद्वेषिणे । पुण्डरीक-भवप्रियाय । पुण्डरीकस्तुतिरसाय । सद्भक्तपरिपालकाय । सुषुमालासङ्गमस्थाय । गोगोपीचित्तरञ्जनाय । इष्टिकास्थाय । भक्तवश्याय । त्रिमूर्तये । भक्तवत्सलाय । लीलाकृतजगद्धाम्ने । जगत्पालाय । हराय । विराजे । अश्वत्थ-पद्मतीर्थस्थाय । नारदस्तुतवैभवाय। प्रमाणातीततत्त्वज्ञाय। तत्त्वंपदनिरूपिताय। अजाजनये नमः ॥ १४०

अजाजानये नमः । अजायाय । नीरजाय । अमलाय । लक्ष्मीनिवासाय । स्वर्भूषाय । विश्ववन्द्याय । महोत्सवाय ।

जगद्योनये । अकर्त्रे । आद्याय । भोक्त्रे । भोग्याय । भवातिगाय । षड्गुणैश्वर्यसंपन्नाय । भगवते । मुक्तिदायकाय । अधःप्राणाय । मनसे । बुद्ध्यै नमः ।। १६०

ओं सुषुप्त्यै नमः । सर्वगाय । हरये । मत्स्याय । कूर्माय । वराहाय । अत्रये । वामनाय । हरिरूपधृते । नारसिंहाय । ऋषये । व्यासाय । रामाय । नीलांशुकाय । हलिने । बुद्धाय । अर्हते । सुगताय । कल्किने । नराय नमः ।। १८०

ओं नारायणाय नमः । परस्मै । परात्पराय । करीड्येशाय । नक्रशापविमोचनाय । नारदोक्तिप्रतिष्ठात्रे । मुक्तकेशिने । वरप्रदाय । चन्द्रभागाप्सुसुस्नाताय । कामितार्थप्रदाय । अनघाय । तुलसी-दामभूषाढ्याय । तुलसीकाननप्रियाय । पाण्डुरङ्गाय । क्षेत्रमूर्तये । सर्वमूर्तये । अनामयाय । पुण्डरीकव्याजकृतजडोद्धाराय । सदागतये । अगतये नमः ।। २००

ओं सद्गतये नमः । सभ्याय । भवाय । भव्याय । विधीडिताय । प्रलंबघ्नाय । द्रुपदजाचिन्ताहारिणे । भयापहाय । वह्निवक्त्राय । सूर्यनुताय । विष्णवे । त्रैलोक्यरक्षकाय । जगद्भक्ष्याय । जगद्गेहाय । जनाराध्याय । जनार्दनाय । जेत्रे । विष्णवे । वरारोहाय । भीष्म-पूज्यपदांबुजाय नमः ।। २२०

ओं भर्त्रे नमः । भीष्मकसंपूज्याय । शिशुपालवधोद्यताय । शतापराधसहनाय । क्षमावते । आदिपूजनाय । शिशुपालशिरश्छेत्रे । दन्तवक्त्रबलापहाय । शिशुपालकृतद्रोहाय । सुदर्शनविमोचनाय । सश्रिये । समायाय । दामेन्द्राय । सुदामक्रीडनोत्सुकाय । वसुदामकृतक्रीडाय । किंकिणीदामसेविताय । पञ्चाङ्गपूजनरताय । शुद्धचित्तवशंवदाय । रुक्मिणीवल्लभाय । सत्यभामाभूषितविग्रहाय नमः ।। २४०

ओं नाग्नजित्याकृतोत्साहाय नमः। सुनन्दाचित्त-मोहनाय। मित्रविन्दाऽऽलिङ्गिताङ्गाय। ब्रह्मचारिणे। वटुप्रियाय। सुलक्षणाधौतपदाय। जांबवत्याकृतादराय। सुशीलाशीलसन्तुष्टाय। जलकेलिकृतादराय। वासुदेवाय। देवकीड्याय। नन्दानन्दकराङ्घ्रि-युजे। यशोदामानसोल्लासाय। बलावरजनये। स्वभुवे। सुभद्रा-नन्ददाय। गोपवश्याय। गोपीप्रियाय। अजयाय। मन्दारमूल-वेदिस्थाय नमः ।। २६०

ओं सन्तानतरुसेविताय नमः। पारिजातापहरणाय। कल्पद्रुमपुरःसराय। हरिचन्दनलिप्ताङ्गाय। इन्द्रवन्द्याय। अग्निपूजिताय। यमनेत्रे। नैरृतेयाय। वरुणेशाय। खगप्रियाय। कुबेरवन्द्याय। ईशेशाय। विधीड्याय। अनन्तवन्दिताय। वज्रिणे। शक्तये। दण्डधराय। खड्गिने। पाशिने। अङ्कुशिने नमः ।। २८०

ओं गदिने नमः। त्रिशूलिने। कमलिने। चक्रिणे। सत्यव्रत-मयाय। नवाय। महामन्त्राय। प्रणवभुवे। भक्तचिन्तापहारकाय। स्वक्षेत्रवासिने। सुखदाय। कामिने। भक्तविमोचनाय। स्वनामकीर्तनप्रीताय। क्षेत्रेशाय। क्षेत्रपालकाय। कामाय। चक्रधराधार्याय। त्रिविक्रममयात्मकाय। प्रज्ञानकरजिते नमः ।। ३००

ओं कान्तिरूपवर्णाय नमः। स्वरूपवते। स्पर्शेन्द्रियाय। शौरिमयाय। वैकुण्ठाय। सानिरुद्धकाय। षडक्षरमयाय। बालाय। श्रीकृष्णाय। ब्रह्मभाविताय। नारदाधिष्ठितक्षेमाय। वेणुवाद-नतत्पराय। नारदेशप्रतिष्ठात्रे। गोविन्दाय। गरुडध्वजाय। साधारणाय। समाय। सौम्याय। कलावते। कमलालयाय नमः ।। ३२०

ओं क्षेत्रपाय नमः । क्षणदाधीशवक्त्राय । क्षेमकरक्षणाय । लवाय । लवणिम्ने । धाम्ने । लीलावते । लघुविग्रहाय । हयग्रीवाय । हलिने । हंसाय । हतकंसाय । हलिप्रियाय । सुन्दराय । सुगतये । मुक्ताय । सत्सख्ये । सुलभाय । स्वभुवे । साम्राज्यदाय नमः ।। ३४०

ओं सामराजाय नमः । सत्तायै । सत्याय । सुलक्षणाय । षड्गुणैश्वर्यनिलयाय । षडृतुपरिसेविताय । षडङ्गशोधिताय । षोढा । षड्दर्शननिरूपिताय । शेषतल्पाय । शतमखाय । शरणागतवत्सलाय । सशंभवे । समितये । शङ्खवहाय । शार्ङ्गसुचापधृते । वह्नितेजसे । वारिजास्याय । कवये । वंशीधराय नमः ।। ३६०

ओं विगाय नमः । विनीताय । विप्रियाय । वालिदलनाय । वज्रभूषणाय । रुक्मिणीशाय । रमाजानये । राजराजन्यभूषणाय । रतिप्राणप्रियपित्रे । रावणान्ताय । रघूद्वहाय । यज्ञभोक्त्रे । यमाय । यज्ञभूषणाय । यज्ञदूषणाय । यज्वने । यशोवते । यमुनाकूलकुञ्जप्रियाय । यमिने । मेरवे नमः ।। ३८०

ओं मनीषिणे नमः । महिताय । मुदिताय । श्यामविग्रहाय । मन्दगामिने । मुग्धमुखाय । महेशाय । मीनविग्रहाय । भीमाय । भीमाङ्गजातीरवासिने । भीमार्तिभञ्जनाय । भूभारहरणाय । भूतभावनाय । भरताग्रजाय । बलाय । बलप्रियाय । बालाय । बालक्रीडनतत्पराय । बकासुरान्तकाय । बाणासुरदर्पकबाडवाय नमः ।। ४००

ओं बृहस्पतये । बलारातिसूनवे । बलिवरप्रदाय । बोद्ध्रे । बन्धुवधोद्युक्ताय । बन्धमोक्षप्रदाय । बुधाय । फाल्गुनानिष्टघ्ने । फल्गुकृताराराये । फलप्रदाय । फेनजातैरकावज्रकृतयादवसंक्षयाय । फाल्गुनोत्सवसंसक्ताय । फणितल्पाय । फणानटाय ।

पुण्याय। पवित्राय। पापात्मदूरगाय। पण्डिताग्रण्ये। पोषणाय। पुलिनावासाय नमः ॥ ४२०

ओं पुण्डरीकमनोर्वंशाय नमः। निरन्तराय। निराकांक्षाय। निरातङ्काय। निरञ्जनाय। निर्विण्णमानसोल्लासाय। सतांनयनानन्दनाय। नियमाय । नियमिने। नम्याय। नन्दबन्धनमोचनाय। निपुणाय। नीतिमते । नेत्रे। नरनारायणवपुषे। धेनुकासुरविद्वेषिणे । धाम्ने। धात्रे। धनिने। धनाय नमः ॥ ४४०

ओं धन्याय नमः। धन्यप्रियाय। धर्त्रे। धीमते। धर्मविदुत्तमाय । धरणीधरसन्धर्त्रे। धराभूषितदंष्ट्रकाय। दैतेयहन्त्रे। दिग्वाससे । देवाय। देवशिखामणये। दाम्ने। दात्रे। दीप्तिभानवे। दानवादमित्रे। दमाय। स्थिरकार्याय। स्थितप्रज्ञाय। स्थविराय। स्थापकाय । स्थितये नमः ॥ ४६०

ओं स्थितलोकत्रयवपुषे नमः। स्थितिप्रलयकारणाय। स्थापकाय। तीर्थचरणाय। तर्पकाय। तरुणीरसाय। तारुण्यकेलिनिपुणाय। तरणाय। तरणि प्रभवे। तोयमूर्तये। तमोऽतीताय। स्तंभोद्भूताय। तपःपराय। तडिद्वाससे। तोयदाभाय। ताराय। तारस्वरप्रियाय। णकाराय। ढौकितजगते। त्रितूर्यप्रीतभूसुराय। डमरूप्रियाय । ऋद्धासिने। डिण्डिमध्वनिगोचराय नमः ॥ ४८४

ओं ठयुगस्थमनोर्गम्याय नमः। ठंकारिधनुरायुधाय। टणत्कारितकोदण्डहतारये। गणसौख्यदाय। झांकारिचञ्चरीकांकिने। श्रुतिकल्हारभूषणाय। जरासन्धार्दितजगत्सुखभुवे। जंगमात्मकाय। जगज्जनये। जगद्भूषाय। जानकीविरहाकुलाय।

जिष्णुशोकापहरणाय। जन्महीनाय। जगत्पतये। छत्रिताहीन्द्र-सुभगाय। छद्मिने। छत्रितभूधराय। छायास्थलोकत्रितयच्छलेन बलिनिग्रहिणे। चेतश्चमत्कारकराय। चित्रिणे नमः ॥ ५०४

ओं चित्रस्वभाववते नमः। चारुभुवे। चन्द्रचूडाय। चन्द्रकोटिसमप्रभाय। चूडारत्नद्योतिभालाय। चलन्मकरकुण्डलाय। चरुभुजे। चयनप्रीताय। चंपकाटविमध्यगाय। चाणूरहन्त्रे। चन्द्राङ्कनाशनाय। चन्द्रदीधितये। चन्दनालिप्तसर्वाङ्गाय। चारुचामरमण्डिताय। घनश्यामाय। घनरवाय। घटोत्कच पितृप्रियाय। घनस्तनीपरीवाराय। घनवाहनगर्वघ्ने। गंगापदाय नमः ॥ ५२४

ओं गतक्लेशाय नमः। गतक्लेशनिषेविताय। गणनाथाय। गजोद्धर्त्रे। गायकाय। गायनप्रियाय। गोपतये। गोपिकावश्याय। गोपबालानुगाय। पतये। गणकोटिपरीवाराय। गम्याय। गगन-निर्मलाय। गायत्रीजपसंप्रीताय। गण्डकीस्थाय। गुहाशयाय। गुहारण्यप्रतिष्ठात्रे। गुहासुरनिषूदनाय। गीतकीर्तये। गुणारामाय। गोपालाय नमः ॥ ५४५

ओं गुणवर्जिताय नमः। गोप्रियाय। गोचरप्रीताय। गाननाट्यप्रवर्तकाय। खड्गायुधाय। खरद्वेषिणे। खातीताय। खगमोचनाय। खगपुच्छकृतोत्तंसाय। खेलद्बालकृतप्रियाय। खड्गांगपतोथितारातये। खञ्जनाक्षाय। खशीर्षकाय। कलवंशरवा-क्रान्तगोपीविस्मारितार्भकाय। कलिप्रमाथिने। कञ्जास्याय। कमलायतलोचनाय। कालनेमिप्रहरणाय। कुण्ठितार्तिकिशोरकाय। केशवाय नमः ॥ ५६५

ओं केवलाय नमः । कण्ठीरवास्याय । कोमलाङ्घ्रियुजे । कंबलिने । कीर्तिमते । कान्ताय । करुणामृतसागराय । कुब्जासौभाग्यदाय । कुब्जाचन्दनालिप्तगात्रकाय । कालाय । कुवलयापीडहन्त्रे । क्रोधसमाकुलाय । कालिन्दीपुलिनाक्रीडाय । कुञ्जकेलिकुतूहलिने । काञ्चनाय । कमलाजानये । कलाज्ञाय । कामितार्थदाय । कारणाय । कारणातीताय नमः ॥ ५८५

ओं कृपापूर्णाय नमः । कलानिधये । क्रियारूपाय । क्रियातीताय । कालरूपाय । क्रतुप्रभवे । कटाक्षस्तंभितारातये । कुटिलालकभूषिताय । कूर्माकाराय । कालरूपिणे । करीरवनमध्यगाय । कलकण्ठीने । कलरवाय । कलकण्ठरुतानुकृते । करद्वारपुराय । कूटाय । सर्वेषांकवलप्रियाय । कलिकल्मषघ्ने । क्रान्तगोकुलाय । कुलभूषणाय । कूटारये नमः ॥ ६०६

ओं कुतुपाय नमः । कीशपरिवाराय । कविप्रियाय । कुरुवन्द्याय । कठिनदोर्दण्डखण्डितभूभराय । किङ्करप्रियकृते । कर्मरतभक्तप्रियङ्कराय । अम्बुजास्याय । अङ्गनाकेलये । अम्बुशायिने । अम्बुधिस्तुताय । अम्भोजमालिने । अम्बुवाहलसदङ्गाय । अन्त्रमालकाय । औदुम्बरफलप्रख्य ब्रह्माण्डावलिचालकाय । ओष्ठस्फुरन्मुरलिकारवाकर्षितगोकुलाय । ऐरावतसमारूढाय । ऐन्द्रीशोकापहारकाय । ऐश्वर्यविधये । ऐश्वर्याय नमः ॥ ६२६

ओं ऐश्वर्याष्ट दलस्थिताय नमः । एणशावसमानाक्षाय । एधस्तोषितपावकाय । एनोऽन्तकृन्नामधेयस्मृति संसृतिदर्पघ्ने । लूनपञ्चक्लेशपदाय । लूतातन्तुजगत्कृतये । लुप्तदृश्याय । लुप्तजगज्जयाय । लुप्तसुपावकाय । रूपातीताय । रूपनामरूपमायादिकारणाय । ऋणहीनाय । ऋद्धिकारिणे । ऋणातीताय । ऋतंवदाय ।

उषानिमित्तबाणघ्नाय। उषाहारिणे । ऊर्जिताशयाय। ऊर्ध्वरूपाय । ऊर्ध्वाधिरगाय नमः ।। ६४०

ओं ऊष्मदग्धजगत्त्रयाय नमः । उद्धवत्राणनिरताय । उद्धवज्ञानदायकाय । उद्धर्त्रे । उद्धवाय । उन्निद्राय । उद्बोधाय । उपरिस्थिताय। उदधिक्रीडाय। उदधितनयाप्रियाय। उत्सवाय । उच्छिन्नदेवताराततये । उदध्यावृतिमेखलाय । ईतिघ्नाय । ईशित्रे । ईज्याय। ईड्याय। ईहाविवर्जिताय। ईशध्येयपदांभोजाय। इनाय नमः ।। ६६६

ओं ईनविलोचनाय नमः । इन्द्राय । इन्द्रानुजनटाय । इन्दिराप्राणवल्लभाय। इन्द्रादिस्तुताय।इन्द्रश्रिये। इदमित्थमभीत-कृते । आनन्दाभासाय। आनन्दाय। आनन्दनिधये। आत्मदृशे। आयुषे । आर्तिघ्नाय । आयुष्याय । आदये । आमयवर्जिताय । आदिकारणाय। आधाराय। आधारादिकृताश्रयाय। अच्युतैश्वर्याय नमः ।। ६८६

ओं अमिताय नमः । अरिनाशाय। अघान्तकृते। अन्नप्रदाय । अन्नाय। अखिलाधाराय। अच्युताय। अब्जभृते । चन्द्रभागाजल-क्रीडासक्ताय। गोपविचेष्टिताय । हृदयाकारहृद्भूषाय। यष्टिमते। गोकुलानुगाय । गवं हुंकृतिसुप्रीताय । गवालीढपदाम्बुजाय । गोगोपत्राण सुश्रान्ताय। अश्रमिणे। गोपवीजिताय। पाथेयाशन-संप्रीताय । स्कन्धशिक्याय नमः ।। ७०६

ओं मुखाम्बुपाय नमः । क्षेत्रपारोपितक्षेत्राय । रक्षोऽधिकृतभैरवाय। कार्यकारणसङ्घाताय। ताटकान्ताय। रक्षघ्ने । हन्त्रे। तारापतिस्तुत्याय। यक्षाय। क्षेत्राय। त्रयीवपुषे । प्राञ्जलये । लोलनयनाय । नवनीताशनप्रियाय । यशोदातर्जिताय ।

क्षीरतस्कराय । भाण्डभेदनाय । मुखाशनाय । मातृवश्याय । मातृदृश्यमुखान्तराय नमः ।। ७२६

ओं व्यात्तवक्त्राय नमः । गतभयाय । मुखलक्ष्यजगत्त्रयाय । यशोदास्तुतिसंप्रीताय । नन्दविज्ञातवैभवाय । संसारनौकाधर्मज्ञाय । ज्ञाननिष्ठाय । धनार्जकाय । कुबेराय । क्षत्रनिधनाय । ब्रह्मर्षये । ब्राह्मणप्रियाय । ब्रह्मशापप्रतिष्ठात्रे । यदुराजकुलान्तकाय । युधिष्ठिरसखाय । युद्धदक्षाय । कुरुकुलान्तकृते । अजामिलोद्धारकारिणे । गणिकामोचनाय । गुरवे नमः ।। ७४६

ओं जाम्बवद्युद्धरसिकाय नमः । स्यमन्तमणिभूषणाय । सुभद्राबन्धवे । अक्रूरवन्दिताय । गदपूर्वजाय । बलानुजाय । बाहुयुद्धरसिकाय । मयमोचनाय । दग्धखाण्डवसंप्रीतहुताशाय । हवनप्रियाय । उद्यदादित्यसङ्काशवसनाय । हनुमद्रुचये । भीष्मबाणव्रणाकीर्णाय । सारथ्यनिपुणाय । गुणिने । भीष्मप्रतिभटाय । चक्रधराय । संप्रीणितार्जुनाय । स्वप्रतिज्ञाहानिहृष्टाय । मानातीताय नमः ।। ७६६

ओं विदूरगाय नमः । विरागाय । विषयासक्ताय । वैकुण्ठाय । अकुण्ठवैभवाय । सङ्कल्पाय । कल्पनातीताय । समाधये । निर्विकल्पकाय । सविकल्पाय । वृत्तिशून्याय । वृत्तये । बीजाय । अतीगताय । महादेवाय । अखिलोद्धारिणे । वेदान्तेषु प्रतिष्ठिताय । तनवे । बृहत्तनवे । रण्वराजपूज्याय नमः ।। ७८६

ओं अजराय नमः । अमराय । भीमाहाजरासन्धाय । प्रार्थितायुधसङ्गराय । स्वसङ्केतप्रक्लृप्तार्थाय । निरर्थ्याय । अर्थिने । निराकृतये । गुणक्षोभाय । समगुणाय । सद्गुणाढ्याय । प्रमाप्रजाय ।

स्वाङ्गजाय । सात्यकिभ्रात्रे । सन्मार्गाय । भक्तभूषणाय । अकार्यकारिणे। अनिर्वेदाय। वेदाय। गोपाङ्कनिद्रिताय नमः ।। ८०६

ओं अनाथाय नमः । दावपाय। दावाय। दाहकाय। दुर्धराय। अहताय। ऋतवाचे। याचकाय। विप्राय। खर्वाय। इन्द्रपदप्रदाय। बलिमूर्धस्थितपदाय। बलियज्ञविघातकृते। यज्ञपूर्तये। यज्ञमूर्तये। यज्ञविघ्नाय । अविघ्नकृते । बलिद्वाःस्थाय । दानशीलाय । दानशीलप्रियाय नमः ।। ८२६

ओं व्रतिने नमः । अव्रताय। जतुकागारस्थित पाण्डवजीवनाय । मार्गदर्शिने। मृदवे। हेलादूरीकृतजगद्भयाय । सप्तपातालपादाय। अस्थिपर्वताय। द्रुमरोमकाय। उडुमालिने। ग्रहाभूषाय। दिक्श्रुतये । तटिनीशिराय । वेदश्वासाय । जितश्वासाय । चित्तस्थाय । चित्तशुद्धिकृते। धियै। स्मृत्यै। पुष्ट्यै नमः ।। ८४६

ओं अजयाय नमः । तुष्ट्यै। कान्त्यै। धृत्यै। त्रपायै। हलाय। कृष्यै। कलाय। वृष्ट्यै। गृष्ट्यै। गौरवनाय। वनाय। क्षीराय। हव्याय । हव्यवाहाय । होमाय । वेद्यै । समिधे । स्रुवाय । कर्मणे नमः ।। ८६६

ओं कर्मफलाय नमः । स्वर्गाय। भूष्याय। भूषायै महाप्रभवे । भुवे। भुवः । स्वः । महर्लोकाय। जनोलोकाय। तपसे। जनाय। सत्याय । विधये । दैवाय । अधोलोकाय । पातालमण्डनाय । जरायुजाय। स्वेदजनये। उद्भीजाय। कुलपर्वताय नमः ।। ८८७

ओं कुलस्तम्भाय नमः । सर्वकुलाय। कुलभुवे। कौलदूरगाय । धर्मतत्त्वाय। निर्विषयाय। विषयाय। भोगलालसाय। वेदान्तसाराय । निर्मोक्त्रे। जीवाय। बद्धाय । बहिर्मुखाय। प्रधानाय।

प्रकृत्यै । विश्वद्रष्ट्रे । विश्वनिषेधनाय । अन्तश्चतुर्द्वारमयाय । बहिर्द्वारचतुष्टयाय। भुवनेशाय नमः ।। ९०७

ओं क्षेत्रदेवाय नमः । अनन्तकायाय। विनायकाय। पित्रे। मात्रे। सुहृदे। बन्धवे। भ्रात्रे। श्राद्धाय। यमाय। अर्यम्णे । विश्वेभ्यो देवेभ्यः । श्राद्धदेवाय । मनवे । नान्दीमुखाय । धनुषे । हेतये । खड्गाय । रथाय। युद्धाय।। ९२७

ओं युद्धकर्त्रे। शराय। गुणाय। यशसे। यशोरिपवे। शत्रवे। अशात्रवे। विजितेन्द्रियाय। पात्राय। दात्रे। दापयित्रे । देशाय। कालाय। धनागमाय। काञ्चनाय। प्रेम्णे । सन्मित्राय। पुत्राय। कोशाय। विकोशकाय नमः ।। ९४७

ओं अनीत्यै नमः । शरभाय। हिंस्राय। द्विपाय। द्वीपिने । द्विपाङ्कुशाय। यन्त्रे। निगडाय। आलानाय। सन्मनोगजशृङ्खलाय । मनोऽब्जभृङ्गाय । विटपिगजाय । क्रोष्ट्रे । वृशाय । वृकाय । सत्पथाचारनलिनीषट्पदाय । कामभञ्जनाय । स्वीयचित्त-चकोराब्जाय । स्वलीलाकृतकौतुकाय । लीलधामाम्बुभृन्नाथाय। क्षोणीभर्त्रे नमः ।। ९६८

सुधाब्धिदाय नमः । मल्लान्तकाय। मल्लरूपाय। बालयुद्ध-प्रवर्तनाय। चन्द्रभागासरोनीरसीकरग्लपितश्रमाय । कन्दुकक्रीड-नक्लान्ताय । नेत्रमीलनकेलिमते । गोपीवस्त्रापहरणाय । कदम्ब-शिखरस्थिताय । वल्लवीप्रार्थिताय । गोपीनतिदेष्ट्रे । अञ्जलि-प्रियाय । रासे परिहासपराय । रासमण्डलमध्यगाय। वल्लवीद्वय-संवीताय । स्वात्मद्वैतात्मशक्तिकाय । चतुर्विंशतिभिन्नात्मने । चतुर्विंशतिशक्तिकाय । स्वात्मज्ञानाय । स्वात्मजात जगत्त्रय-मयात्मकाय नमः ।। ९८८

# सुदर्शननामस्तोत्रम्

(सहस्रनामस्तोत्रमिति व्यासनारदसंवादे। परं ५७५ नामान्येव सन्ति।)

प्रणम्य शिरसा देवं नारायणमशेषगम्।
रमावक्षोजकस्तूरीपङ्कमुद्रितवक्षसम्।। १

सर्वशास्त्रार्थतत्त्वज्ञः पाराशर्यस्तपोधनः।
हिताय सर्वजगतां नारदं मुनिमब्रवीत्।। २

ज्ञानविद्याविशेषज्ञं कर्पूरधवलाकृतिम्।
वीणावादनसंतुष्टमानसं मरुतां परम्।। ३

हिरण्यगर्भसंभूतं हिरण्याक्षादिसेवितम्।
पुण्यराशिं पुराणज्ञं पावनीकृतदिक्तटम्।। ४

व्यास उवाच-

देवर्षे नारद श्रीमन् साक्षाद् ब्रह्माङ्गसंभव।
भवानशेषविद्यानां पारगस्तपसां निधिः।। ५

वेदान्तपारगः सर्वशास्त्रार्थप्रतिभोज्ज्वलः।
परब्रह्मणि निष्णातः सच्चिदानन्दविग्रहः।। ६

जगद्धिताय जनितः साक्षादेव चतुर्मुखात्।
हन्यन्ते भवता दैत्या दैत्यारिभुजविक्रमैः।। ७

कालोऽनुग्रहकर्ता त्वं त्रैलोक्यं त्वद्वशेऽनघ।
मनुष्या ऋषयो देवास्त्वया जीवन्ति सत्तम।। ८

कर्तृत्वे लोककार्याणां वरत्वे परिनिष्ठित।
पृच्छामि त्वामशेषज्ञं निदानं सर्वसंपदाम्।। ९

सर्वसंसारनिर्मुक्तं चिद्घनं शान्तमानसम्।
यः सर्वलोकहितकृद्यं प्रशंसन्ति योगिनः ॥ १०

इदं चराचरं विश्वं धृतं येन महामुने।
स्पृहयन्ति च यत्प्रीत्या यस्मै ब्रह्मादिदेवताः ॥ ११

निर्माणस्थितिसंहारा यतो विश्वस्य सत्तम्।
यस्य प्रसादाद् ब्रह्माद्या लभन्ते वाञ्छितं फलम् ॥ १२

दारिद्र्यनाशो जायेत यस्मिन् श्रुतिपथं गते।
विवक्षितार्थनिर्वाहा मुखान्निःसरतीह गीः ॥ १३

नृपाणां राज्यहीनानां येन राज्यं भविष्यति।
अपुत्रः पुत्रवान् येन वन्ध्या पुत्रवती भवेत् ॥ १४

शत्रूणामचिरान्नाशो ज्ञानं ज्ञानैषिणामपि।
चतुर्वर्गफलं यस्य क्षणाद् भवति सुव्रत ॥ १५

भूतप्रेतपिशाचाद्या यक्षराक्षसपन्नगाः।
भूतज्वरादिरोगाश्च यस्य स्मरणमात्रतः ॥ १६

मुच्यन्ते मुनिशार्दूल येनाखिलजगद्धृतम्।
तदेतदिति निश्चित्य सर्वशास्त्रविशारद ॥ १७

सर्वलोकहितार्थाय ब्रूहि मे सकलं गुरो।
इत्युक्तस्तेन मुनिना व्यासेनामिततेजसा ॥ १८

बद्धाञ्जलिपुटो भूत्वा सादरं नारदो मुनिः।
नमस्कृत्य जगन्मूलं लक्ष्मीकान्तं परात् परम् ॥ १९

उवाच परमप्रीतः करुणामृतधारया।
आप्याययन् मुनीन् सर्वान् व्यासादीन् ब्रह्मतत्परान् ॥ २०

नारदः -

बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम्।
येनाव्याहतसंकल्पं वस्तु लक्ष्मीधरं विदुः ॥ २१

ओं अस्य श्रीसुदर्शन(सहस्र)नामस्तोत्रमहामन्त्रस्य अहिर्बुध्न्यो भगवानृषिः, अनुष्टुप् छन्दः, श्रीसुदर्शन-महाविष्णुर्देवता, रं बीजम्, हुं शक्तिः, फट् कीलकम्, 'रां रीं रूं रैं रौं रः' इति मन्त्रः, श्रीसुदर्शनप्रसादसिद्ध्यर्थे जपे विनियोगः। ओं रां अङ्गुष्ठाभ्यां नमः, ओं रीं तर्जनीभ्यां नमः, ओं रूं मध्यमाभ्यां नमः, ओं रैं अनामिकाभ्यां नमः, ओं रौं कनिष्ठिकाभ्यां नमः, ओं रः करतलकरपृष्ठाभ्यां नमः।

एवं हृदयादिन्यासः - ओं रां ज्ञानाय हृदयाय नमः, ओं रीं ऐश्वर्याय शिरसे स्वाहा, ओं रूं शक्त्यै शिखायै वषट्, ओं रैं बलाय कवचाय हुं, ओं रौं वीर्यायास्त्राय फट्, ओं रः तेजसे नेत्राभ्यां वौषट् इति वा।

अथ दिग्बन्धः - ओं ठं ठं पूर्वां दिशं चक्रेण बध्नामि नमश्चक्राय हुं फट् स्वाहा, ओं ठं ठं आग्नेयीं दिशं। ओं ठं ठं याम्यां दिशं। ओं ठं ठं नैर्ऋतीं दिशं। ओं ठं ठं वारुणीं दिशं। ओं ठं ठं वायवीं दिशं। ओं ठं ठं कौबेरीं दिशं। ओं ठं ठं ऐशानीं दिशं। ओं ठं ठं ऊर्ध्वां दिशं। ओं ठं ठं अधरां दिशं। ओं ठं ठं सर्वा दिशः चक्रेण बध्नामि नमश्चक्राय हुं फट् स्वाहा। इति दिग्बन्धः।

ध्यानम्-

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं
रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम्।

शार्ङ्गं चक्रं गदाब्जं पृथुतरमुसलं चापपाशाङ्कुशादीन्
बिभ्राणं दोर्भिराद्यं मनसि मुररिपोर्भावये चक्रराजम् ॥

शार्ङ्गं चक्रं गदाब्जं शरमसिमिषुधिं चापपाशाङ्कुशादीन्
बिभ्राणं वज्रखेटं हलमुसललसत्कुन्तमत्युग्रदंष्ट्रम् ।
ज्वालाकेशं त्रिनेत्रं ज्वलदनलनिभं हारकेयूरभूषं
ध्यायेत् षट्कोणसंस्थं सकलरिपुजनप्राणसंहारचक्रम् ॥

कल्याणगुणसंपन्नः कल्याणवसनोज्ज्वलः ।
कल्याणाचलगम्भीरः कल्याणजनरञ्जकः ॥ १

कल्याणदोषनाशश्च कल्याणरुचिराङ्गकः ।
कल्याणाङ्गदसंपन्नः कल्याणाकारसंनिभः ॥ २

करालवदनोऽत्रासी करालाङ्गोऽभयंकरः ।
करालतनुजोद्दामः करालतनुभेदकः ॥ ३

करञ्जवनमध्यस्थः करञ्जदधिभोजनः ।
करञ्जासुरसंहर्ता करञ्जमधुराङ्गकः ॥ ४

खञ्जनानन्दजनकः खञ्जनाहारजूषितः ।
खञ्जनायुधभृद् दिव्यखञ्जनाखण्डगर्वहृत् ॥ ५

खरान्तकः खररुचिः खरदुःखैरसेवितः ।
खरान्तकः खरोदारः खरासुरविभञ्जनः ॥ ६

गोपालो गोपतिर्गोप्ता गोपस्त्रीनाथरञ्जकः ।
गोजारुणतनुर्गोजो गोजारतिकृतोत्सवः ॥ ७

गम्भीरनाभिर्गम्भीरो गम्भीरार्थसमन्वितः ।
गम्भीरवैद्यमरुतो गम्भीरगुणभूषितः ॥ ८

घनरावो घनरुचिर्घनगम्भीरनिस्वनः ।
घनाघनौघनाशी च घनसंतानदायकः ॥ ९

घनरोचिर्घनच्चरो घनचन्दनचर्चितः ।
घनहेतिर्घनभुजो घनोऽखिलसुरार्चितः ॥ १०

ङकारावधिविभवो ङकारो मुनिसंमतः ।
ङकारवीतसहितो ङकाराकारभूषितः ॥ ११

चक्रराजश्चक्रपतिश्चक्राधीशः सुचक्रभूः ।
चक्रसेव्यश्चक्रधरश्चक्रभूषणभूषितः ॥ १२

चक्रराजरुचिश्चक्रश्चक्रपालनतत्परः ।
चक्रधृच्चक्रवरदश्चक्रभूषणभूषितः ॥ १३

सुचक्रधीः सुचक्राख्यः सुचक्रगुणभूषितः ।
विचक्रश्चक्रनिरतश्चक्रसंपन्नवैभवः ॥ १४

चक्रदोश्चक्रदश्चक्रश्चक्रराजपराक्रमः ।
चक्रनादश्चक्रचरश्चक्रगश्चक्रपाशकृत् ॥ १५

चक्रव्यापी चक्रगुरुश्चक्रहारी विचक्रभृत् ।
चक्राङ्गश्चक्रमहितश्चक्रवाकगुणाकरः ॥ १६

आचक्रश्चक्रधर्मज्ञश्चक्रकश्चक्रमर्दनः ।
आचक्रनियमश्चक्रः सर्वपापविधूननः ॥ १७

चक्रज्वालश्चक्रधरश्चक्रपालितविग्रहः ।
चक्रवर्ती चक्रदायी चक्रकारी मदापहः ॥ १८

चक्रकोटिमहानादश्चक्रकोटिसमप्रभः ।
चक्रराजावनचरश्चक्रराजान्तरोज्ज्वलः ॥ १९

चञ्चलारातिदमनश्चञ्चलस्वान्तरोमकृत्।
चञ्चलो मानसोल्लासी चञ्चलाचलभासुरः ॥ २०

चञ्चलारातिनिरतश्चञ्चलाधिकचञ्चलः ।
छाययाखिलतापघ्नश्छायामदविभञ्जनः ॥ २१

छायाप्रियोऽधिकरुचिश्छायावृक्षसमाश्रयः ।
छायान्वितश्छाययार्च्यश्छायाधिकसुखप्रदः ॥ २२

छायाम्बरपरीधानश्छायात्मजनमुञ्चितः ।
जलजाक्षीप्रियकरो जलजानन्ददायकः ॥ २३

जलजासिद्धिरुचिरो जलजालसमो भरः ।
जलजालापसंस्तुत्यो जलजाताय मोदकृत् ॥ २४

जलजाहारचतुरो जलजाराधनोत्सुकः ।
जनकस्तुतिसंतुष्टो जनकाराधिताधिकः ॥ २५

जनकामोदनपरो जनकानन्ददायकः ।
जनकाध्यानसंतुष्टहृदयो जनकार्चितः ॥ २६

जनकानन्दजननो जनकृद्धृदयाम्बुजः ।
झञ्झामारुतवेगाढ्यो झञ्झामारुतसंगरः ॥ २७

झंझामारुतसंरावो झंझामारुतविक्रमः ।
ञकाराम्बुजमध्यस्थो ञकारकृतसंनिधिः ॥ २८

टङ्कधारी टङ्कवपुष्टङ्कसंहारकारकः ।
टङ्कच्छिन्नसुवर्णाभिष्टङ्कारधनुरुज्ज्वलः ॥ २९

टङ्काराग्निसमाकारष्टङ्काररवमेदुरः ।
टङ्कारकीर्तिभरितष्टङ्कारानन्दवर्धनः ॥ ३०

डम्भसंहतिसंहर्ता डम्भसंततिवर्धनः ।
डम्भधृग् डम्भहृदयो डम्भदण्डनतत्परः ।। ३१

डिम्भधृग् डिम्भकुक्षिम्भो डिम्भसूदनतत्परः ।
डिम्भपापहरो डिम्भसंभावितपदाम्बुजः ।। ३२

डिम्भरोद्यत्कटम्बाजो डमरुध्यानतत्परः ।
डमरूद्भवसंहर्ता डमरूद्भवनन्दनः ।। ३३

डाडिमीवनमध्यस्थो डाडिमीकुसुमप्रियः ।
डाडिमीफलसंतुष्टो डाडिमीफलवर्जितः ।। ३४

ढक्कामनोहरवपुर्ढक्कारवविराजितः ।
ढक्कावाद्येषु निरतो ढक्काधारणतत्परः ।। ३५

ढकारबीजसंपन्नो ढकाराक्षरमेदुरः ।
ढकारमध्यसदनो ढकारविहितान्त्रकः ।। ३६

णकारबीजवसतिर्णकारवसनोज्ज्वलः ।
णकारातिगभीराङ्गो णकाराराधनप्रियः ।। ३७

तरलाक्षीमहाहर्ता तारकासुरहृत्तरिः ।
तरलोज्ज्वलहाराढ्यस्तरलस्वान्तरञ्जकः ।। ३८

तारकासुरसंसेव्यस्तारकासुरमानितः ।
तुरङ्गवदनस्तोत्रसंतुष्टहृदयाम्बुजः ।। ३९

तुरङ्गवदनः श्रीमांस्तुरङ्गवदनस्तुतः ।
तमःपटलसंछन्नस्तमःसंततिमर्दनः ।। ४०

तमोनुदो जलशयस्तमःसंवर्धनो हरः ।
थवर्णमध्यसंवासी थवर्णवरभूषितः ।। ४१

थवर्णबीजसंपन्न स्थवर्णरुचिरालयः ।
दरभृद् दरसाराक्षो दरहृद् दरवञ्चकः ॥ ४२

दरफुल्लाम्बुजरुचिर्दरचक्रविराजितः ।
दधिसंग्रहणव्यग्रो दधिपाण्डरकीर्तिभृत् ॥ ४३

दध्यन्नपूजनरतो दधिवामनमोदकृत् ।
धन्वी धनप्रियो धन्यो धनाधिपसमञ्चितः ॥ ४४

धरो धरावनरतो धनधान्यसमृद्धिदः ।
धनंजयो धनाध्यक्षो धनदो धनवर्जितः ॥ ४५

धनग्रहणसंपन्नो धनसंमतमानसः ।
धनराजवनासक्तो धनराजयशोभरः ॥ ४६

धनराजमदाहर्ता धनराजसमीडितः ।
धर्मकृद्धर्मभृद्धर्मी धर्मनन्दनसंनुतः ॥ ४७

धर्मराजो धनासक्तो धर्मज्ञाकल्पितस्तुतिः ।
नरराजावनायत्तो नरराजाय निर्भरः ॥ ४८

नरराजस्तुतगुणो नरराजसमुज्ज्वलः ।
नवतामरसोदारो नवतामरसेक्षणः ॥ ४९

नवतामरसाहारो नवतामरसारुणः ।
नवसौवर्णवसनो नवनाथदयापरः ॥ ५०

नवनाथस्तुतनदो नवनाथसमाकृतिः ।
नालिकानेत्रमहितो नालिकावलिराजितः ॥ ५१

नालिकागतिमध्यस्थो नालिकासनसेवितः ।
पुण्डरीकाक्षरुचिरः पुण्डरीकमदापहः ॥ ५२

पुण्डरीकमुनिस्तुत्यः पुण्डरीकसुहृद्द्युतिः ।
पुण्डरीकप्रभारम्यः पुण्डरीकनिभाननः ।। ५३

पुण्डरीकाक्षसन्मानः पुण्डरीकदयापरः ।
परः परागतिवपुः परानन्दः परात्परः ।। ५४

परमानन्दजनकः परमान्नाधिकप्रियः ।
पुष्कराक्षकरोदारः पुष्कराक्षः शिवंकरः ।। ५५

पुष्करव्रातसहितः पुष्करारवसंयुतः ।
फट्कारतः स्तूयमानः फट्काराक्षरमध्यगः ।। ५६

फट्कारध्वस्तदनुजः फट्कारासनसंगतः ।
फलाहारः स्तुतफलः फलपूजाकृतोत्सवः ।। ५७

फलदानरतोऽत्यन्तफलसंपूर्णमानसः ।
बलस्तुतिर्बलाधारो बलभद्रप्रियंकरः ।। ५८

बलवान् बलहारी च बलयुग्वैरिभञ्जनः ।
बलदाता बलधरो बलराजितविग्रहः ।। ५९

बलाढ्यलो बलकरो बलासुरनिषूदनः ।
बलरक्षणनिष्णातो बलसंमोददायकः ।। ६०

बलसंपूर्णहृदयो बलसंहारदीक्षितः ।
भवस्तुतो भवपतिर्भवसंतानदायकः ।। ६१

भवध्वंसी भवहरो भवस्तम्भनतत्परः ।
भवरक्षणनिष्णातो भवसंतोषकारकः ।। ६२

भवसागरसंछेत्ता भवसिन्धुसुखप्रदः ।
भद्रदो भद्रहृदयो भद्रकार्यसमाश्रितः ।। ६३

भद्रश्रीचर्चिततनुर्भद्रश्रीदानदीक्षितः ।
भद्रपादप्रियो भद्रो ह्यभद्रवनभञ्जनः ॥ ६४

भद्रश्रीगानसरसो भद्रमण्डलमण्डितः ।
भरद्वाजस्तुतपदो भरद्वाजसमाश्रितः ॥ ६५

भरद्वाजाश्रमरतो भरद्वाजदयाकरः ।
मसारनीलरुचिरो मसारचरणोज्ज्वलः ॥ ६६

मसारसारसत्कार्यो मसारांशुकभूषितः ।
माकन्दवनसंचारी माकन्दजनरञ्जकः ॥ ६७

माकन्दानन्दमन्दारो माकन्दानन्दबन्धुरः ।
मण्डलो मण्डलाधीशो मण्डलात्मा सुमण्डलः ॥ ६८

मण्डलेशो मण्डलान्तर्मण्डलार्चितमण्डलः ।
मण्डलावननिष्णातो मण्डलावरणी घनः ॥ ६९

मण्डलस्थो मण्डलाग्र्यो मण्डलाभरणाङ्कितः ।
मधुदानवसंहर्ता मधुमञ्जुलवाग्भरः ॥ ७०

मधुदानाधिकरतो मधुमङ्गलवैभवः ।
मधुजेता मधुकरो मधुरो मधुराधिपः ॥ ७१

मधुवारणसंहर्ता मधुसंतानकारकः ।
मधुमासातिरुचिरो मधुमासविराजितः ॥ ७२

मधुपुष्टो मधुतनुर्मधुगो मधुसंवरः ।
मधुरो मधुराकारो मधुराम्बरभूषितः ॥ ७३

मधुरानगरीनाथो मधुरासुरभञ्जनः ।
मधुराहारनिरतो मधुराह्लाददक्षिणः ॥ ७४

मधुराम्भोजनयनो मधुराधिपसंगतः ।
मधुरानन्दचतुरो मधुरारातिसंगतः ॥ ७५

मधुराभरणोल्लासी मधुराङ्गदभूषितः ।
मृगराजवनीसक्तो मृगमण्डलमण्डितः ॥ ७६

मृगादरो मृगपतिर्मृगारातिविदारणः ।
यज्ञप्रियो यज्ञवपुर्यज्ञसंप्रीतमानसः ॥ ७७

यज्ञसंताननिरतो यज्ञसंभारसंभ्रमः ।
यज्ञयज्ञो यज्ञपदो यज्ञसंपादनोत्सुकः ॥ ७८

यज्ञशालाकृतावासो यज्ञसंभावितान्नकः ।
रसेन्द्रो रससंपन्नो रसराजो रसोत्सुकः ॥ ७९

रसान्वितो रसधरो रसचेलो रसाकरः ।
रसजेता रसश्रेष्ठो रसराजाभिरञ्जितः ॥ ८०

रसतत्त्वसमासक्तो रसदारपराक्रमः ।
रसराजो रसधरो रसेशो रसवल्लभः ॥ ८१

रसनेता रसावासो रसोत्करविराजितः ।
लवङ्गपुष्पसंतुष्टो लवङ्गकुसुमोचितः ॥ ८२

लवङ्गवनमध्यस्थो लवङ्गकुसुमोत्सुकः ।
लतावलिसमायुक्तो लतारससमर्चितः ॥ ८३

लताभिरामतनुभृल्लतातिलकभूषितः ।
वीरस्तुतपदाम्भोजो विराजगमनोत्सुकः ॥ ८४

विराजपत्रमध्यस्थो विराजरससेवितः ।
वरदो वरसंपन्नो वरो वरसमुन्नतः ॥ ८५

वरस्तुतिर्वर्धमानो वरधृद् वरसंभवः ।
वरदानरतो वर्यो वरदानसमुत्सुकः ॥ ८६

वरदानार्द्रहृदयो वरवारणसंयुतः ।
शारदास्तुतपादाब्जः शारदाम्भोजकीर्तिभृत् ॥ ८७

शारदाम्भोजनयनः शारदाध्यक्षसेवितः ।
शारदापीठवसतिः शारदाधिपसंनुतः ॥ ८८

शारदावासदमनः शारदावासभासुरः ।
शतक्रतुस्तूयमानः शतक्रतुपराक्रमः ॥ ८९

शतक्रतुसमैश्वर्यः शतक्रतुमदापहः ।
शरचापधरः श्रीमान् शरसंभववैभवः ॥ ९०

शरपाण्डरकीर्तिश्रीः शरत्सारसलोचनः ।
शरसंगमसंपन्नः शरमण्डलमण्डितः ॥ ९१

शरातिगः शरधरः शरलालनलालसः ।
शरोद्भवसमाकारः शरयुद्धविशारदः ॥ ९२

शरबृन्दावनरतिः शरसंमतविक्रमः ।
षट्पद्मः षट्पदाकारः षट्पदावलिसेवितः ॥ ९३

षट्पदाकारमधुरः षट्पदी षट्पदोद्धतः ।
षडङ्गवेदविनुतः षडङ्गपदमेदुरः ॥ ९४

षट्पद्मकवितावासः षड्बिन्दुरचितद्युतिः ।
षड्बिन्दुमध्यवसतिः षड्बिन्दुविशदीकृतः ॥ ९५

षडाम्नायस्तूयमानः षडाम्नायान्तरस्थितः ।
षट्छक्तिमङ्गलवृतः षट्चक्रकृतशेखरः ॥ ९६

सारसारसरक्ताङ्गः सारसारसलोचनः ।
सारदीप्तिः सारतनुः सारसाक्षकरप्रियः ॥ ९७

सारदीपी सारकृपः सारसावनकृज्ज्वलः ।
सारङ्गसारदमनः सारकल्पितकुण्डलः ॥ ९८

सारसारण्यवसतिः सारसारवमेदुरः ।
सार(म)गानप्रियः सारः सारसारसुपण्डितः ॥ ९९

सद्रक्षकः सदामोदी सदानन्दनदेशिकः ।
सद्वैद्यवन्द्यचरणः सद्वैद्योज्ज्वलमानसः ॥ १००

हरिजेता हरिरथो हरिसेवापरायणः ।
हरिवर्णो हरिचरो हरिगो हरिवत्सलः ॥ १०१

हरिद्रो हरिसंस्तोता हरिध्यानपरायणः ।
हरिकल्पान्तसंहर्ता हरिसारसमुज्ज्वलः ॥ १०२

हरिच्चन्दनलिप्ताङ्गो हरिमानससंमतः ।
हरिकारुण्यनिरतो हंसमोचनलालसः ॥ १०३

हरिपुत्राभयकरो हरिपुत्रसमन्वितः ।
हरिधारणसांनिध्यो हरिसंमोददायकः ॥ १०४

हेतिराजो हेतिधरो हेतिनायकसंस्तुतः ।
हेतिर्हरिर्हेतिवपुर्हेतिहा हेतिवर्धनः ॥ १०५

हेतिहन्ता हेतियुद्धकरो हेतिविभूषणः ।
हेतिदाता हेतिपरो हेतिमार्गप्रवर्तकः ॥ १०६

हेतिसंततिसंपूर्णो हेतिमण्डलमण्डितः ।
हेतिदानपरः सर्वहेत्युग्रपरिभूषितः ॥ १०७

हंसरूपी हंसगतिर्हंससंनुतवैभवः ।
हंसमार्गरतो हंसरक्षको हंसनायकः ॥ १०८

हंसदृग्गोचरतनुर्हंससंगीततोषितः ।
हंसजेता हंसपतिर्हंसगो हंसवाहनः ॥ १०९

हंसजो हंसगमनो हंसराजसुपूजितः ।
हंसवेगो हंसधरो हंससुन्दरविग्रहः ॥ ११०

हंसवत् सुन्दरतनुर्हंससंगतमानसः ।
हंसस्वरूपसारज्ञो हंससंनतमानसः ॥ १११

हंससंस्तुतसामर्थ्यो हरिरक्षणतत्परः ।
हंससंस्तुमाहात्म्यो हरपुत्रपराक्रमः ॥ ११२

क्षीरार्णवसमुद्भूतः क्षीरसंभवभावितः ।
क्षीराब्धिनाथसंयुक्तः क्षीरकीर्तिविभासुरः ॥ ११३

क्षणदारवसंहर्ता क्षणदारवसंमतः ।
क्षणदाधीशसंयुक्तः क्षणदानकृतोत्सवः ॥ ११४

क्षीराभिषेकसंतुष्टः क्षीरपानाभिलाषुकः ।
क्षीराज्यभोजनासक्तः क्षीरसंभववर्णकः ॥ ११५

इत्येतत् कथितं दिव्यं सर्वपापप्रणाशनम् ।
सर्वशत्रुक्षयकरं सर्वसंपत्प्रदायकम् ॥ ११६

सर्वसौभाग्यजनकं सर्वमङ्गलकारकम् ।
सर्वदारिद्र्यशमनं सर्वोपद्रवनाशनम् ॥ ११७

सर्वशान्तिकरं गुह्यं सर्वरोगनिवारणम् ।
अतिबन्धग्रहहरं सर्वदुःखनिवारकम् ॥ ११८

नाम्नां सहस्रं दिव्यानां चक्रराजस्य सत्पतेः ।
नामानि हेतिराजस्य ये पठन्तीह मानवाः ।
तेषां भवन्ति सकलाः संपदो नात्र संशयः ॥ ११९

-अहिर्बुध्न्यसंहितातः

# सुदर्शननामावलिः

ओं कल्याणगुणसंपन्नाय नमः । कल्याणवसनोज्ज्वलाय । कल्याणाचलगंभीराय । कल्याणजनरञ्जकाय । कल्याणदोषनाशाय । कल्याणरुचिरांगकाय । कल्याणांगदसंपन्नाय । कल्याणाकारसन्निभाय । करालवदनाय । अत्रासिने । करालांगाय । अभयंकराय । करालतनुजोद्दामाय । करालतनुभेदकाय । करञ्जवनमध्यस्थाय । करञ्जदधिभोजनाय । करंजासुरसंहर्त्रे । करंजमधुराङ्गकाय । खञ्जनानन्दजनकाय । खञ्जनाहारजूषिताय नमः ॥ २०

ओं खञ्जनायुधभृते नमः । दिव्यखञ्जनाखण्डगर्वहृते । खरान्तकाय । खररुचये । खरदुःखैरसेविताय । खरान्तकाय । खरोदाराय । खरासुरविभञ्जनाय । गोपालाय । गोपतये । गोप्त्रे । गोपस्त्रीनाथरञ्जकाय । गोजारुणतनवे । गोजाय । गोजारतिकृतोत्सवाय । गंभीरनाभये । गंभीराय । गंभीरार्थसमन्विताय । गंभीरवैद्यमरुताय । गंभीरगुणभूषिताय नमः ॥ ४०

ओं घनरावाय नमः । घनरुचये । घनगंभीरनिःस्वनाय । घनाघनौघनाशिने । घनसन्तानदायकाय । घनरोचिषे । घनचराय । घनचन्दनचर्चिताय । घनहेतये । घनभुजाय । घनाय । अखिलसुरार्चिताय । ङकारावधिविभवाय । ङकाराय । मुनिसंमताय । ङकारवीतसहिताय । ङकाराकारभूषिताय । चक्रराजाय । चक्रपतये । चक्राधीशाय नमः ॥ ६०

ओं सुचक्रभुजे नमः । चक्रसेव्याय । चक्रधराय । चक्रभूषणभूषिताय । चक्रराजरुचये । चक्राय । चक्रपालनतत्पराय । चक्रधृते । चक्रवरदाय । चक्रभूषणभूषिताय । सुचक्रधिये ।

सुचक्राख्याय । सुचक्रगुणभूषिताय । विचक्राय । चक्रनिरताय । चक्रसंपन्नवैभवाय । चक्रदोषे । चक्रदाय । चक्राय । चक्रराजपराक्रमाय नमः ।। ८०

ओं चक्रनादाय नमः । चक्रचराय । चक्रगाय । चक्रपाशकृते । चक्रव्यापिने । चक्रगुरवे । चक्रहारिणे । विचक्रभृते । चक्राज्ञाय । चक्रमहिताय । चक्रवाकगुणाकराय । आचक्राय । चक्रधर्मज्ञाय । चक्रकाय । चक्रमर्दनाय । आचक्रनियमाय । चक्राय । सर्वपापविधूननाय । चक्रज्वालाय । चक्रधराय नमः ।। १००

ओं चक्रपालितविग्रहाय नमः । चक्रवर्तिने । चक्रदायिने । चक्रकारिणे । मदापहाय । चक्रकोटिमहानादाय । चक्रकोटि-समप्रभाय । चक्रराजावनचराय । चक्रराजान्तरोज्वलाय । चञ्चला-रातिदमनाय । चञ्चलस्वान्तरोमकृते । चञ्चलाय । मानसोल्लासिने । चञ्चलाचलभासुराय । चञ्चलारातिनिरताय । चञ्चलाधिकचञ्च-लाय । छाययाऽखिलतापघ्नाय । छायामदविभञ्जनाय । छायाप्रियाय । अधिकरुचये नमः ।। १२०

ओं छायावृक्षसमाश्रयाय नमः । छायान्विताय । छाय-याऽर्च्याय । छायाधिकसुखप्रदाय । छायांबरपरीधानाय । छाया-त्मजनमुञ्छिताय । जलजाक्षीप्रियकराय । जलजानन्ददायकाय । जलजासिद्धिरुचिराय । जलजालसमाय । भराय । जलजाला-पसंस्तुत्याय । जलजाताय मोदकृते । जलजाहारचतुराय । जलजारा-धनोत्सुकाय । जनकस्तुतिसन्तुष्टाय । जनकाराधिताधिकाय । जनकामोदनपराय । जनकानन्ददायकाय । जनकाध्यानसन्तुष्टहृद-याय नमः ।। १४०

ओं जनकार्चिताय नमः । जनकानन्दजननाय । जन-कृद्धृदयांबुजाय । झंझामारुतवेगाढ्याय । झंझामारुतसङ्गराय । झंझामारुतसंरावाय । झंझामारुतविक्रमाय । ञकाराम्बुज-मध्यस्थाय ।ञकारकृतसंनिधये। टङ्कधारिणे। टंकवपुषे। टङ्कसंहार-कारकाय । टङ्कच्छिन्नसुवर्णाभाय । टंकारधनुरुज्ज्वलाय । टङ्काराग्निसमाकाराय । टङ्काररवमेदुराय । टंकारकीर्तिभरिताय । टंकारानन्दवर्धनाय। डंभसंहतिसंहर्त्रे। डंभसन्ततिवर्धनाय नमः ।। १६०

ओं डंभधृशे नमः । डंभहृदयाय । डंभदण्डनतत्पराय । डिंभधृशे ।डिंभकृते। डिंभाय। डिंभसूदनतत्पराय। डिंभपापहराय । डिंभसंभावितपदांबुजाय । डिंभरोघत्कटम्बाजाय । डमरुध्यानत-त्पराय । डमरूद्भवसंहर्त्रे । डमरूद्भवनन्दनाय । डाडिमीवन-मध्यस्थाय । डाडिमीकुसुमप्रियाय । डाडिमीफलसन्तुष्टाय । डाडिमीफलवर्जिताय । ढक्कामनोहरवपुषे । ढक्कारवविराजिताय । ढक्कावाद्येषु निरताय नमः ।। १८०

ओं ढक्काधारणतत्पराय नमः । ढकारबीजसंपन्नाय । ढकाराक्षरमेदुराय । ढकारमध्यसदनाय । ढकारविहितान्त्रकाय । णकारबीजवसतये। णकारवसनोज्ज्वलाय। णकारातिगभीराङ्गाय । णकाराराधनप्रियाय । तरलाक्षीमहाहर्त्रे । तारकासुरहृते । तरये । तरलोज्ज्वलहाराढ्याय । तरलस्वान्तरञ्जकाय । तारकासुर-संसेव्याय । तारकासुरमानिताय । तुरङ्गवदनस्तोत्र सन्तुष्टहृद-यांबुजाय। तुरङ्गवदनाय। श्रीमते। तुरङ्गवदनस्तुताय नमः ।। २००

ओं तमःपटल संछन्नाय नमः । तमःसन्ततिमर्दनाय । तमोनुदाय । जलशयाय । तमःसंवर्धनाय । हराय । थवर्णमध्य-संवासिने। थवर्णवरभूषिताय। थवर्णबीजसंपन्नाय। थवर्णरुचिराल-

याय । दरभृते। दरसाराक्षाय। दरहृदे। दरवश्चकाय। दरफुल्लाम्बुज-रुचये । दरचक्रविराजिताय । दधिसंग्रहणव्यग्राय । दधिपाण्डर-कीर्तिभृते। दध्यन्नपूजनरताय। दधिवामनमोदकृते नमः ।। २२०

ओं धन्विने नमः । धनप्रियाय । धन्याय । धनाधिप-समश्रिताय । धराय । धरावनरताय । धनधान्यसमृद्धिदाय । धनञ्जयाय। धनाध्यक्षाय। धनदाय। धनवर्जिताय। धनग्रहण-संपन्नाय। धनसंमतमानसाय। धनराजवनासक्ताय। धनराजय-शोभराय । धनराजमदाहर्त्रे । धनराजसमीडिताय । धर्मकृते । धर्मभृते । धर्मिणे नमः ।। २४०

ओं धर्मनन्दनसन्नुताय नमः । धर्मराजाय । धनासक्ताय । धर्मज्ञाकल्पितस्तुतये। नरराजावनायत्ताय। नरराजाय निर्भराय। नरराजस्तुतगणाय । नरराजसमुज्ज्वलाय । नवतामरसोदाराय । नवतामरसेक्षणाय । नवतामरसाहाराय । नवतामरसारुणाय । नवसौवर्णवसनाय । नवनाथदयापराय । नवनाथस्तुतनदाय । नवनाथसमाकृतये। नालिकानेत्रमहिताय। नालिकावलिराजिताय । नालिकागतिमध्यस्थाय। नालिकासनसेविताय नमः ।। २६०

ओं पुण्डरीकाक्षरुचिराय नमः । पुण्डरीकमदापहाय । पुण्डीकमुनिस्तुत्याय। पुण्डरीकसुहृद्द्युतये। पुण्डरीकप्रभारम्याय । पुण्डरीकनिभाननाय। पुण्डरीकाक्षसन्मानाय। पुण्डरीकदयापराय । पराय । परागतिवपुषे । परानन्दाय । परात्पराय । परमानन्द-जनकाय । परमान्नाधिकप्रियाय । पुष्कराक्षकरोदाराय । पुष्क-राक्षाय । शिवंकराय। पुष्करव्रातसहिताय। पुष्करारवसंयुताय । फट्कारतःस्तूयमानाय नमः ।। २८०

ओं फट्कारा‍क्षरमध्यगाय नमः । फट्कारध्वस्तदनुजाय । फट्कारासनसंगताय । फलाहाराय । स्तुतफलाय । फलपूजाकृतोत्सवाय । फलदानरताय । अत्यन्तफलसंपूर्णमानसाय । बलस्तुतये । बलाधाराय । बलभद्रप्रियंकराय । बलवते । बलहारिणे । बलयुग्वैरिभञ्जनाय । बलदात्रे । बलधराय । बलराजितविग्रहाय । बलाढ्लाय । बलकराय । बलासुरनिषूदनाय नमः ।। ३००

ओं बलरक्षणनिष्णाताय नमः । बलसंमोददायकाय । बलसंपूर्णहृदयाय । बलसंहारदीक्षिताय । भवस्तुताय । भवपतये । भवसन्तानदायकाय । भवध्वंसिने । भवहराय । भवस्तंभनतत्पराय । भवरक्षणनिष्णाताय । भवसन्तोषकारकाय । भवसागरसंछेत्त्रे । भवसिन्धुसुखप्रदाय । भद्रदाय । भद्रहृदयाय । भद्रकार्यसमाश्रिताय । भद्रश्रीचर्चिततनवे । भद्रश्रीदानदीक्षिताय । भद्रपादप्रियाय नमः ।। ३२०

ओं भद्राय नमः । अभद्रवनभञ्जनाय । भद्रश्रीगानसरसाय । भद्रमण्डलमण्डिताय । भरद्वाजस्तुतपदाय । भरद्वाजसमाश्रिताय । भरद्वाजाश्रमरताय । भरद्वाजदयाकराय । मसारनीलरुचिराय । मसारचरणोज्ज्वलाय । मसारसारसत्कार्याय । मसारांशुकभूषिताय । माकन्दवनसञ्चारिणे । माकन्दजनरञ्जकाय । माकन्दानन्दमन्दाराय । माकन्दानन्दबन्धुराय । मण्डलाय । मण्डलाधीशाय । मण्डलात्मने । सुमण्डलाय नमः ।। ३४०

ओं मण्डलेशाय नमः । मण्डलान्तर्मण्डलार्चितमण्डलाय । मण्डलावननिष्णाताय । मण्डलावरण्ये । घनाय । मण्डलस्थाय । मण्डलाग्र्याय । मण्डलाभरणाङ्किताय । मधुदानवसंहर्त्रे । मधुमञ्जुलवाग्भराय । मधुदानाधिकरताय । मधुमङ्गलवैभवाय ।

मधुजेत्रे । मधुकराय। मधुराय। मधुराधिपाय। मधुवारणसंहर्त्रे। मधुसन्तानकारकाय। मधुमासातिरुचिराय। मधुमासविराजिताय नमः ।। ३६०

ओं मधुपुष्टाय नमः । मधुतनवे । मधुगाय । मधुसंवराय । मधुराय। मधुराकाराय। मधुरांबरभूषिताय। मधुरानगरीनाथाय। मधुरासुरभञ्जनाय । मधुराहारनिरताय । मधुराह्लाददक्षिणाय । मधुरांभोजनयनाय । मधुराधिपसङ्गताय । मधुरानन्दचतुराय । मधुरारातिसङ्गताय । मधुराभरणोल्लासिने । मधुराङ्गदभूषिताय । मृगराजवनीसक्ताय। मृगमण्डलमण्डिताय। मृगादराय नमः ।। ३८०

ओं मृगपतये नमः । मृगारातिविदारणाय । यज्ञप्रियाय । यज्ञवपुषे। यज्ञसंप्रीतमानसाय। यज्ञसन्तानिरताय। यज्ञसंभार-संभ्रमाय । यज्ञयज्ञाय । यज्ञपदाय । यज्ञसंपादनोत्सुकाय । यज्ञशालाकृतावासाय। यज्ञसंभावितान्नकाय। रसेन्द्राय। रससंप-न्नाय । रसराजाय । रसोत्सुकाय । रसान्विताय । रसधराय । रसचेलाय। रसाकराय नमः ।। ४००

ओं रसजेत्रे नमः । रसश्रेष्ठाय । रसराजाभिरञ्जिताय । रसतत्त्वसमासक्ताय। रसदारपराक्रमाय। रसराजाय। रसधराय। रसेशाय । रसवल्लभाय । रसनेत्रे । रसावासाय । रसोत्करविरा-जिताय । लवङ्गपुष्पसन्तुष्टाय। लवङ्गकुसुमोचिताय। लवङ्गवन-मध्यस्थाय । लवङ्गकुसुमोत्सुकाय । लतावलिसमायुक्ताय । लतारससमर्चिताय। लताभिरामतनुभृते। लतातिलकभूषिताय नमः ।। ४२०

ओं वीरस्तुतपदांभोजाय नमः । विराजगमनोत्सुकाय । विराजपत्रमध्यस्थाय। विराजरससेविताय। वरदाय। वरसंपन्नाय ।

वराय । वरसमुन्नताय । वरस्तुतये । वर्धमानाय । वरधृते । वरसंभवाय । वरदानरताय । वर्याय । वरदानसमुत्सुकाय । वरदानार्द्रहृदयाय । वरवारणसंयुताय । शारदास्तुतपादाब्जाय । शारदांभोजकीर्तिभृते । शारदांभोजनयनाय नमः ।। ४४०

ओं शारदाध्यक्षसेविताय नमः । शारदापीठवसतये । शारदाधिपसन्नुताय । शारदावासदमनाय । शारदावासभासुराय । शतक्रतुस्तूयमानाय । शतक्रतुपराक्रमाय । शतक्रतुसमैश्वर्याय । शतक्रतुमदापहाय । शरचापधराय । श्रीमते । शरसंभववैभवाय । शरपाण्डरकीर्तिश्रिये । शरत्सारसलोचनाय । शरसङ्गमसंपन्नाय । शरमण्डलमण्डिताय । शरातिगाय । शरधराय । शरलालन-लालसाय । शरोद्भवसमाकाराय नमः ।। ४६०

ओं शरयुद्धविशारदाय नमः । शरवृन्दावनरतये । शरसंमितविक्रमाय । षट्पदाय । षट्पदाकाराय । षट्पदावलि-सेविताय । षट्पदाकारमधुराय । षट्पदिने । षट्पदोद्धताय । षडङ्गवेद-विनुताय । षडङ्गपदमेदुराय । षट्पञ्चकवितावासाय । षड्बिन्दुर-चितद्युतये । षड्बिन्दुमध्यवसतये । षड्बिन्दुविशदीकृताय । षडाम्नायस्तूयमानाय । षडाम्नायान्तरस्थिताय । षट्छक्तिमङ्गल-वृताय । षट्चक्रकृतशेखराय । सारसारसरक्ताङ्गाय नमः ।। ४८०

ओं सारसारसलोचनाय नमः । सारदीप्तये । सारतनवे । सारसाक्षकरप्रियाय । सारदीपिने । सारकृपाय । सारसावन-कृज्ज्वलाय । सारङ्गसारदमनाय । सारकल्पितकुण्डलाय । सार-सारण्यवसतये । सारसारवमेदुराय । सार(म)गानप्रियाय । साराय । सारसारसुपण्डिताय । सद्रक्षकाय । सदामोदिने । सदानन्द-नदेशिकाय । सद्वैद्यवन्द्यचरणाय । सद्वैद्योज्ज्वलमानसाय । हरिजेत्रे नमः ।। ५००

ओं हरिरथाय नमः। हरिसेवापरायणाय। हरिवर्णाय। हरिच्चराय। हरिगाय। हरिवत्सलाय। हरिद्राय। हरिसंस्तोत्रे। हरिध्यानपरायणाय। हरिकल्पान्तसंहर्त्रे। हरिसारसमुज्ज्वलाय। हरिचन्दनलिप्तांगाय। हरिमानससंमताय। हरिकारुण्यनिरताय। हंसमोचनलालसाय। हरिपुत्राभयकराय। हरिपुत्रसमन्विताय। हरिधारणसान्निध्याय। हरिसंमोददायकाय। हेतिराजाय नमः ॥ ५२०

ओं हेतिधराय नमः। हेतिनायकसंस्तुताय। हेतये। हरये। हेतिवपुषे। हेतिघ्ने। हेतिवर्धनाय। हेतिहन्त्रे। हेतियुद्धकराय। हेतिविभूषणाय। हेतिदात्रे। हेतिपराय। हेतिमार्गप्रवर्तकाय। हेतिसन्ततिसंपूर्णाय। हेतिमण्डलमण्डिताय। हेतिदानपराय। सर्वहेत्युग्रपरिभूषिताय। हंसरूपिणे। हंसगतये। हंससन्नुतवैभवाय नमः ॥ ५४०

ओं हंसमार्गरताय नमः। हंसरक्षकाय। हंसनायकाय। हंसदृग्गोचरतनवे। हंससङ्गीततोषिताय। हंसजेत्रे। हंसपतये। हंसगाय। हंसवाहनाय। हंसजाय। हंसगमनाय। हंसराजसु-पूजिताय। हंसवेगाय। हंसधराय। हंससुन्दरविग्रहाय। हंसव-त्सुन्दरतनवे। हंससङ्गतमानसाय। हंसस्वरूपसारज्ञाय। हंससंन-तमानसाय। हंससंस्तुतसामर्थ्याय नमः ॥ ५६०

ओं हरिरक्षणतत्पराय नमः। हंससंस्तुतमाहात्म्याय। हरपुत्रपराक्रमाय। क्षीरार्णवसमुद्भूताय। क्षीरसंभवभाविताय। क्षीराब्धिनाथसंयुक्ताय। क्षीरकीर्तिविभासुराय। क्षणदारवसंहर्त्रे। क्षणदारवसंमताय। क्षणदाधीशसंयुक्ताय। क्षणदानकृतोत्सवाय। क्षीराभिषेकसन्तुष्टाय। क्षीरपानाभिलाषुकाय। क्षीराज्यभोजना-सक्ताय। क्षीरसंभववर्णकाय नमः ॥ ५७५

# श्री गरुडसहस्रनामस्तोत्रम्

## श्रीकृष्णभट्टाचार्यप्रणीतम्

सर्ववेदबृहन्नीडसमारूढाय साक्षिणे।

सामवेदस्वरूपाय गरुडाय नमो नमः ।।

अस्य श्री गरुडसहस्रनामस्तोत्र महामन्त्रस्य वासिष्ठ ऋषिः, मात्राश्छन्दांसि, सर्वाभीष्टप्रदायी भगवान्पक्षिराजो गरुडो देवता। हलो बीजानि, स्वराश्शक्तयः, बिन्दवः कीलकानि, गरुडरूपिमहाविष्णुप्रीत्यर्थे जपे विनियोगः। गरुडात्मने अङ्गुष्ठाभ्यां नमः। वैनतेयाय तर्जनीभ्यां नमः। तार्क्ष्याय मध्यमाभ्यां नमः। खगोत्तमाय अनामिकाभ्यां नमः। कपिलाक्षाय कनिष्ठिकाभ्यां नमः। नागाभरणालङ्कृतशरीराय करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः ।। ओं भूर्भुवस्सुवरोमिति दिग्बन्धः ।। ध्यानं—

स्वर्णाभजानुं हिमतुल्यसक्थिमाकण्ठरक्तं परिनीलकेशम्

नीलाग्रनासं हरितांबराढ्यं सुपर्णमीडेऽमृतकुम्भहस्तम् ।।

सुमुखः सुवहः सुखकृत्सुमुखाभिधपन्नगेड्भूषः

सुरसङ्घसेविताङ्घ्रिः सुतदायी पातु नः सूरिः ।। १

सुजनपरित्राता नः सुचरितसेव्यः सुपर्णोऽव्यात्।

पन्नगभूषः पतगः पाता प्राणाधिपः पक्षी ।। २

पद्मादिनागवैरी पद्माप्रियदास्यकृत् पायात्।

पतगेन्द्रः परभेदी परिहृतपाकारिदर्पकूटो नः ।। ३

नागारिर्नगतुल्यो नाकौकस्स्तूयमानचरितोऽव्यात्।
नरकदकर्मनिहन्ता नरपूज्यो नाशिताहिविषकूटः ॥ ४

नतरक्षी निखिलेड्यो निर्वाणात्मा निरस्तदुरितौघः।
सिद्धध्येयः सकलः सूक्ष्मोऽव्यात् सूर्यकोटि सङ्काशः ॥ ५

सुखरूपी स्वर्णनिभः स्तम्बेरमभोजनः सुधाहारी।
सुमनाः सुकीर्तिनाथो गरुडो गम्भीरघोषोऽव्यात् ॥ ६

गालवमित्रं गेयो गीतिज्ञः पातु गतिमतां श्रेष्ठः।
गन्धर्वार्च्यो गुह्यो गुणसिन्धुर्गोत्रभिन्मान्यः ॥ ७

रविसारथिसहजोऽव्याद्रत्नाभरणान्वितो रसज्ञो नः।
रुद्राकान्तो रुक्मोज्ज्वलजानू रजतनिभसक्थि ः ॥ ८

रक्तप्रभकण्ठोऽव्याद्रयिमान् राजा रथाङ्गपाणिरथः।
ताक्ष्र्यस्तटिन्निभो नस्तनुमध्यस्तोषितात्मजननीकः ॥ ९

तारात्मा महनीयो मतिमान्मुख्यो मुनीन्द्रेड्यः।
माधववाहो रक्षेत् त्रिवृदात्मस्तोमशीर्षो नः ॥ १०

त्रिनयनपूज्यस्त्रियुगस्त्रिषवणमज्जन्महात्महन्नीडः।
त्रसरेण्वादिमनिखिलज्ञाता पायात्त्रिवर्गफलदायी ॥ ११

त्र्यक्षस्त्रासितदैत्यस्त्रय्यन्तेड्यस्त्रयीरूपः।
वृत्रारिमानहारी वृषदायी दिशतु भद्रं नः ॥ १२

वृष्णिवराद्ध्युषितांसो वृश्चिकलूतादिविषदाही।
वृकदंशजन्यरोगध्वंसी नः पातु विहगराड्वीरः ॥ १३

विषहृद्विनतातनुजो वीर्याढ्यः पातु तेजसां राशिः ।
तुर्याश्रमिजप्यमनुस्तृप्तस्तृष्णाविहीनो नः ॥ १४

तुलनाहीनस्तर्क्यस्तक्षकवैरी तटिद्गौरः ।
तारादिमपञ्चार्णरजन्द्रीरहितो धनं दद्यात् ॥ १५

शितनासाग्रः शान्तः शतमखवैरिप्रभञ्जनः शास्ता ।
शात्रववीरुद्दात्रं शमिताघौघः शरण्योऽव्यात् ॥ १६

शतदशलोचनसहजः पायाच्छकुनः शकुन्ताग्र्यः ।
रत्नालङ्कृतमूर्ती रसिको राजीवचारुचरणयुगः ॥ १७

रङ्गेशचारुमित्रं रोचिष्मान्पातु राजदुरुपक्षः ।
रुचिनिर्जितकनकाद्री रघुपत्यहिपाशबन्धविच्छेत्ता ॥ १८

रञ्जितखगनिवहोऽव्याद्रम्याकारो गतक्रोधः ।
गीष्पतिनुतो गरुत्मान्गीर्वाणेशो गिरां नाथः ॥ १९

गुप्तस्वभक्तनिवहो गुञ्जाक्षो गोप्रियो गूढः ।
गानप्रियो यतात्मा यमिनम्यो यक्षसेव्योऽव्यात् ॥ २०

यज्ञप्रियो यशस्वी यज्ञात्मा यूथपो योगी ।
यन्त्राराध्यो यागप्रभवो भद्रं सदा कुर्यात् ॥ २१

त्रिजगन्नाथस्त्रस्यत्पन्नगबृन्दस्त्रिलोकपरिरक्षी ।
तृषिताच्युततृष्णापहतटिनीजनको भृशं रक्षेत् ॥ २२

त्रिवलीरञ्जितजठरस्त्रियुगगुणाढ्यस्त्रिमूर्तिसमतेजाः ।
तपनद्युतिमकुटोऽव्यात्तरवारिभ्राजमानकटिदेशः ॥ २३

ताम्रास्यश्चक्रधरश्चीराम्बरमानसावासः ।
चूर्णितपुलिन्दबृन्दश्चारुगतिश्चोरभयहाऽव्यात् ॥ २४

चञ्चूपुटभिन्नाहिश्चर्वितकमठश्चलच्चेलः ।
चित्रितपक्षः पायाच्चम्पकमालाविराजदुरुवक्षाः ॥ २५

क्षुभ्यन्नीरधिवेगः क्षान्तिः क्षीराब्धिवासनिरतोऽव्यात् ।
क्षुद्रग्रहमर्दी नः क्षत्रियपूज्यः क्षयादिरोगहरः ॥ २६

क्षिप्रशुभोत्करदायी क्षीणारातिः क्षितिक्षमाशाली ।
क्षितितलवासी क्षेमं सोमप्रियदर्शनो दिशतु ॥ २७

सर्वेशस्सहजबलस्सर्वात्मा सर्वदृक् पातु ।
तर्जितरक्षस्सङ्घस्ताराधीशद्युतिस्तुष्टः ॥ २८

तपनीयकान्तिरव्यात्तत्वज्ञानप्रदः सततम् ।
मान्यो मञ्जुलभाषी महितात्मा मर्त्यधर्मरहितो नः ॥ २९

मोचितविनतादास्यो मुक्तात्मा मुक्तये भवतु ।
महदञ्चितचरणाब्जो मुनिपुत्रो मौक्तिकोज्ज्वलद्धारः ॥ ३०

मङ्गलकार्यानन्दो ह्यात्माऽऽत्मक्रीड आत्मरतिरव्यात् ।
आकण्ठकुङ्कुमाभः आकेशान्तात्सितेतरश्चार्यः ॥ ३१

आहृतपीयूषोऽव्यादाशाकृच्चाशुगमनो नः ।
आकाशगतिस्तरुणस्तर्कज्ञेयस्तमोहन्ता ॥ ३२

तिमिरादिरोगहारी तूर्णगतिर्मन्त्रकृत् पायात् ।
मन्त्री मन्त्राराध्यो मणिहारो मन्दराद्रिनिभमूर्तिः ॥ ३३

सर्वातीतः सर्वः सर्वाधारः सनातनः स्वङ्गः।
सुभगः सुलभः सुबलः सुन्दरबाहुः सुखं दद्यात्॥ ३४

सामात्मा मखरक्षी मखिपूज्यो मौलिलग्नमकुटोऽव्यात्।
मञ्जीरोज्ज्वलचरणो मर्यादाकृन्महातेजाः॥ ३५

मायातीतो मानी मङ्गलरूपी महात्माऽव्यात्।
तेजोधिकृतमिहिरस्तत्वात्मा तत्वनिष्णातः॥ ३६

तापसहितकारी नस्तापध्वंसी तपोरूपः।
ततपक्षस्तथ्यवचास्तरुकोटरवास निरतोऽव्यात्॥ ३७

तिलकोज्ज्वल निटिलो नस्तुङ्गोऽव्यात्त्रिदशभीतिपरिमोषी।
तापिञ्छहरितवासास्तालध्वजसोदरो ज्वलत्केतुः॥ ३८

तनुजितरुक्मस्तारस्तारध्वानस्तृणीकृताराति:।
तिग्मनखः शङ्कुर्यात्तन्त्रीस्वानो नृदेव शुभदायी॥ ३९

निगमोदितविभवोऽव्यान्नीडस्थो निर्जरो नित्यः।
निनदहताशुभनिवहो निर्माता निष्कलो नयोपेतः॥ ४०

नूतनविद्रुमकण्ठो विष्णुसमो वीर्यजितलोकः।
विरजा विततसुकीर्तिर्विद्यानाथो विषं दहेद्धीशः॥ ४१

विज्ञानात्मा विजयो वरदो वासाधिकारविधिपूज्यः।
मधुरोक्तिर्मृदुभाषी मल्लीदामोज्ज्वलत्तनुः पायात्॥ ४२

महिलाजनशुभकृन्नो मृत्युहरो मलयवासिमुनिपूज्यः।
मृगनाभिलिप्तनिटिलो मरकतमयकिङ्किणीकोऽव्यात्॥ ४३

मन्देतरगतिरव्यान्मेधावी दीनजनगोप्ता।
दीप्ताग्रनासिकास्यो दारिद्र्यध्वंसनो दयासिन्धुः ॥ ४४

दान्तप्रियकृद्दान्तो दमनकधारी भृशं दयताम्।
दण्डितसाधुविपक्षो दैन्यहरो दानधर्मनिरतो नः ॥ ४५

वन्दारुबृन्दशुभकृद्वल्मीकौकोऽभयङ्करो विनुतः।
विहितो वज्रनखाग्रो यततामिष्टप्रदो यन्ता ॥ ४६

युगबाहुर्यवनासो यवनारिर्यातनां नुदतु।
ब्रह्मण्यो ब्रह्मरतो ब्रह्मात्मा ब्रह्मगुप्तो नः ॥ ४७

ब्राह्मणपूजितमूर्तिर्ब्रह्मध्यायी बृहत्पक्षः।
ब्रह्मसमो ब्रह्मांशो ब्रह्मज्ञो हरितवर्णचेलोऽव्यात् ॥ ४८

हरिकैङ्कर्यरतोऽव्याद्धरिदासो हरिकथासक्तः।
हरिपूजननियतात्मा हरिभक्तध्यातदिव्यशुभरूपः ॥ ४९

हरिपादन्यस्तात्मात्मीयभरो हरिकृपापात्रम्।
हरिपादवहनसक्तो हरिमन्दिरचिह्नमूर्तिरवतान्नः ॥ ५०

दमितपविगर्वकूटो दरनाशी दरधरो दक्षः।
दानवदर्पहरो नो रदनद्युतिरञ्जिताशोऽव्यात् ॥ ५१

रीतिज्ञो रिपुहन्ता रोगध्वंसी रुजाहीनः।
धर्मिष्ठो धर्मात्मा धर्मज्ञः पातु धर्मिजनसेव्यः ॥ ५२

धर्माराध्यो धनदो धीमान् धीरो धवो धियं दद्यात्।
धिक्कृतसुरासुरास्त्रस्त्रेताहोमप्रभावसञ्जातः ॥ ५३

तटिनीतीरनिवासी तनयार्थ्यर्च्यस्तनुत्राणः ।
तुष्यज्जनार्दनोऽव्यात् तुरीयपुरुषार्थदस्तपस्वीन्द्रः ॥ ५४

तरलस्तोयचरारिस्तुरगमुखप्रीतिकृत् पातु ।
रणशूरो रयशाली रतिमान् राजीवहारभृद्रसदः ॥ ५५

रक्षस्सङ्घविनाशी रथिकवराच्र्योऽवताद्रणद्भूषः ।
रभसगती रहितार्तिः पूतः पुण्यः पुरातनः पूर्णः ॥ ५६

पद्माच्र्यः पवनगतिः पतितत्राणः परात्परः पायात् ।
पीनांसः पृथुकीर्तिः क्षतजाक्षः क्ष्माधरः क्षणः क्षणदः ॥ ५७

क्षेपिष्ठः क्षयरहितः क्षुण्णक्ष्माभृत् क्षुरान्तनासोऽव्यात् ।
क्षिपवर्णघटितमन्त्रः क्षितिसुरनम्यो ययातीड्यः ॥ ५८

याज्यो युक्तो योगो युक्ताहारो यमार्चितो युगकृत् ।
याचितफलप्रदायी यत्नाच्र्यः पातु यातनाहन्ता ॥ ५९

ज्ञानी ज्ञप्तिशरीरो ज्ञाताऽव्यात् ज्ञानदो ज्ञेयः ।
ज्ञानादिमगुणपूर्णो ज्ञप्तिहताविद्यको ज्ञमणिः ॥ ६०

ज्ञात्यहिमर्दनदक्षो ज्ञानिप्रियकृद्यशोरोशिः ।
युवतिजनेप्सितदो नो युवपूज्योऽव्याद्युवा च यूथस्थः ॥ ६१

यामाराध्यो यमभयहारी युद्धप्रियो योद्धा ।
योगज्ञज्ञातोऽव्यात् ज्ञातृज्ञेयात्मको ज्ञप्तिः ॥ ६२

ज्ञानहताशुभनिवहो ज्ञानघनो ज्ञाननिधिरव्यात् ।
ज्ञातिजभयहारी नो ज्ञानप्रतिबन्धकर्मविच्छेदी ॥ ६३

ज्ञानेनहताज्ञानध्वान्तो ज्ञानीशवन्द्यचरणोऽव्यात्।
यज्वप्रियकृद्याजकसेव्यो यजनादिषट्कनिरतार्च्यः ॥ ६४

यायावरशुभकृन्नस्तनुतां भद्रं यशोदायी।
यमयुतयोगिप्रेक्ष्यो यादवहितकृद्यतीश्वरप्रणयी ॥ ६५

योजनसहस्रगामी यततां नो मङ्गले यथार्थज्ञः।
पोषितभक्तः प्रार्थ्यः पृथुतरबाहुः पुराणवित्प्राज्ञः ॥ ६६

पैशाचभयनिहन्ता प्रबलः प्रथितः प्रसन्नवदनयुतः।
पत्ररथो नः पायाच्छायानश्यद्भुजंगौघः ॥ ६७

छर्दितविप्रश्छिन्नारातिश्छन्दोमयः सततम्।
छन्दोविच्छन्दोज्ञश्छन्दश्शास्त्रार्थवित् पातु ॥ ६८

छान्दसशुभङ्करोऽव्याच्छन्दोगध्यातशुभमूर्तिः।
छलमुखदोषविहीनाराध्यश्छूनायतोज्वलद्बाहुः ॥ ६९

छन्दोनिरतश्छात्रोत्करसेव्यश्छत्रभृन्महितः।
छन्दोवेद्यश्छन्दःप्रतिपादितैभवः पायात् ॥ ७०

छागवपाहुतितृप्तश्छायापुत्रोद्भवार्तिविच्छेदी।
छविनिर्जितखर्जूरश्छादित दिविषत् प्रभावोऽव्यात् ॥ ७१

दुःस्वप्ननाशनो नो दमनो देवाग्रणीर्दाता।
दुर्धर्षो दुष्कृतहा दीप्तास्यः पातु दुस्सहो देवः ॥ ७२

दीक्षितवरदः सरसः सर्वेड्यः संशयच्छेत्ता।
सर्वज्ञः सत्योऽव्याद्योगाचार्यो यथार्थवित्प्रियकृत् ॥ ७३

योगप्रमाणवेत्ता युञ्जानो योगफलदायी ।
गानासक्तो गहनो रक्षेद्ग्रहचारपीडनध्वंसी ।। ७४

ग्रहभयहा गदहारी गुरुपक्षो गोरसादी नः ।
गव्यप्रियो गकारादिमनामा पातु गेयवरकीर्तिः ।। ७५

नीतिज्ञो निरवद्यो निर्मलचित्तो नरप्रियो नम्यः ।
नारदगेयो नन्दिस्तुतकीर्तिर्निर्णयात्मको रक्षेत् ।। ७६

निर्लेपो निर्द्वन्द्वो धीधिष्ण्यो धिक्कृताराति: ।
धृष्टो धनञ्जयार्चिश्शमनोऽव्याद्धान्यदो धनिकः ।। ७७

धन्वीड्यो धनदार्च्यो धूतार्तिप्रापको धुरीणो नः ।
षण्मुखनुतचरितोव्यादूषड्गुणपूर्णः षडर्धनयनसमः।। ७८

नादात्मा निर्दोषो नवनिधिसेव्यो निरञ्जनो नव्यः ।
यतिमुक्तिरूपफलदो यतिपूज्यो हापयेद्दुरितम् ।। ७९

शतमूर्तिः शिशिरात्मा शास्त्रज्ञः पातु शास्त्रकृत् श्रीलः ।
शशधरकीर्तिः शश्वत्प्रियदो नः शाश्वतः शमिध्यातः ।। ८०

शुभकृत्फल्गुनसेव्यः फलदः फालोज्ज्वलत्पुण्ड्रः ।
फलरूपी फणिकटकः फणिकटिसूत्रः फलोद्वहः पातु ।। ८१

फलभुक् फलमूलाशि ध्येयः फणियज्ञसूत्रधारी नः ।
योषिदभीप्सितफलदो युतरुद्रोऽव्याद्यजुर्नामा ।। ८२

यजुरुपपादितमहिमा युतरतिकेलिर्युवाग्रणीर्यमनः ।
यागचिताग्निसमानो यज्ञेशो योजितापदरिरव्यात् ।। ८३

जितसुरसंघो जैत्रो ज्योतीरूपो जितामित्रः।
जवनिर्जित पवनोऽव्याज्जयदो जीवोत्करस्तुत्यः ।। ८४

जनिधन्यकश्यपो नो जगदात्मा जडिमविध्वंसी।
षिद्वानर्च्यः षंडीकृतसुरतेजाः षडध्वनिरतोऽव्यात् ।। ८५

षट्कर्मनिरतहितदः षोडशविधविग्रहाराध्यः।
षाष्टिकचरुप्रियोऽव्यात् षडूर्म्यसंस्पृष्टदिव्यात्मा ।। ८६

षोडशियागसुतृप्तः षण्णवतिश्राद्धकृद्धितकृत्।
षड्वर्गगन्धरहितो नारायणनित्यवह्नोऽव्यात् ।। ८७

नामार्चकवरदायी नानाविधतापविध्वंसी।
नवनीरदकेशोऽव्यान्नानार्थप्रापको नताराध्यः ।। ८८

नयविन्नवग्रहार्च्यो नखयोधी पातु निश्चलात्मा नः।
मलयजलिप्तो मदहा मल्लीसूनार्चितो महावीरः ।। ८९

मरुदर्चितो महीयान्मञ्जुध्वानोऽवतान्मुरार्यंशः।
मायाकूटविनाशी मुदितात्मा सुखितनिजभक्तः ।। ९०

सकलप्रदः समर्थः सर्वाराध्यः सवप्रियः सारः।
सकलेशः समरहितः सुकृती नः पातु सूदितारातिः ।। ९१

परिधृतहरितसुवासाः पाणिप्रोद्यत्सुधाकुम्भः।
प्रवरः पावककान्तिः पटुनिनदः पातु पञ्जरावासी ।। ९२

पण्डितपूज्यः पीनः पायात्पातालपतितवसुरक्षी।
पङ्केरुहार्चिताङ्घ्रिः नेत्रानन्दो नुतिप्रियो नेयः ।। ९३

नवचम्पकमालाभृन्नाकौका नाकिहितकृन्नः ।
निस्तीर्णसंविदव्यान्निष्कामो निर्ममो निरुद्वेगः ॥ ९४

सिद्धिः सिद्धप्रियकृत्साध्याराध्यः सुखोद्वहः स्वामी ।
सागरतीरविहारी सौम्यः पायात्सुखी साधुः ॥ ९५

स्वादुफलाशी गिरिजाराध्यो गिरिसन्निभो गमयेत् ।
गात्रद्युतिजितरुक्मो गुण्यो गुहवन्दितो गोप्ता ॥ ९६

गगनाभो गतिदायी गीर्णाहिर्गोनसारातिः ।
रमणकनिलयो रूपी रसविद्रक्षाकरो रक्षेत् ॥ ९७

रुचिरो रागविहीनो रक्तो रामो रतिप्रियो रवकृत् ।
तत्वप्रियस्तनुत्रालङ्कृतमूर्तिस्तुरङ्गगतिरव्यात् ॥ ९८

तुलितहरिर्नस्तुम्बुरुगेयो माली महर्धिमान्मौनी ।
मृगनाथविक्रमोऽव्यान्मुषितार्तिर्दीनभक्तजनरक्षी ॥ ९९

दोधूयमानभुवनो दोषविहीनो दिनेश्वराराध्यः ।
दुरितविनाशी दयितो दयतां दासीकृतत्रिदशः ॥ १००

दन्तद्युतिजितकुन्दो दण्डधरो दुर्गतिध्वंसी ।
वन्दिप्रियो वरेण्यो वीर्योद्रिक्तो वदान्यवरदोऽव्यात् ॥ १०१

वाल्मीकिगेयकीर्तिर्वर्धिष्णुर्वारिताघकूटो नः ।
वसुदो वसुप्रियोऽव्याद्वसुपूज्यो गर्भवासविच्छेदी ॥ १०२

गोदाननिरतसुखकृद्गोकुलरक्षी गवां नाथः ।
गोवर्धनो गभीरो गोलेशः पातु गौतमाराध्यः ॥ १०३

गतिमान्गर्गनुतो नश्चरितादिमपूजनाध्वगप्रियकृत्।
चामीकरप्रदायी चारुपदोऽव्याच्चराचरस्वामी ॥ १०४

चन्दनचर्चितदेहश्चन्दनरसशीतलापाङ्गः।
चरितपवित्रितभुवनश्चाटूक्तिः पातु चोरविध्वंसी ॥ १०५

चञ्चद्गुणनिकरो नः सुभरः सूक्ष्माम्बरः सुभद्रोऽव्यात्।
सूदितखलः सुभानुः सुन्दरमूर्तिः सुखास्पदः सुमतिः ॥ १०६

सुनयः सोमरसादिप्रियकृत्पायाद्विरक्तेड्यः।
वैदिककर्मसुतृप्तो वैखानसपूजितो वियच्चारी ॥ १०७

व्यक्तो वृषप्रियोऽव्याद्वृषदो विद्यानिधिर्विराड् विदितः।
परिपालितविहगकुलः पुष्टः पूर्णाशयः पुराणेड्यः ॥ १०८

परिधृतपन्नगशैलः पार्थिववन्द्यः पदाहतद्विरदः।
परिनिष्ठितकार्योऽव्यात्परार्घ्यहारः परात्मा नः ॥ १०९

तन्वीड्यस्तुङ्गांसस्त्यागी तूर्यादिवाद्यसन्तुष्टः।
तप्तद्रुतकनकाङ्गदधारी दद्याद्धनं तृप्तिः ॥ ११०

तृष्णापाशच्छेदी त्रिभुवनमहितस्त्रयीधरस्तर्कः।
त्रिगुणातीतस्तामसगुणनाशी तर्क्यतां तपस्सिन्धुः ॥ १११

तीर्थस्त्रिसमयपूज्यस्तुहिनोरुस्तीर्थकृत्तटस्थो नः।
तुरगपतिसेवितोऽव्यात्त्रिपुरारिश्लाघितः प्रांशुः ॥ ११२

पाषाण्डतूलदहनः प्रेमरसार्द्रः पराक्रमी पूर्वः।
प्रेंखत्कुण्डलगण्डः प्रचलद्धारः प्रकृष्टमतिरव्यात् ॥ ११३

प्रचुरयशाः प्रभुनम्यो रसदो रूपाधरीकृतस्वर्णः।
रसनानृत्यद्विद्यो रम्भादिस्तुत्यचारुचरितोऽव्यात् ॥ ११४

रंहस्समूहरूपी रोषहरो रिक्तसाधुधनदायी।
राजद्रत्नसुभूषो रहिताघौघो रिरंसुरव्यान्नः ॥ ११५

षट्कालपूजनीयः षड्गुणरत्नाकरः षडङ्गज्ञः।
षड्रसवेदी षण्डावेद्यः षड्दर्शनीप्रदः पायात्॥ ११६

षड्विंशति तत्वज्ञः षड्रसभोजी षडङ्गवित्पूज्यः।
षड्जादिस्वरवेदी युगवेदी यज्ञभुग्योग्यः॥ ११७

यात्रोद्युक्तशुभंयुर्युक्तिज्ञो यौवनाश्वसंपूज्यः।
युयुधानो युद्धज्ञो युक्ताराध्यो यशोधनः पायात्॥ ११८

विद्युन्निभो विवृद्धो वक्ता वन्द्यो वयःप्रदो वाच्यः।
वर्चस्वी विश्वेशो विधिकृत् पायाद्विधानज्ञः ॥ ११९

दीधितिमालाधारी दशदिग्गामी दृढोज्ज्वलत्पक्षः।
दंष्ट्रारुचिरमुखोऽव्याद्दवनाशोऽस्मान्महोदयो मुदितः ॥ १२०

मृदितकषायो मृग्यो मनोजवो हेतिभृद्वन्द्यः।
हैयङ्गवीनभोक्ता हयमेधप्रीतमानसः पायात्॥ १२१

हेमाब्जहारधारी हेली हेतीश्वरप्रणयी।
हठयोगकृत्सुसेव्यो हरिभक्तः पातु हरिपुरःस्थायी॥ १२२

हितदः सुपृष्ठराजद्धरिरव्यात्सौम्यवृत्तो नः।
स्वात्युद्भवः सुरम्यः सौधीभूतश्रुतिः सुहृद्वन्द्यः ॥ १२३

सगरस्यालः सत्पथचारी सन्तानवृद्धिकृत्सुयशाः।
विजयी विद्वत्प्रवरो वर्योऽव्याद्वीतरागभवनाशी॥ १२४

वैकुण्ठलोकवासी वैश्वानरसन्निभो विदग्धो नः।
वीणागानसुरक्तो वैदिकपूज्यो विशुद्धोऽव्यात्॥ १२५

नर्मप्रियो नतेड्यो निर्भीको नन्दनो निरातङ्कः।
नन्दनवनचार्यन्यान्नगाग्रनिलयो नमस्कार्यः॥ १२६

निरुपद्रवो नियन्ता प्रयतः पर्णाशिभावितः पातु।
पुण्यप्रदः पवित्रः पुण्यश्लोकः प्रियंवदः प्राज्ञः॥ १२७

परयन्त्रतन्त्रभेदी परनुन्नग्रहभवार्तिविच्छेदी।
परनुन्नग्रहदाही क्षामक्षोभप्रणाशनः पायात्॥ १२८

क्षेमी क्षेमकरो नः क्षौद्ररसाशी क्षमाभूषः।
क्षान्ताश्रितापराधः क्षुधितजनान्नप्रदः पायात्॥ १२९

क्षौमाम्बरशाली नः क्षवथुहरः क्षीरभुक्पातु।
यन्त्रस्थितश्च यागोद्युक्तस्वर्णप्रदो युतानन्दः॥ १३०

यतिवन्दितचरणाब्जो यतिसंसृतिदाहको युगेशानः।
याचकजनहितकारी युगादिरव्याद्युयुत्सुर्नः॥ १३१

यागफलरूपवेत्ता धृतिमान् धैर्योदधिर्ध्येयः।
धीधिक्कृतकुमतोऽव्याद्धर्मोद्युक्तप्रियो धराग्रस्थः॥ १३२

धीनिर्जितधिषणोऽस्मान्धीमत्प्रवरार्थितो धरः पातु।
धृतवैकुण्ठेशानो मतिमद् ध्येयो महाकुलोद्भूतः॥ १३३

मण्डलगतिर्मनोज्ञो मन्दारप्रसवधारी नः।
मार्जारदंशनोद्भवरोगध्वंसी महोद्यमः पातु॥ १३४

मूषिकविषदाही नो माता मेयो हितोद्युक्तः।
हीरोज्ज्वलभूषोऽव्याद्धृद्रोगप्रशमनो हृद्यः॥ १३५

हृत्पुण्डरीकनिलयो होराशास्त्रार्थविद्धोता।
होमप्रियो हतार्तिर्हुतवहजायावसानमन्त्रोऽव्यात्॥ १३६

तन्त्री तन्त्राराध्यस्तान्त्रिकजनसेवितस्तत्त्वम् ।
तत्वप्रकाशकोऽव्यात् तपनीयभ्राजमानपक्षो नः ॥ १३७

त्वग्भवरोगविमर्दी तापत्रयहा त्वरान्वितः पातु ।
तलताडननिहतारिर्नीवारान्नप्रियो नीतिः ॥ १३८

नीरन्ध्रो निष्णातो नीरोगो निर्ज्वरो नेता ।
निर्धार्यो निर्मोहो नैयायिकसौख्यदाय्यव्यात् ॥ १३९

गौरवभृद्गणपूज्यो गर्विष्ठाहिप्रभञ्जनश्च गुरुः ।
गुरुभक्तो गुल्महरो गुरुदायी गुत्सभृत्पातु ॥ १४०

गण्यो गरिष्ठमूर्ती रजोहरो राङ्कवास्तरणः ।
रशनारञ्जितमध्यो रोगहरः पातु रुक्मसूनार्च्यः ॥ १४१

रल्लकसंव्यानोऽव्याद्रोचिष्णू रोचनाग्रनिलयो नः ।
रङ्गेड्यो रयसचिवो डोलायितनिगमशायी च ॥ १४२

ढक्कानादसुतृप्तो डिम्भप्रियकृच्च डुण्डुभारातिः ।
डहुरसमिश्रान्नादी डिण्डिमरवतृप्तमानसः पायात् ॥ १४३

डम्भादिदोषहीनो डमरहरो डमरुनादसन्तुष्टः ।
डाकिन्यादि क्षुद्रग्रहमर्दी पाञ्चरात्रपूज्योऽव्यात् ॥ १४४

प्रद्युम्नः प्रवरगुणः प्रसरत्कीर्तिः प्रचण्डदोर्दण्डः ।
पत्री पणितगुणौघः प्राप्ताभीष्टः परः प्रसिद्धोऽव्यात् ॥ १४५

चिद्रूपी चित्तज्ञश्चेतनपूज्यश्च चोदनार्थज्ञः ।
चिकुरधृतहल्लकोऽव्याच्चिरजीवी चिद्धनश्चित्रः ॥ १४६

चित्रकरश्चिन्निलयो द्विजवर्यो दारितेतिरव्यान्नः ।
दीप्तो दस्युप्राणप्रहरो दुष्कृत्यनाशकृद्दिव्यः ॥ १४७

दुर्बोधहरो दण्डितदुर्जनसङ्घो दुरात्मदूरस्थः ।
दानप्रियो यमीशो यन्त्रार्चककाम्यदः पातु ।। १४८

योगपरो युतहेतिर्योगाराध्यो युगावर्तः ।
यज्ञाङ्गो यज्वेड्यो यज्ञोद्भूतो यथार्थोऽव्यात् ।। १४९

श्रीमान्नितान्तरक्षी वाणीशसमो दिशेत्साधुः ।
यज्ञस्वामी मञ्जुर्गरुडो लम्बोरुहारभृत् कुशलम् ।। १५०

पञ्चाशदुत्तरशतश्लोकार्यास्तुतिरियं खगेन्द्रस्य ।
श्रीकृष्णभट्टरचिता पठतां कुर्यादभीप्सितं सकलम् ।। १५१

सुपर्णोसीत्यादिश्रुतिघटकवर्णैः खगपते
तथा गायत्र्यर्णैर्घटितमुखवर्णा स्तुतिरियम् ।
चतुस्तन्त्र श्रीमद्विबुधवरकृष्णार्यरचिता
सहस्राढ्या नाम्नां जगति विहगेन्द्रस्य जयतु ।। १५२

(सुपर्णोऽसि-तै.सं.४-४२. गायत्री तै.आ.10.1)

(श्रीवासुदेवभट्टाचार्यकरुणासंवर्धितात्मतत्वावबोधस्य श्रीकृष्ण-भट्टाचार्यस्य कृतिः ।)

*—*—*

## ।। श्री गरुडसहस्रनामावलिः ।।

ओं सुमुखाय नमः । सुवहाय । सुखकृते । सुमुखाभिध-पन्नगेड्भूषाय । सुरसङ्घसेविताङ्घ्रये । सुतदायिने । सूरये । सुजनपरित्रात्रे । सुचरितसेव्याय । सुपर्णाय । पन्नगभूषाय । पतगाय । पात्रे । प्राणाधिपाय । पक्षिणे । पद्मादिनागवैरिणे । पद्माप्रियदास्यकृते । पतगेन्द्राय । परभेदिने । परिहृतपाकारिदर्पकूटाय नमः । २०

नमः । २०

ओं नागारये नमः । नगतुल्याय । नाकौकस्स्तूयमान-चरिताय । नरकदकर्मनिहन्त्रे । नरपूज्याय । नाशिताहिविषकूटाय । नतरक्षिणे । निखिलेड्याय । निर्वाणात्मने । निरस्तदुरितौघाय । सिद्धध्येयाय । सकलाय । सूक्ष्माय । सूर्यकोटिसङ्काशाय । सुखरूपिणे । स्वर्णनिभाय । स्तम्बेरमभोजनाय । सुधाहारिणे । सुमनसे । सुकीर्तिनाथाय नमः । ४०

ओं गरुडाय नमः । गम्भीरघोषाय । गालवमित्राय । गेयाय । गीतिज्ञाय । गतिमतां श्रेष्ठाय । गन्धर्वार्च्याय । गुह्याय । गुणसिन्धवे । गोत्रभिन्मान्याय । रविसारथिसहजाय । रत्नाभरणान्विताय । रसज्ञाय । रुद्राकान्ताय । रुक्मोज्वलजानवे । रजतनिभसक्थये । रक्तप्रभकण्ठाय । रयिमते । राज्ञे । रथाङ्गपाणिरथाय नमः । ६०

ओं ताक्ष्यार्य नभमः । तटिन्निभाय । तनुमध्याय । तोषितात्मजननीकाय । तारात्मने । महनीयाय । मतिमते । मुख्याय । मुनीन्द्रेड्याय । माधववाहाय । त्रिवृदात्मस्तोमशीर्षाय । त्रिनयनपूज्याय । त्रियुगाय । त्रिषवणमज्जन्महात्महृन्नीडाय । त्रसरेण्वादिमनिखिलज्ञात्रे । त्रिवर्गफलदायिने । त्र्यक्षाय । त्रासितदैत्याय । त्रय्यन्तेड्याय । त्रयीरूपाय नमः । ८०

ओं वृत्रारिमानहारिणे नमः । वृषदायिने । वृष्णिवराध्यु-षितांसाय । वृश्चिकलूतादिविषदाहिने । वृकदंशजन्यरोगध्वंसिने । विहगराजे । वीराय । विषहृते । विनतातनुजाय । वीर्याढ्याय । तेजसां राशये । तुर्याश्रमिजप्यमनवे । तृप्ताय । तृष्णाविहीनाय । तुलनाहीनाय । तर्क्याय । तक्षकवैरिणे । तटिद्गौराय । तारादिम-पञ्चार्णाय । तन्द्रीरहिताय नमः । १००

ओं शितनासाग्राय नमः। शान्ताय। शतमखवैरि-प्रभञ्जनाय । शाङ्गे। शात्रववीरुद्दात्राय। शमिताघौघाय। शरण्याय । शतदशलोचनसहजाय । शकुनाय । शकुन्ताग्र्याय । रत्नालङ्कृतमूर्तये । रसिकाय। राजीवचारुचरणयुगाय। रङ्गेशचारुमित्राय। रोचिष्मते। राजदुरुपक्षाय। रुचिनिर्जितकनकाद्रये। रघुपत्यहिपाशबन्धविच्छेत्त्रे। रञ्जितखगनिवहाय। रम्याकाराय नमः। १२०

ओं गतक्रोधाय नमः । गीष्पतिनुताय । गरुत्मते । गीर्वाणेशाय । गिरां नाथाय। गुप्तस्वभक्तनिवहाय। गुञ्जाक्षाय। गोप्रियाय । गूढाय । गानप्रियाय । यतात्मने । यमिनम्याय । यक्षसेव्याय । यज्ञप्रियाय । यशस्विने । यज्ञात्मने । यूथपाय । योगिने । यन्त्राराध्याय। यागप्रभवाय नमः। १४०

ओं त्रिजगन्नाथाय नमः । त्रस्यत्पन्नगबृन्दाय । त्रिलोकपरिरक्षिणे। तृषिताच्युततृष्णापहतटिनीजनकाय। त्रिवलीरञ्जितजठराय। त्रियुगगुणाढ्याय। त्रिमूर्तिसमतेजसे। तपनद्युतिमकुटाय । तरवारिभ्राममानकटिदेशाय। ताम्रास्याय। चक्रधराय। चीराम्बरमानसावासाय। चूर्णितपुळिन्दबृन्दाय। चारुगतये। चोरभयघ्ने। चञ्चूपुटभिन्नाहये। चर्वितकमठाय। चलच्चेलाय। चित्रितपक्षाय। चम्पकमालाविराजदुरुवक्षसे नमः। १६०

ओं क्षुभ्यन्नीरधिवेगाय नमः। क्षान्तये। क्षीराब्धिवासनिरताय । क्षुद्रग्रहमर्दिने। क्षत्रियपूज्याय। क्षयादिरोगहराय। क्षिप्रशुभोत्करदायिने। क्षीणारातये। क्षितिक्षमाशालिने। क्षितितलवासिने । सोमप्रियदर्शनाय। सर्वेशाय। सहजबलाय। सर्वात्मने। सर्वदृशे । तर्जितरक्षस्सङ्घाय । ताराधीशद्युतये । तुष्टाय । तपनीयकान्तये। तत्वज्ञानप्रदाय नमः। १८०

ओं मान्याय नमः । मञ्जुलभाषिणे । महितात्मने । मर्त्यधर्म-रहिताय । मोचितविनतादास्याय । मुक्तात्मने । महदञ्चितचरणाब्जाय । मुनिपुत्राय । मौक्तिकोज्ज्वलद्धाराय । मङ्गलकारिणे । आनन्दाय । आत्मने । आत्मक्रीडाय । आत्मरतये । आकण्ठ-कुङ्कुमाभाय । आकेशान्तात्सितेतराय । आर्याय । आहृतपीयूषाय । आशाकृते । आशुगमनाय नमः । २००

ओं आकाशगतये । तरुणाय । तर्कज्ञेयाय । तमोहन्त्रे । तिमिरादिरोगहारिणे । तूर्णगतये । मन्त्रकृते । मन्त्रिणे । मन्त्राराध्याय । मणिहाराय । मन्दराद्रिनिभमूर्तये । सर्वातीताय । सर्वस्मै । सर्वाधाराय । सनातनाय । स्वङ्गाय । सुभगाय । सुलभाय । सुबलाय । सुन्दरबाहवे नमः । २२०

ओं सामात्मने नमः । मखरक्षिणे । मखिपूज्याय । मौलिलग्नमकुटाय । मञ्जीरोज्ज्वलचरणाय । मर्यादाकृते । महा-तेजसे । मायातीताय । मानिने । मङ्गलरूपिणे । महात्मने । तेजोधि-कृतमिहिराय । तत्वात्मने । तत्वनिष्णाताय । तापसहितकारिणे । तापध्वंसिने । तपोरूपाय । ततपक्षाय । तथ्यवचसे । तरुकोटर-वासनिरताय नमः । २४०

ओं तिलकोज्ज्वलनिटिलाय नमः । तुङ्गाय । त्रिदशभीति-परिमोषिणे । तापिञ्छहरितवाससे । तालध्वजसोदरोज्ज्वलत्केतवे । तनुजितरुक्माय । ताराय । तारध्वानाय । तृणीकृतारातये । तिग्मनखाय । तन्त्रीस्वानाय । नृदेवशुभदायिने । निगमोदित-विभवाय । नीडस्थाय । निर्जराय । नित्याय । निनदहताशुभ-निवहाय । निर्मात्रे । निष्कलाय । नयोपेताय नमः । २६०

ओं नूतनविद्रुमकण्ठाय नमः । विष्णुसमाय । वीर्यजित-लोकाय । विरजसे । विततसुकीर्तये । विद्यानाथाय । वीशाय । विज्ञानात्मने । विजयाय । वरदाय । वासाधिकार विधिपूज्याय । मधुरोक्तये । मृदुभाषिणे । मल्लीदामोज्ज्वलत्तनवे । महिलाजनशुभ-कृते । मृत्युहराय । मलयवासिमुनिपूज्याय । मृगनाभिलिप्त-निटिलाय । मरकतमयकिङ्किणीकाय । मन्देतरगतये नमः । २८०

ओं मेधाविने । दीनजनगोप्त्रे । दीप्ताग्रनासिकास्याय । दारिद्र्यध्वंसनाय । दयासिन्धवे । दान्तप्रियकृते । दान्ताय । दमनकधारिणे । दण्डितसाधुविपक्षाय । दैन्यहराय । दानधर्म-निरताय । वन्दारुबृन्दशुभकृते । वल्मीकौकोभयङ्कराय । विनुताय । विहिताय । वज्रनखाग्राय । यततामिष्टप्रदाय । यन्त्रे । युगबाहवे । यवनासाय नमः । ३००

ओं यवनारये नमः । ब्रह्मण्याय । ब्रह्मरताय । ब्रह्मात्मने । ब्रह्मगुप्ताय । ब्राह्मणपूजितमूर्तये । ब्रह्मध्यायिने । बृहत्पक्षाय । ब्रह्मसमाय । ब्रह्मांशाय । ब्रह्मज्ञाय । हरितवर्णचेलाय । हरिकैङ्कर्य-रताय । हरिदासाय । हरिकथासक्ताय । हरिपूजननियतात्मने । हरिभक्तध्यातदिव्यशुभरूपाय । हरिपादन्यस्तात्मात्मीयभराय । हरिकृपापात्राय । हरिपादवहनसक्ताय नमः । ३२०

ओं हरिमन्दिरचिह्नमूर्तये नमः । दमितपविगर्वकूटाय । दरनाशिने । दरधराय । दक्षाय । दानवदर्पहराय । रदनद्युति-रञ्जिताशाय । रीतिज्ञाय । रिपुहन्त्रे । रोगध्वंसिने । रुजाहीनाय । धर्मिष्ठाय । धर्मात्मने । धर्मज्ञाय । धर्मिजनसेव्याय । धर्माराध्याय । धनदाय । धीमते । धीराय । धवाय नमः । ३४०

ओं धिकृतसुरासुरास्राय । त्रेताहोमप्रभावसञ्जाताय । तटिनीतीरनिवासिने । तनयार्थ्यर्च्चार्याय । तनुत्राणाय । तुष्यज्जनार्दनाय । तुरीयपुरुषार्थदाय । तपस्वीन्द्राय । तरलाय । तोयचरारिणे । तुरगमुखप्रीतिकृते । रणशूराय । रयशालिने । रतिमते । राजीवहारभृते । रसदाय । रक्षस्सङ्घविनाशिने । रथिकवराच्र्याय । रणाङ्कूषाय । रभसगतये नमः । ३६०

ओं रहितार्तये । पूताय । पुण्याय । पुरातनाय । पूर्णाय । पद्माच्र्याय । पवनगतये । पतितत्राणाय । परात्पराय । पीनांसाय । पृथुकीर्तये । क्षतजाक्षाय । क्ष्माधराय । क्षणाय । क्षणदाय । क्षेपिष्ठाय । क्षयरहिताय । क्षुण्णक्ष्माभृते । क्षरान्तनासाय । क्षिपवर्णघटितमन्त्राय नमः । ३८०

ओं क्षितिसुरनम्याय नमः । ययातीड्याय । याज्याय । युक्ताय । योगाय । युक्ताहाराय । यमार्चिताय । युगकृते । याचितफलप्रदायिने । यत्नाच्र्याय । यातनाहन्त्रे । ज्ञानिने । ज्ञप्तिशरीराय । ज्ञात्रे । ज्ञानदाय । ज्ञेयाय । ज्ञानादिमगुणपूर्णाय । ज्ञप्तिहताविघ्नकाय । ज्ञमणये । ज्ञात्यहिमर्दनदक्षाय नमः । ४००

ओं ज्ञानिप्रियकृते नमः । यशोराशये । युवतिजनेप्सितदाय । युवपूज्याय । यूने । यूथस्थाय । यामाराध्याय । यमभयहारिणे । युद्धप्रियाय । योद्ध्रे । योगज्ञज्ञाताय । ज्ञातृज्ञेयात्मकाय । ज्ञप्तये । ज्ञानहताशुभनिवहाय । ज्ञानघनाय । ज्ञाननिधये । ज्ञातिजभयहारिणे । ज्ञानप्रतिबन्धकर्मविच्छेदिने । ज्ञानेनहताज्ञानध्वान्ताय । ज्ञानीशवन्द्यचरणाय नमः । ४२०

ओं यज्वप्रियकृते । याजकसेव्याय । यजनादिषट्कनिरताच्र्याय । यायावरशुभकृते । यशोदायिने । यमयुतयोगिप्रेक्ष्याय ।

यादवहितकृते। यतीश्वरप्रणयिने। योजनसहस्रगामिने। यथार्थ-ज्ञाय । पोषितभक्ताय। प्राथ्यार्य। पृथुतरबाहवे। पुराणविदे। प्राज्ञाय । पैशाचभयनिहन्त्रे। प्रबलाय। प्रथिताय। प्रसन्नवदन-युताय । पत्त्ररथाय नमः। ४४०

ओं छायानश्यद्भुजङ्गौघाय नमः। छर्दितविप्राय। छिन्ना-रातये । छन्दोमयाय। छन्दोविदे। छन्दोज्ञाय। छन्दश्शास्त्रार्थविदे। छान्दसशुभङ्कराय। छन्दोगध्यातशुभमूर्तये। छलमुखदोष-विहीनाय । छूनायतोज्ज्वलद्वाहवे । छन्दोनिरताय। छात्रोत्कर-सेव्याय। छत्रभृन्महिताय। छन्दोवेद्याय। छन्दः प्रतिपादित-वैभवाय । छागवपाहुतितृप्ताय। छायापुत्रोद्भवार्तिविच्छेदिने। छविनिर्जितखर्जूराय। छादितदिविषत्प्रभावाय नमः। ४६०

ओं दुस्स्वप्ननाशनाय नमः। दमनाय। देवाग्रण्ये। दात्रे। दुर्धर्षाय। दुष्कृतघ्ने। दीप्तास्याय। दुस्सहाय। देवाय। दीक्षित-वरदाय । सरसाय। सर्वेड्याय। संशयच्छेत्रे। सर्वज्ञाय। सत्याय। योगाचार्याय। यथार्थवित्प्रियकृते। योगप्रमाणवेत्त्रे। युञ्जानाय। योगफलदायिने नमः। ४८०

ओं गानासक्ताय। गहनाय। ग्रहचारपीडनध्वंसिने। ग्रहभयघ्ने । गदहारिणे। गुरुपक्षाय। गोरसादिने। गव्यप्रियाय। गकारादिमनाम्ने। गेयवरकीर्तये। नीतिज्ञाय। निरवद्याय। निर्मलचित्ताय। नरप्रियाय। नम्याय। नारदगेयाय। नन्दिस्तुत-कीर्तये । निर्णयात्मकाय। निर्लेपाय। निर्द्वन्द्वाय नमः। ५००

ओं धीधिष्ण्याय नमः। धिकृतारातये। धृष्टाय। धनञ्जयार्चि-श्शमनाय। धान्यदाय। धनिकाय। धन्वीड्याय। धनदार्च्याय। धूर्तार्तिप्रापकाय। धुरीणाय। षण्मुखनुतचरिताय। षड्गुणपूर्णाय ।

षडर्धनयनसमाय । नादात्मने । निर्दोषाय । नवनिधिसेव्याय । निरञ्जनाय । नव्याय । यतिमुक्तिरूपफलदाय । यतिपूज्याय नमः ५२०

ओं शतमूर्तये नमः । शिशिरात्मने । शास्त्रज्ञाय । शास्त्रकृते । श्रीलाय । शशधरकीर्तये । शश्वत्प्रियदाय । शाश्वताय । शमिध्याताय । शुभकृते । फल्गुनसेव्याय । फलदाय । फालोज्ज्वलत्पुण्ड्राय । फलरूपिणे । फणिकटकाय । फणिकटिसूत्राय । फलोद्वहाय । फलभुजे । फलमूलाशिध्येयाय । फणियज्ञसूत्रधारिणे नमः । ५४०

ओं योषिदभीप्सितफलदाय नमः । युतरुद्राय । यजुर्नाम्ने । यजुरुपपादितमहिम्ने । युतरतिकेलये । युवाग्रण्ये । यमनाय । यागचिताग्निसमानाय । यज्ञेशाय । योजितापदरये । जितसुरसङ्घाय । जैत्राय । ज्योतीरूपाय । जितामित्राय । जवनिर्जितपवनाय । जयदाय । जीवोत्करस्तुत्याय । जनिधन्यकश्यपाय । जगदात्मने । जडिमविध्वंसिने नमः । ५६०

ओं षिद्वानर्च्याय नमः । षण्डीकृतसुरतेजसे । षडध्वनिरताय । षट्कर्मनिरतहितदाय । षोडशविधविग्रहाराध्याय । षाष्टिकचरुप्रियाय । षडूर्म्यसंस्पृष्टदिव्यात्मने । षोडशियागसुतृप्ताय । षण्णवतिश्राद्धकृद्धितकृते । षड्वर्गगन्धरहिताय । नारायणनित्यवहनाय । नामार्चकवरदायिने । नानाविधतापविध्वंसिने । नवनीरदकेशाय । नानार्थप्रपकाय । नताराध्याय । नयविदे । नवग्रहार्च्याय । नखयोधिने । निश्चलात्मने नमः । ५८०

ओं मलयजलिप्ताय नमः । मदघ्ने । मल्लीसूनार्चिताय । महावीराय । मरुदर्चिताय । महीयसे । मञ्जुध्वानाय । मुरार्यंशाय । मायाकूटविनाशिने । मुदितात्मने । सुखितनिजभक्ताय ।

सकलप्रदाय । समर्थाय । सर्वाराध्याय । सर्वप्रियाय । साराय । सकलेशाय । समरहिताय । सुकृतिने । सूदितारातये नमः । ६००

ओं परिधृतहरितसुवाससे नमः । पाणिप्रोद्यत्सुधाकुम्भाय । प्रवराय । पावककान्तये । पटुनिनदाय । पञ्जरावासिने । पण्डित-पूज्याय । पीनाय । पातालपतितवसुरक्षिणे । पङ्केरुहार्चिताङ्घ्रये । नेत्रानन्दाय । नुतिप्रियाय । नेयाय । नवचम्पकमालाभृते । नाकौकसे । नाकिहितकृते । निस्तीर्णसंविदे । निष्कामाय । निर्ममाय । निरुद्वेगाय नमः । ६२०

ओं सिद्धये । सिद्धप्रियकृते । साध्याराध्याय । सुखोद्वहाय । स्वामिने । सागरतीरविहारिणे । सौम्याय । सुखिने । साधवे । स्वादुफलाशिने । गिरिजाराध्याय । गिरिसन्निभाय । गात्रद्युति-जितरुक्माय । गुण्याय । गुहवन्दिताय । गोप्त्रे । गगनाभाय । गतिदायिने । गीर्णाहये । गोनसारातये नमः । ६४०

ओं रमणकनिलयाय । रूपिणे । रसविदे । रक्षाकराय । रुचिराय । रागविहीनाय । रक्ताय । रामाय । रतिप्रियाय । रवकृते । तत्वप्रियाय । तनुत्रालङ्कृतमूर्तये । तुरङ्गगतये । तुलितहरये । तुम्बरुगेयाय । मालिने । महर्द्धिमते । मौनिने । मृगनाथविक्रमाय । मुषितार्तये नमः । ६६०

ओं दीनभक्तजनरक्षिणे नमः । दोधूयमानभुवनाय । दोषविहीनाय । दिनेश्वराराध्याय । दुरितविनाशिने । दयिताय । दासीकृतत्रिदशाय । दन्तद्युतिजितकुन्दाय । दण्डधराय । दुर्गतिध्वंसिने । वन्दिप्रियाय । वरेण्याय । वीर्योद्रिक्ताय । वदान्यवरदाय । वाल्मीकिगेयकीर्तये । वर्द्धिष्णवे । वारिताघकूटाय । वसुदाय । वसुप्रियाय । वसुपूज्याय नमः । ६८०

ओं गर्भवासविच्छेदिने । गोदाननिरतसुखकृते । गोकुल-रक्षिणे । गवां नाथाय । गोवर्द्धनाय । गभीराय । गोलेशाय । गौतमाराध्याय । गतिमते । गर्गनुताय । चरितादिमपूजनाध्व-गप्रियकृते । चामीकरप्रदायिने । चारुपदाय । चराचरस्वामिने । चन्दनचर्चितदेहाय । चन्दनरसशीतलापाङ्गाय । चरितपवित्रित-भुवनाय । चादूक्तये । चोरविध्वंसिने । चञ्चद्गुणनिकराय नमः । ७००

ओं सुभराय । सूक्ष्माम्बराय । सुभद्राय । सूदितखलाय । सुभानवे । सुन्दरमूर्तये । सुखास्पदाय । सुमतये । सुनयाय । सोमरसादिप्रियकृते । गिरक्तेड्याय । वैदिककर्मसुतृप्ताय । वैखानसपूजिताय । वियच्चारिणे । व्यक्ताय । वृषप्रियाय । वृषदाय । विद्यानिधये । विराजे । विदिताय नमः । ७२०

ओं परिपालितविहगकुलाय नमः । पुष्टाय । पूर्णाशयाय । पुराणेड्याय । परिधृतपन्नगशैलाय । पार्थिववन्द्याय । पदाहत-द्विरदाय । परिनिष्ठितकार्याय । पराघ्यहाराय । परात्मने । तन्वीड्याय । तुङ्गांसाय । त्यागिने । तूर्यादिवाद्यसन्तुष्टाय । तप्तद्रुतकनकाङ्गदधारिणे । तृप्तये । तृष्णापाशच्छेदिने । त्रिभुवनमहिताय । त्रयीधराय । तर्काय नमः । ७४०

ओं त्रिगुणातीताय । तामसगुणनाशिने । तपस्सिन्धवे । तीर्थाय । त्रिसमयपूज्याय । तुहिनोरवे । तीर्थकृते । तटस्थाय । तुरगपतिसेविताय । त्रिपुरारिश्लाघिताय । प्रांशवे । पाषण्डतूलद-हनाय । प्रेमरसार्द्राय । पराक्रमिणे । पूर्वाय । प्रेङ्खत्कुण्डलगण्डाय । प्रचलद्धाराय । प्रकृष्टमतये । प्रचुरयशसे । प्रभुनम्याय नमः । ७६०

ओं रसदाय । रूपाधरीकृतस्वर्णाय । रसनानृत्यद्विद्याय । रम्भादिस्तुत्यचारुचरिताय । रंहस्समूहरूपिणे । रोषहराय । रिक्तसाधुधनदायिने । राजद्रत्नसुभूषाय । रहिताघौघाय । रिरंसवे । षट्कालपूजनीयाय । षड्गुणरत्नाकराय । षडङ्गज्ञाय । षड्रसवेदिने । षण्डावेद्याय । षड्दर्शनीप्रदाय । षड्विंशतितत्वज्ञाय । षड्रस-भोजिने । षडङ्गवित्पूज्याय । षड्जादिस्वरवेदिने नमः । ७८०

ओं युगवेदिने नमः । यज्ञभुजे । योग्याय । यात्रोद्युक्तशुभंयवे । युक्तिज्ञाय । यौवनाश्वसंपूज्याय । युयुधानाय । युद्धज्ञाय । युक्ताराध्याय । यशोधनाय । विद्युन्निभाय । विवृद्धाय । वक्त्रे । वन्द्याय । वयःप्रदाय । वाच्याय । वर्चस्विने । विश्वेशाय । विधिकृते । विधानज्ञाय नमः । ८००

ओं दीधितिमालाधारिणे । दशदिग्गामिने । दृढोज्वल-त्पक्षाय । दंष्ट्रारुचिरमुखाय । दवनाशाय । महोदयाय । मुदिताय । मृदितकषायाय । मृग्याय । मनोजवाय । हेतिभृद्वन्द्याय । हैयङ्गवीनभोक्त्रे । हयमेधप्रीतमानसाय । हेमाब्जहारधारिणे । । हेलिने । हेतीश्वरप्रणयिने । हठयोगकृत्सुसेव्याय । हरिभक्ताय । हरिपुरस्स्थायिने । हितदाय नमः । ८२०

ओं सुपृष्ठराजद्धरये । सौम्यवृत्ताय । स्वात्युद्भवाय । सुरम्याय । सौधीभूतश्रुतये । सुहृद्वन्द्याय । सगरस्यालाय । सत्पथचारिणे । सन्तानवृद्धिकृते । सुयशसे । विजयिने । विद्वत्प्रवराय । वर्ण्याय । वीतरागभवनाशिने । वैकुण्ठलोकवासिने । वैश्वानरसन्निभाय । विदग्धाय । वीणागानसुरक्ताय । वैदिक-पूज्याय । विशुद्धाय नमः । ८४०

ओं नर्मप्रियाय । नतेड्याय । निर्भीकाय । नन्दनाय । निरातङ्काय । नन्दनवनचारिणे । नगाग्रनिलयाय । नमस्कार्याय । निरुपद्रवाय । नियन्त्रे । प्रयताय । पर्णाशिभाविताय । पुण्यप्रदाय । पवित्राय । पुण्यश्लोकाय । प्रियंवदाय । प्राज्ञाय । परयन्त्रतन्त्रभेदिने । परनुन्नग्रहभवार्तिविच्छेदिने । परनुन्नग्रहदाहिने नमः । ८६०

ओं क्षामक्षोभप्रणाशनाय । क्षेमिणे । क्षेमकराय । क्षौद्ररसाशिने । क्षमाभूषाय । क्षान्ताश्रितापराधाय । क्षुधितजनान्नप्रदाय । क्षौमाम्बरशालिने । क्षवथुहराय । क्षीरभुजे । यन्त्रस्थिताय । यागोद्युक्तस्वर्णप्रदाय । युतानन्दाय । यतिवन्दितचरणाब्जाय । यतिसंसृतिदाहकाय । युगेशानाय । याचकजनहितकारिणे । युगादये । युयुत्सवे । यागफलरूपवेत्त्रे नमः । ८८०

ओं धृतिमते नमः । धैर्योदधये । ध्येयाय । धीधिकृतकुमताय । धर्मोद्युक्तप्रियाय । धराग्रस्थाय । धीनिर्जितधिषणाय । धीमत्प्रवरार्थिताय । धराय । धृतवैकुण्ठेशानाय । मतिमद्ध्येयाय । महाकुलोद्भूताय । मण्डलगतये । मनोज्ञाय । मन्दारप्रसवधारिणे । मार्जारदंशनोद्भवरोगध्वंसिने । महोद्यमाय । मूषिकविषदाहिने । मात्रे । मेयाय नमः । ९००

ओं हितोद्युक्ताय नमः । हीरोज्ज्वलभूषाय । हृद्रोगप्रशमनाय । हृद्याय । हृत्पुण्डरीकनिलयाय । होराशास्त्रार्थविदे । होत्रे । होमप्रियाय । हतार्तये । हुतवहजायावसानमन्त्राय । तन्त्रिणे । तन्त्राराध्याय । तान्त्रिकजनसेविताय । तत्वाय । तत्वप्रकाशकाय । तपनीयभ्राजमानपक्षाय । त्वग्भवरोगविमर्दिने । तापत्रयघ्ने । त्वरान्विताय । तलताडननिहतारये । ९२०

ओं नीवारान्नप्रियाय नमः। नीतये। नीरन्ध्राय। निष्णाताय । नीरोगाय। निर्ज्वराय । नेत्रे। निर्धार्याय। निर्मोहाय। नैयायिक-सौख्यदायिने। गौरवभृते। गणपूज्याय। गर्विष्ठाहिप्रभञ्जनाय। गुरवे। गुरुभक्ताय। गुल्महराय। गुरुदायिने। गुत्सभृते। गण्याय। गरिष्ठमूर्तये नमः। ९४०

ओं रजोहराय नमः । राङ्कवास्तरणाय । रशनारञ्जित-मध्याय । रोगहराय । रुक्मसूनार्च्याय । रल्लकसंव्यानाय । रोचिष्णवे । रोचनाग्रनिलयाय । रङ्गेड्याय । रयसचिवाय । डोलायितनिगमशायिने । ढक्कानादसुतृप्ताय । डिम्भप्रियकृते । डुण्डुभारातये । डहुरसमिश्रान्नादिने । डिण्डिमरवतृप्तमानसाय । डम्भादिदोषहीनाय । डमरहराय । डमरुनादसन्तुष्टाय । डाकिन्यादिक्षुद्रग्रहमर्दिने नमः। ९६०

ओं पाञ्चरात्रपूज्याय नमः । प्रद्युम्नाय । प्रवरगुणाय । प्रसरत्कीर्तये । प्रचण्डदोर्दण्डाय । पत्रिणे । पणितगुणौघाय । प्राप्ताभीष्टाय । पराय । प्रसिद्धाय । चिद्रूपिणे । चित्तज्ञाय । चेतनपूज्याय । चोदनार्थज्ञाय। चिकुरधृतहल्लकाय। चिरजीविने। चिद्घनाय। चित्राय। चित्रकराय। चिन्निलयाय नमः। ९८०

ओं द्विजवर्याय नमः। दारितेतये। दीप्ताय। दस्युप्राणप्रहराय । दुष्कृत्यनाशकृते। दिव्याय। दुर्बोधहराय। दण्डितदुर्जनसङ्घाय। दुरात्मदूरस्थाय। दानप्रियाय। यमीशाय। यन्त्रार्चककाम्यदाय। योगपराय। युतहेतये। योगाराध्याय। युगावर्ताय। यज्ञाङ्गाय। यज्वेड्याय। यज्ञोद्भूताय। यथार्थाय नमः। १०००

ओं श्रीमते नमः। नितान्तरक्षिणे। वाणीशसमाय। साधवे। यज्ञस्वामिने। मञ्जवे। गरुडाय। लम्बोरुहारभृते नमः। १००८

# श्री गरुडाष्टोत्तरशतनामस्तोत्रम्

श्री देव्युवाच—

देवदेव महादेव सर्वज्ञ करुणानिधे।
श्रोतुमिच्छामि तार्क्ष्यस्य नाम्नामष्टोत्तरं शतम्।

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि गरुडस्य महात्मनः।
नाम्नामष्टोत्तरशतं पवित्रं पापनाशनम्॥

अस्य श्री गरुडनामाष्टोत्तरशतमहामन्त्रस्य ब्रह्मा ऋषिः; अनुष्टुप् छन्दः, गरुडो देवता। प्रणवो बीजं, विद्या शक्तिः। वेदादिः कीलकम्। पक्षिराजप्रीत्यर्थे जपे विनियोगः।

ध्यानम्—

अमृतकलशहस्तं कान्तिसंपूर्णदेहं
सकलविबुधवन्द्यं वेदशास्त्रैरचिन्त्यम्।
कनकरुचिरपक्षोद्धूयमानाण्डगोलं
सकलविषविनाशं चिन्तयेत् पक्षिराजम्॥

ओं। वैनतेयः खगपतिः काश्यपोऽग्निर्महाबलः।
तप्तकाञ्चनवर्णाभः सुपर्णो हरिवाहनः॥ १

छन्दोमयो महातेजा महोत्साहो महाबलः।
ब्रह्मण्यो विष्णुभक्तश्च कुन्देन्दुधवलाननः॥ २

चक्रपाणिधरः श्रीमान्नागारिर्नागभूषणः।
विज्ञानदो विशेषज्ञो विद्यानिधिरनामयः॥ ३

भूतिदो भुवनत्राता भूशयो भक्तवत्सलः ।
सप्तच्छन्दोमयः पक्षी सुरासुरसुपूजितः ।। ४

गजभुक् कच्छपाशी च दैत्यहन्ताऽरुणानुजः ।
अमृतांशोऽमृतवपुरानन्दनिधिरव्ययः ।। ५

निगमात्मा निराहारो निस्त्रैगुण्यो निरप्ययः ।
निर्विकल्पः परं ज्योतिः परात्परतरः परः ।। ६

शुभाङ्गः शुभदः शूरः सूक्ष्मरूपी बृहत्तनुः ।
विषाशी विदितात्मा च विदितो जयवर्धनः ।। ७

दार्ढ्याङ्गो जगदीशश्च जनार्दनमहाध्वजः ।
सतां सन्तापविच्छेत्ता जरामरणवर्जितः ।। ८

कल्याणदः कलातीतः कलाधरसमप्रभः ।
सोमपः सुरसङ्घेशो यज्ञाङ्गो यज्ञभूषणः ।। ९

महाजवो जितामित्रो मन्मथप्रियबान्धवः ।
शङ्खभृच्चक्रधारी च बालो बहुपराक्रमः ।। १०

सुधाकुम्भधरो धीमान् दुराधर्षो दुरारिहा ।
वज्राङ्गो वरदो वन्द्यो वायुवेगो वरप्रदः ।। ११

विनतानन्दनः श्रीदो विजितारातिसङ्कुलः ।
पतद्वरिष्ठः सर्वेशः पापहा पापनाशनः ।। १२

अग्निजिज्जयघोषश्च जगदाह्लादकारकः ।
वज्रनासः सुवक्त्रश्च मारिघ्नो मदभञ्जनः ।। १३

कालज्ञः कमलेष्टश्च कलिदोषनिवारणः ।
विद्युन्निभो विशालाङ्गो विनतादास्यमोचनः ।। १४

स्तोमात्मा च त्रयीमूर्धा भूमा गायत्रलोचनः ।
सामगानरतः स्रग्वी स्वच्छन्दगतिरग्रणीः ।। १५

इतीदं परमं गुह्यं गरुडस्य महात्मनः ।
नाम्नामष्टोत्तरशतं पवित्रं पापनाशनम् ।
स्तूयमानं महादिव्यं विष्णुना समुदीरितम् ।। १६

—ब्रह्माण्डपुराणे

## श्री गरुडाष्टोत्तरशतनामावलिः

ओं वैनतेयाय नमः । खगपतये । काश्यपाय । अग्नये । महाबलाय । तप्तकाञ्चनवर्णाभाय । सुपर्णाय । हरिवाहनाय । छन्दोमयाय । महातेजसे । महोत्साहाय । महाबलाय । ब्रह्मण्याय । विष्णुभक्ताय । कुन्देन्दुधवलाननाय । चक्रपाणिधराय । श्रीमते । नागारये । नागभूषणाय । विज्ञानदाय नमः । २०

ओं विशेषज्ञाय नमः । विद्यानिधये । अनामयाय । भूतिदाय । भुवनत्रात्रे । भूशयाय । भक्तवत्सलाय । सप्तछन्दोमयाय । पक्षिणे । सुरासुरसुपूजिताय । गजभुजे । कच्छपाशिने । दैत्यहन्त्रे । अरुणानुजाय । अमृतांशाय । अमृतवपुषे । आनन्दनिधये । अव्ययाय । निगमात्मने । निराहाराय नमः । ४०

ओं निस्त्रैगुण्याय । निरप्ययाय । निर्विकल्पाय । परस्मै-ज्योतिषे । परात्परतराय । परस्मै । शुभाङ्गाय । शुभदाय । शूराय । सूक्ष्मरूपिणे । बृहत्तनवे । विषाशिने । विदितात्मने । विदिताय । जयवर्धनाय । दार्ढ्याङ्गाय । जगदीशाय । जनार्दनमहाध्वजाय । सतां सन्तापविच्छेत्रे । जरामरणवर्जिताय नमः । ६०

ओं कल्याणदाय । कलातीताय । कलाधरसमप्रभाय । सोमपाय । सुरसङ्घेशाय । यज्ञाङ्गाय । यज्ञभूषणाय । महाजवाय । जितामित्राय । मन्मथप्रियबान्धवाय । शङ्खभृते । चक्रधारिणे । बालाय । बहुपराक्रमाय । सुधाकुम्भधराय । धीमते । दुराधर्षाय । दुरारिघ्ने । वज्राङ्गाय । वरदाय नमः । ८०

ओं वन्द्याय नमः । वायुवेगाय । वरप्रदाय । विनतानन्दनाय । श्रीदाय । विजितारातिसङ्कुलाय । पतद्वरिष्ठाय । सर्वेशाय । पापघ्ने । पापनाशनाय । अग्निजिते । जयघोषाय । जगदाह्लादकारकाय । वज्रनासाय । सुवक्त्राय । मारिघ्नाय । मदभञ्जनाय । कालज्ञाय । कमलेष्टाय । कलिदोषनिवारणाय नमः । १००

ओं विद्युन्निभाय नमः । विशालाङ्गाय । विनतादास्य-मोचनाय । स्तोमात्मने । त्रयीमूर्ध्ने । भूम्ने । गायत्रलोचनाय । सामगानरताय । स्रग्विणे । स्वच्छन्दगतये । अग्रण्ये । श्री पक्षिराजपरब्रह्मणे नमः । १११

## अनन्ताष्टोत्तरशतनामावलिः

ओं अनन्ताय नमः । अच्युताय । अद्भुतकर्मणे । अमितविक्रमाय । अपराजिताय । अखण्डाय । अग्निनेत्राय । अग्निवपुषे । अदृश्याय । अत्रिपुत्राय । अट्टहासाय । अनाकुलाय । अघनाशिने । अनघाय । अप्सुनिलयाय । अर्हाय । अष्टमूर्तये । अनिरुद्धाय । अनिर्विण्णाय । अचञ्चलाय नमः । २०

ओं अष्टदिक्पालमूर्तये नमः । अखिलमूर्तये । अव्यक्ताय । अरूपाय । अनन्तरूपाय । अभयङ्कराय । अक्षराय । अभ्रवपुषे । अयोनिजाय । अरविन्दाक्षाय । अशनवर्जिताय । अधोक्षजाय ।

अत्रिपुत्राय। अम्बिकापतिपूर्वजाय। अपस्मारनाशिने। अव्ययाय । अनादिनिधनाय। अप्रमेयाय। अघशत्रवे। अमरारिघ्ने नमः। ४०

ओं अमरविघ्नहन्त्रे नमः। अनीश्वराय। अजाय। अनादये। अमरप्रभवे। अग्राह्याय। अक्रूराय। अनुत्तमाय। अर्हे। अमोघाय। अक्षयाय। अमृताय। अघोरवीर्याय। अव्यङ्गाय। अविघ्नाय। अतीन्द्रियाय। अमिततेजसे। अष्टाङ्गन्यस्तरूपाय। अनिलाय। अवशाय नमः। ६०

ओं अणोरणीयसे नमः। अशोकाय। अनुकूलाय। अमिताशनाय। अरण्यवासिने। अप्रमत्ताय। अनलाय। अनिर्देश्यवपुषे। अहोरात्राय। अमृत्यवे। अकारादिहकारान्ताय। अनिमिषाय। अस्त्ररूपाय। अग्रगण्याय। अप्रथिताय। असंख्याय । अमरवर्याय। अन्नपतये। अमृतपतये। अजिताय नमः। ८०

ओं अपां निधये। अपां पतये। असुरघातिने। अमरप्रियाय। अधिष्ठानाय। अरविन्दप्रियाय। अरविन्दोद्भवाय। अष्टसिद्धिदाय। अनन्तशयनाय। अनन्तब्रह्माण्डपतये। अशिववर्जिताय। अतिभूषणाय। अविद्याहराय। अतिप्रियाय। अकल्मषाय। अकल्पाय । अब्ददिकाय। अचलरूपाय। अघोराय। अक्षोभ्याय नमः। १००

ओं अलक्ष्मीशमनाय नमः। अतिसुन्दराय। अमोघौघाधिपतये। अक्षताय। अमितप्रभावाय। अवनीपतये। अर्चिष्मते। अपवर्गप्रदाय नमः। १०८

# विष्णुपादादिकेशांतवर्णनस्तोत्रम्

## श्रीशङ्करभगवत्पादकृतम्

## விஷ்ணுபாதாதிகேஶாந்தவர்ணநஸ்தோத்ரம்

ஶ்ரீஶங்கரபகவத்பாதர் இயற்றியது

**श्रीगणेशाय नमः ।**

लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं
नीलाद्रेस्तुंगशृंगस्थितमिव रजनीनाथबिम्बं विभाति ।
पायान्नः पांचजन्यः स सकुलदितिजत्रासनैः पूरयन्स्वैः
निध्वानैर्नीरदौघध्वनिपरिभवदैरंबरं कंबुराजः ॥ १

*ஸ்ரீ லக்ஷ்மியின் கணவரான விஷ்ணுவின் கைத்தலத்தில் வாஸம் செய்கிற வெண்ணிறமுள்ள பாஞ்சஜன்யம் என்ற சங்கம் நம்மைக் காப்பாற்றட்டும். பரந்த அதன் வடிவம் இந்திர நீலமலையின் கொடுமுடி மீதுள்ள சந்திரமண்டலம் போல் விளங்குகிறது. அசுரர் கூட்டத்தை நடுக்கமுறச் செய்கின்றவையும் கருமேகக் கூட்டத்தின் முழக்கங்களை வெட்கமடையச் செய்பவையுமான தன் முழக்கங்களால் அது வானத்தை நிரப்பிக் கொண்டிருக்கிறது. (1)*

आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं
ध्वांतस्यैकांतमंतं यदपि च परमं सर्वधाम्नां च धाम ।
चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं
शश्वन्नो विश्ववंद्यं वितरतु विपुलं शर्म घर्मांशुशोभम् ॥ २

*நொடிப் பொழுது முதலான காலவரையனைத்தும் சக்கிரத்தின் வடிவமென அறிஞர் கூறுவர். இருளை முற்றும் அழிப்பது, எல்லா ஒளி மண்டலங்களுக்கும் அப்பாற்பட்ட ஒளி கொண்டது. அசுரரின் உடலிலிருந்து பெருகும் ரத்த தாரை படிந்த கூரான முனை உள்ளது. சூரியனைப் போன்ற ஒளி*

கொண்டது. உலகனைத்தாலும் வணங்கப்பெறுவது. அத்தகைய சக்ரபாணியின் சக்கிரம் நமக்கு எப்போதும் நலம் தரட்டும். (2)

अन्याम्भिर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्तेः
अस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः ।
सर्वं संहर्तुमिच्छोररिकुलभुवनं स्फारविस्फारनादः
संयत्कल्पांतसिंधौ शरसलिलघटावार्मुचः कार्मुकस्य ।। ३

சார்ங்கம் என்ற வில்லின் நாணொலியின் உரத்த ஒலி நம்மைக் காக்கட்டும். அது தேவாஸுரப் போராகிய பிரளய முடிவிலான வெள்ளத்தில் ஹரியின் தோள்களிலிருந்து வீசுகிற காற்றால் நிறைந்து ஒலிப்பது, பகைவர் குலத்தின் உலகை அழிக்க முன் நிற்பது, பாணங்களாகிய நீரைப் பொழியும் மேகம், பேரிடி போல் பயம் தருவது, வியப்பின் மிகுதியால் விரிந்த கண்களுடைய தேவர்களின் நன்று நன்று என்ற கோஷத்தால் ஒலி கூடியது. அது நம்மைக் காக்கட்டும். (3)

जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोहयंती
युद्धेषूद्धूयमाना झटिति तडिदिवालक्ष्यते यस्य मूर्तिः ।
सोऽसिस्त्रासाकुलाक्षत्रिदशरिपुवपुःशोणितास्वादहृष्टो
नित्यानंदाय भूयान्मधुमथनमनोनंदको नंदको नः ।। ४

அந்த நந்தகம் என்ற உடைவாள் போரில் கருமேக மேனிநிறம் கொண்ட பகவானின் கையால் அடிக்கடி சுழற்றப் பெற்றதாக, மின்னல் போன்று திடீரெனத் தோன்றி மயக்குகிறது. நடுங்கிக் கலங்கிய அசுரர்களின் உடலில் ஓடும் ரத்தத்தைப் பருகித் திருப்தியடைகிறது. மதுவை அழித்த பரமனின் மனத்தை மகிழ்விக்கிறது. அது நிலைத்த ஆனந்தத்தைத் தரட்டும். (4)

कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता
सम्यग्वृत्ता स्थिताग्रे सपदि न सहते दर्शनं या परेषाम् ।

राजंती दैत्यजीवासवमदमुदिता लोहितालेपनार्द्रा
कामं दीप्तांशुकांता प्रदिशतु दयितेवास्य कौमोदकी नः ॥ ५

முரனின் எதிரியான விஷ்ணுவின் தாமரை போன்ற கைத் தலத்தால் ஆசையோடு பிடிக்கப்பட்ட அழகிய வடிவுள்ள உருண்டு திரண்டு முன் நிற்கிற கௌமோதகீ எனும் கதை எதிரிகளைக் காணச் சகிப்பதில்லை. அசுரரின் உயிராகிய மதுவின் மதத்தால் களிப்புற்று ஈரமான ரத்தப் பூச்சுடன், ஒளிக் கதிரால் மனத்தைக் கவர்வதாக, விஷ்ணுவின் காதலி போன்று விளங்கும் அது நாம் விரும்பியதைத் தரட்டும். 5

यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो
यं संचिंत्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतंति ।
चंचच्चंडोरुतुंडत्रुटितफणिवसारक्त पंकांकितास्यं
वंदे छंदोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥ ६

உலகின் உயிரும் உடலும் ஹரிக்கு வாஹனமும் கொடியுமான வேத வடிவினரான மாசற்ற பொன்னிறமுள்ள அந்த பக்ஷிராஜரான கருடர் எப்போதும் அசைகிற பருத்த அலகால் கொத்தித்துண்டாக்கப்பட்ட பாம்புகளின் கொழுப்பாலும் இரத்தத்தாலும் கறைபடிந்த வாயுடையவர். அவரை நினைத்த உடனேயே நாகப் பெண்களின் கருக்கள் சிதைந்து விடுகின்றன. அந்த கருடரை வணங்குகிறேன். (6)

विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता
सोऽनंतः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः ।
पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहंता
सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः ॥

உலகின் மேலாளரான விஷ்ணுவின் சிறந்த படுக்கையாகத் தன்னை அமைத்துக் கொண்டவரும், உலகனைத்தையும் தனியொருவராகத் தாங்குபவரும், பாம்பரசருமான அநந்தன் என்ற ஆதிசேஷன் அப்பழுக்கற்ற

பெரும் புகழ் உள்ளவர். எல்லா வேதங்களாலும் அறிவதற்கு உரியவர், எப்போதும் உலகைக் காப்பவர், அசுரர்களை அழிப்பவர், பாபத்தைப் போக்குபவர், எல்லாம் உணர்ந்தவர், எல்லாவற்றிற்கும் ஸாக்ஷி, அவர் விஷ பயமனைத்திலிருந்தும் நம்மைக் காப்பாற்றட்டும். 7

वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां
कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः।
कुंदेंदुस्वच्छमंदस्मितमधुरमुखांभोरुहां सुंदरांगीं
वंदे वंद्यामशेषैरपि मुरभिदुरोमंदिरामिंदिरां ताम्॥ ८

முரனின் எதிரியான விஷ்ணுவின் மார்பகத்தில் குடிகொண்டுள்ள மஹாலக்ஷ்மியை வணங்குகிறேன். இவளே வாணி, பூமி, கௌரி முதலிய வேறு வடிவங்களிலும் உள்ளதாக முனிவர் கூறுவர். அவளது கருணைகசிகிற கடைக்கண் பார்வை ஒரு தடவைபட்டாலே மனிதர்களுக்குச் செல்வமனைத்தும் கிட்டும். முல்லைக்கும் சந்திரனுக்கும் ஈடான தெளிவும் வெண்மையும் கொண்ட இனிய புன் முறுவலால் மலர்ந்த தாமரை போன்ற முகமுள்ளவள். அழகிய மேனியுள்ளவள். அனைவராலும் வணங்கத்தக்கவள். (8)

या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो
धत्ते या सत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम्।
धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं
विष्णोर्विश्वात्मनस्तां विपुलगुणमयप्राणनाथां प्रणौमि॥९

ஈசனின் அருகாமையால் பூமிதேவியே உயிரினம் அனைத்தையும் படைக்கிறாள். சராசரப் பொருள் அனைத்தையும் மஹத் என்று மூலதத்துவத்துடன் இணைத்து வாழ்வின் மேனிலை பெறச் செய்பவள். இவளே தாய், வாழ வைப்பவள், இயக்குபவள், எல்லாவற்றிற்கும் மூலப் பொருள். அந்நிலையில் மாறுபாடற்றவள், உலகின் பேராற்றல், அளவற்ற குணச் சிறப்புள்ளவள், உலகின் ஆத்மாவான விஷ்ணுவின் உயிர் நாயகி, இவளை வணங்குகிறேன். (9)

येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गैः
येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः ।
नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः
पद्माक्षस्याङ्घ्रिपद्मद्वयतलनिलयाः पांसवः पापपंकम् ।। १०

*பகவானின் பாததூளிகள் நமது இறுகிய பாபச் சேற்றை எப்போதும் அடியோடு நீக்கட்டும். அதனைப் பொறுமையால் அணுகாது உயர் நிலைப் பெற்ற அரக்கர் கூட்டம் உடன் தம் உயர் நிலையை இழக்கும். அதனைத் தலையால் தாங்க விரும்புவர். தாமரைக் கண்ணனின் தாமரை போன்ற திருவடிகளில் பணிந்திருப்பர். (10)*

रेखा लेखाभिवंद्याश्चरणतलगताश्चक्रमत्स्यादिरूपाः
स्निग्धाः सूक्ष्माः सुजाता मृदुललिततरक्षामसूत्रायमाणाः ।
दद्युर्नो मंगलानि भ्रमरभरजुषा कोमलेनाब्धिजायाः
कम्रेणाम्रेड्यमानाः किसलयमृदुना पाणिना चक्रपाणेः ।। ११

*சக்கிரபாணியின் திருவடிகளின் அடித்தளத்தில் உள்ள ரேகைகள் நமக்கு மங்களமளிக்கட்டும். அவை தேவர் முதலானோரால் வணங்கப்பட்டவை. சக்கிரம் மீன் முதலிய வடிவுடையவை, நெய்ப்பு மிக்கவை, நுண்ணியவை, நன்கு அமைந்தவை, மிக மெல்லிய பட்டு நூல் போன்றவை, வண்டுகளால் சூழப்பெற்றதும் துளிர் போன்ற மென்மையும் அழகும் கொண்டதுமான கடல் மகளான லக்ஷ்மியின் கோமளமான கைத்தலத்தால் வருடப்பெற்றவை. (11)*

यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदंडायमानात्
आश्च्योतंती बभासे सुरसरिदमला वैजयंतीव कांता ।
भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तंभशोभां दधानः
पातामेतौ पयोजोदरललिततलौ पंकजाक्षस्य पादौ ।। १२

*தாமரையின் நடு இதழ் போன்று அழகும் மென்மையும் கொண்ட தாமரைக் கண்ணனின் திருவடிகள். அதில் ஒன்று*

*(த்ரிவிக்ரமராக) வானளாவி நின்றபோது பச்சைமரகதக் கல்லாலான வெற்றித் தூண் போன்றிருந்தது. அதிலிருந்து தூய நதியான கங்கை வெளியாகி வெற்றித் தூணில் கட்டிய வெற்றிக் கொடியாகிப் பாய்ந்து பகவானின் மார்பில் துலங்கும் வனமாலே போலானது. பூமியில் ஊன்றி நின்ற திருவடியோ பூவுலகமாகிய குடும்பத்தின் ஆதாரத்தூணுக விளங்கிற்று. அவ்விருதிருவடிகளும் நம்மைக் காக்கட்டும்.*

आक्रामद्भ्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ
याभ्यां वैरोचनीन्द्रौ युगपदपि विपत्संपदोरेकधाम।
ताभ्यां ताम्रोदराभ्यां मुहुरहमजितस्यांचिताभ्यामुभाभ्यां
प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपंकेरुहाभ्याम्॥ १३

*நீண்ட திருவடிகள் மூவுலகையும் அளக்க முற்பட்டதும் அஸுரத் தலேவனுன விரோசனனின் மகன் பலி பதவி இழந்தான். தேவர் தலேவன் இந்திரன் உயர் பதவிபெற்ருன். நடுவே சிவந்தவை, எல்லோராலும் வணங்கப் பெற்றவை, பேராளுமை வழங்குபவை, அவற்றை நான் அடிக்கடி வணங்குகிறேன். (13)*

येभ्यो वर्णश्चतुर्थश्चरमत उदभूदादिसर्गे प्रजानां
साहस्री चापि संख्या प्रकटमभिहिता सर्ववेदेषु येषाम्।
व्याप्ता विश्वंभरा यैरतिविततनोर्विश्वमूर्तेर्विराजो
विष्णोस्तेभ्यो महद्भ्यः सततमपि नमोऽस्त्वंघ्रिपंकेरुहेभ्यः ॥ १४

*மக்களே முதன் முதலாகப் படைக்கையில் இந்தத் திருவடிகளிலிருந்தே நான்காம் வர்ணம் தோன்றிற்று. ஆயிரம் (ஆயிரக்கணக்கான) திருவடிகள் என வேதம் வெளிப்படையாகக் கூறியுள்ளது. எங்கும் பரவி நிற்பவரும் உலகமே உடலானவருமான அந்த விராட்புருஷனைத் தாங்குகிற திருவடிகளிலிருந்தும் உலகைத் தாங்கும் பூமிதேவி உண்டானுள். உலகமெங்கும் புகுந்துள்ள அவரது தாமரை போன்ற பெரும் பாதங்களுக்கு நமஸ்காரம். (14)*

विष्णोः पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या
राजीवस्येव रम्या हिमजलकणिकालंकृताग्रा दलाली।
अस्माकं विस्मयार्हाण्यखिलमुनिजनप्रार्थनीयानि सेयं
दद्यादाद्याऽनवद्या ततिरतिरुचिरा मंगलान्यंगुलीनाम्॥ १५

*விஷ்ணுவின் இரு திருவடிகளின் முன்னுள்ள பத்து விரல்களும் நிர்மலமான ரத்தினம் போன்ற நகங்களுள்ளவை. தாமரையின் அழகிய இதழ் வரிசை போன்ற அவை பனி நீர்த்துளிகளால் முன்புறம் அலம்பப்பட்டுள்ளன. பக்தர் நாடுவதை வழங்குவதில் முதலாவதும் குறையற்றதும் காந்தி மிக்கதுமான அந்த விரல் வரிசை மக்கள் விரும்பிக் கேட்கிற வியப்புக்குரிய மங்களங்களை நமக்கு அளிக்கட்டும். (15)*

यस्यां दृष्ट्वाऽमलायां प्रतिकृतिममराः स्वां भवंत्यानमंतः
सेंद्राः सांद्रीकृतेर्ष्याः स्वपरसुरकुलाशंकयाऽऽतंकवंतः।
सा सद्यः सातिरेकां सकलसुखकरीं संपदं साधयेन्नः
चञ्चच्चार्वंशुचक्रा चरणनलिनयोश्चक्रपाणेर्नखाली॥ १६

*சக்ரபாணியின் திருவடிகளின் நிர்மலமான நகவரிசையில் ஸாஷ்டாங்கமாக வணங்குகின்ற இந்திரனுள்ளிட்ட தேவர்கள் தமது பிரதிபிம்பத்தை அவற்றில் கண்டதும், அந்த பிரதிபிம்பமாகக் காண்பவர் வேறு தேவர்களோ என்ற சந்தேகத்தால் பொறாமையால் பயமடைகின்றனர். ஒளிர்கின்ற அழகிய ஒளி வட்டமுள்ள திருவடித் தாமரைகளின் நகவரிசை இன்பமனைத்தையும் தருகிற செல்வச் செழிப்பை இப்போது வழங்கட்டும். (16)*

पादांभोजन्मसेवासमवनतसुरव्रातभास्वत्किरीट-
प्रत्युप्तोच्चावचाश्मप्रवरकरगणैश्चित्रितं यद्विभाति।
नम्रांगाणां हरेर्नो हरिदुपलमहाकूर्मसौंदर्यहारि-
च्छायं श्रेयःप्रदायि प्रपदयुगमिदं प्रापयेत्पापमंतम्॥ १७

*சரண கமலங்களில் வணங்கும் போது தேவர்களின் ஒளிமிக்க கிரீடத்தில் பதித்திருந்த உயர்ந்த ரத்தினக் கற்களின் ஒளிக்கதிர்கள் பட்டுப் பல நிறங்களில் தோன்றுவதும், இந்திர நீலக்கல்லாலான பெரும் ஆமையின் அழகைப் பறிக்கின்ற சாயலுடன் கூடிய ஹரியின் புறங்கால்கள் இரண்டும் உடல் வணங்கி நிற்கின்ற நமது பாபத்தைப் போக்கட்டும். (17)*

श्रीमत्यौ चारुवृत्ते करपरिमलनानंदहृष्टे रमायाः
सौंदर्याढ्येंद्रनीलोपलरचितमहादंडयोः कांतिचौरे।
सूरींद्रैः स्तूयमाने सुरकुलसुखदे सूदितारातिसंघे
जंघे नारायणीये मुहुरपि जयतामस्मदंहो हरंत्यौ ॥ १८

*அழகாக உருண்டு திரண்டு ஒளியுடன், அழகுமிக்க நீல ரத்தினத்தாலான இருபெருந்தடிகளுக்கொப்பானதும் சிறந்த ஞானிகளால் துதிக்கப் பெற்றதும் பகைவர்களை ஒரு மிக்க அழித்ததும் தேவர் கூட்டத்திற்கு இன்பம் அளித்ததும், லக்ஷ்மியின் கைமணத்துடன் கூடிய வருடலால் ஆனந்தச் சிலிர்ப்பு அடைந்ததுமான நாராயணனின் கணுக்கால்கள் இரண்டும், நமது பாபத்தைப் போக்கி ஓங்கி நிற்கட்டும். (18)*

सम्यक् साह्यं विधातुं सममपि सततं जंघयोः खिन्नयोर्ये
भारीभूतोरुदंडद्वयभरणकृतोत्तंभभावं भजेते।
चित्तादर्शं निधातुं महितमिव सतां ते समुद्गायमाने
वृत्ताकारे विधत्तां हृदि मुदमजितस्यानिशं जानुनी नः ॥ १९

*கனத்துள்ள இரு துடைகளின் சுமையைத் தாங்க இயலாமல் தளர்ந்த இரு கணுக்கால்களுக்கும் உதவுவதற்குப் போல் முட்டுக்கட்டை நிலையை எப்போதும் ஏற்ற எவராலும் வெல்லப் பெறுத இறைவனின் முழங் கால்கள், நல்லோரின் சிறப்பு பெற்ற உள்ளம் எனும் கண்ணுடியைப் பாதுகாப்பாக வைக்க ஆபரணப் பெட்டி போல் வட்டவடிவில் விளங்குகின்றன. அந்த முழங்கால்கள் நம் உள்ளத்தில் எப்போதும் மகிழ்ச்சி தரட்டும். (19)*

देवो भीतिं विधातुः सपदि विदधतो कैटभाख्यं मधुं यौ
आरोप्यारूढगर्वावधिजलधि ययोरेव दैत्यौ जघान।
वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीलौ
ऊरू चारू हरेस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम्॥ २०

*கர்வமிக்க ஆதி அஸுரர்களான கைடபனும் மதுவும் ப்ரும்மாவிற்குப் பயம் தர அவர்களைத் தூக்கித் தன் துடை மீது வைத்து கடலுக்குள்ளேயே ஹரி அழித்தார். அந்த துடைகள் இரண்டும் உருண்டு திரண்டு, மேகம் போன்று கருத்தவையாக, ஒன்றுக்கொன்று ஈடாக, அழகாக உள்ளன. அவை நம் மனத்தில் அளவு கடந்த மகிழ்ச்சியை தரட்டும். (20)*

पीतेन द्योतते यच्चतुरपरिहितेनांबरेणात्युदारं
जातालंकारयोगं जलमिव जलधेर्वाडवाग्निप्रभाभिः।
एतत्पातित्यदाम्नो जघनमतिघनादेनसो माननीयं
सातत्येनैव चेतोविषयमवतरत्पातु पीतांबरस्य॥ २१

*கடல் நீர் பாடபாக்னியால் ஒளி பெறுவது போல் ஹரியின் இடுப்பின் அடிப்பகுதி (புட்டம்) அழகாக உடுத்திய மஞ்சளாடையால் மேலும் அழகுப்படுத்தப்பட்டு மிக வளமுடையதாக, மஞ்சளாடையை அடையாளமாகக் கொண்டவருக்கு ஏற்றதென போற்றப்படுகிறது. அது நம் உள்ளத்தில் படிந்து வீழ்ச்சி தரக் கூடிய கொடிய பயத்திலிருந்தும் நம்மைக் காப்பாற்றட்டும். (21)*

यस्या दाम्ना त्रिधाम्नो जघनकलितया भ्राजतेऽङ्गं यथाब्धेः
मध्यस्थो मंदराद्रिर्भुजगपतिमहाभोगसंनद्धमध्यः।
कांची सा कांचनाभा मणिवरकिरणैरुल्लसद्भिः प्रदीप्ता
कल्यां कल्याणदात्रीं मम मतिमनिशं कम्ररूपा करोतु॥ २२

*வானம் கடல் மலை என மூன்று வாஸ ஸ்தலங்கள் கொண்ட பகவானது மேனி, புட்டத்தைச் சுற்றிக் கட்டிய அரை*

ஞாண் கயிற்றின் முடிப்பால், பாம்பரசனுன வாஸுகியின் பெரும் உடலால் இடைப் பகுதியில் சுற்றிக்கட்டப்பட்ட கடல் நடுவே உள்ள மந்தரமலே போல் விளங்குகிறது. சிறந்த ரத்தினங்களின் ஒளிக்கதிர்களால் நல்ல ஒளி பெற்ற மங்களம் தரும் அரைஞாண் மனத்தைக் கவர்வதாக, பொன்னிறத்துடன் உள்ளது. அது என் அறிவை எப்போதும் திறமை மிக்கதாகச் செய்யட்டும். (22)

उन्नम्रं कम्रमुच्चैरुपचितमुदभूद्यत्र पत्रैर्विचित्रैः
पूर्वं गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम् ।
तस्मिन्नीलाश्मनीलैस्तरलरुचिजलैः पूरिते केलिबुद्ध्या
नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसश्चिराय ॥ २३

தாமரைக் கண்ணனது தொப்புளாகிற மடுவில் அந்தத் தாமரை முன்னர் எழுந்தது. நீண்ட கொடியால் உயர்ந்தும் அழகுற்றும் பலதரப்பட்ட வியக்கத்தக்க நல்லலீலேகளால் புஷ்டி பெற்றும், தேவர்களின் வழிபாட்டிற்கு உரியதாயும் தாமரையில் தோன்றிய பிரும்மா என்ற வண்டிற்கு இருப்பிடமாயும் அமைந்தது. நீல ரத்தினம் போல் கருத்த அலே மோதுகிற ஈசனின் ஒளியாகிய நீரால் நிரப்பப்பட்ட அந்த தொப்புள் என்ற மடுவில் நம் உள்ளமாகிய ஹம்ஸப் பறவை வெகு காலம் விளேயாடும் எண்ணத்துடன் வாழட்டும். (23)

पातालं यस्य नालं वलयमपि दिशां पत्रपंक्तिं नगेंद्रान्
विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां स्वर्णशैलम् ।
भूयाद्गायत्स्वयंभूमधुकरभवनं भूमयं कामदं नो
नालीकं नाभिपद्माकरभवमुरु तन्नागशब्दस्य शौरेः ॥ २४

நாகத்தின் மீது சயனித்துள்ள சூரனின் புதல்வரான விஷ்ணுவின் தொப்புள் என்ற தாமரை மடுவில் தோன்றிய பெரிய தாமரைக்கு பாதாளம் தண்டு, (கிழங்கு), திக்கெட்டும் இதழ்களின் வரிசை, சிறந்த மலேகளே கோதுகள்; மேரு மொட்டு என அறிஞர் கண்டறிந்துள்ளனர். வேத கானம்

*செய்கிற பிரும்மா என்ற வண்டின் இருப்பிடம் அது. பூமி வடிவான அந்தத் **தாமரை** நாம் விரும்பியதைத் தரட்டும். (24)*

कांत्यंभःपूरपूर्णे लसदसितवलीभंगभास्वत्तरंगे
गंभीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे।
क्रीडत्वानद्धहेमोदरनलिनमहावाडवाग्निप्रभाढ्ये
कामं दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ।। २५

*காந்தி என்ற நீர் வெள்ளத்தால் நிறைந்து, ஒளிமிக்க கருத்த வயிற்று மடிப்புகளாகிய அலைகளுடன், ஆழமும் அழகும் மிக்க தொப்புளின் அழகிய பெருஞ் சுழலால் மேலும் அழகாகி, வயிற்றின் மீது இறுக்கிக் கட்டப்பட்ட தங்கத்தாலான வயிற்றுப்பட்டியாகிய வடவாக்னியின் ஒளி நிறைந்து வளம் பெற்ற தாமோதரரது வயிறு என்ற கடலில் நம் மனமாகிய மீன் தன் விருப்பம் போல் நீண்ட நேரம் விளையாடட்டும். (25)*

नाभीनालीकमूलादधिकपरिमलोन्मोहितानामलीनां
माला नीलेव यांती स्फुरति रुचिमती वक्त्रपद्मोन्मुखी या।
रम्या सा रोमराजिर्महितरुचिमती मध्यभागस्य विष्णोः
चित्तस्था मा विरंसीच्चिरतरमुचितां साधयंती श्रियं नः ।। २६

*தொப்புளாகிய தாமரையின் அடிப்புறத்திலிருந்து முகத் தாமரையை நோக்கிச் செல்வதான ரோமவரிசை அதிக அளவிலுள்ள நறுமணத்தில் மயங்கி அதனை நாடி வருகின்ற கரிய வண்டுகளின் வரிசை செல்வது போன்றுள்ளது. அழகு மிக்க ஈர்க்கின்ற மனத்திற்கு இன்பம் தருகிற அந்த ரோம வரிசை விஷ்ணுவின் இடைப்பகுதிக்கு ஒளி தருகிறது. தக்க செல்வத்தைத் தருவதாக அது நம் உள்ளத்தில் நிலைத்திருக்கட்டும். (26)*

आदौ कल्पस्य यस्मात्प्रभवति नियतं विश्वमेतद्विकल्पैः
कल्पांते यस्य चांतः प्रविशति सकलं स्थावरं जंगमं च।

अत्यंताचिंत्यमूर्तेश्चिरतरमजितस्यांतरिक्षस्वरूपे
तस्मिन्नस्माकमंतःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥ २७

*கல்பத்தின் தொடக்கத்தில் ஹரியின் வயிற்றினுள்ளிருந்து பல்வேறு மாறுபாடுகள் நிறைந்ததாக இந்த உலகம் தோன்றி வளர்ந்தது. கல்பத்தின் முடிவில் தாவரமும் ஜங்கமமுமானதனைத்தும் வயிற்றினுள் சென்று மறைகிறது. இத்தகையவர் என உறுதிப்படுத்த இயலாதவரும் பிறரால் வெல்லப்படாதவருமான பகவானின் அடிவானப் பகுதியான அந்த அடிவயிற்றில் நம் உள்ளம் நீண்ட காலவரை மகிழ்ச்சியுடன் விளையாடட்டும். (27)*

संस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं
श्रीवत्सोल्लासि फुल्लप्रतिवनवनमालांशुराजद्भुजांतम्।
वक्षः श्रीवृक्षकांतं मधुकरनिकरश्यामलं शार्ङ्गपाणेः
संसाराध्वश्रमांतैरुपवनमिव यत्सेवितं तत्प्रपद्ये ॥ २८

*சார்ங்கம் எனும் வில்லைக் கையிலேந்திய பெருமானின் மார்பு ஸம்ஸார வழியில் நடந்து களைத்து வருந்துபவர்களுக்குக் களைப்பாறுமிடமான தோட்டம் போல் உள்ளது. அத்தோட்டம் கௌஸ்துபமணியின் ஒளிக்கதிர்களாகிய பசும் புற்கள் நிறைந்தது. மழமழப்பால் அழகிய முத்துக்களாகிய பழங்கள் கொண்டது. லக்ஷ்மீ வஸிப்பதால் மனத்தை லேசாக்குவது. மலர்ந்த புது மலர்களாலான வனமாலையால் அழகுற்ற தோள்களின் அடித்தளமாகிய பெருங் கிளைகள் கொண்டது. ஸ்ரீதேவி தங்குகிற வில்வமரம் போன்ற சுழி உள்ளது. வண்டுகள் குவிந்திருப்பது போல் கருத்தது. அதனைப் புகலடைகிறேன். (28)*

कांतं वक्षो नितांतं विदधदिव गलं कालिमा कालशत्रोः
इन्दोर्बिम्बं यथांको मधुप इव तरोर्मंजरीं राजते यः।
श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्रीप्रतानैः
श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स उच्चैः श्रियं नः ॥ २९

யமனின் எதிரியான சிவனின் கழுத்தைக் கால கூட விஷத்தை அருந்தியதால் ஏற்பட்ட கருநிறம் போலும் சந்திர பிம்பத்தை மறு போன்றும், மரத்தின் பூங்கொத்தை வண்டு போலும் மார்பை மேலும் அழகாக்குவது போல் மார்பில் அழகுமிக்க ஸ்ரீ வத்ஸம் எனும் மறு அழகுப்படுத்துகிறது. கௌஸ்துப மணியின் அழகொளியால் இடைவெளியின்றி தழுவப்பெற்றது. ஸ்ரீதேவிக்குத் தன் புதல்வன் போல் இதனிடம் அன்பு அதிகம். அந்த ஸ்ரீவத்ஸம் மேலான செல்வத்தை எப்போதும் வழங்கட்டும். (29)

संभूयांभोधिमध्यात्सपदि सहजया यः श्रिया संनिधत्ते
नीले नारायणोरःस्थलगगनतले हारतारोपसेव्ये।
आशाः सर्वाः प्रकाशा विदधदपि दधच्चात्मभासान्यतेजां-
स्याश्चर्यस्याकरो नो द्युमणिरिव मणिः कौस्तुभः सोऽस्तु भूत्यै ॥

கருநிறமுள்ள நக்ஷத்திரம் போன்று முத்தாரம் பூண்ட நாராயணனின் மார்பாகிற வானில் பாற்கடலின் நடுவே ஒரே ஸமயத்தில் தன்னுடன் பிறந்த ஸ்ரீதேவியுடன் ஒருங்கே அமர்ந்துள்ள கௌஸ்துபம் எனும் ரத்தினம் தன் ஒளியால் ஸூரியன் போல் திக்கனைத்தையும் ஒளிரச் செய்வதால் மற்ற ஒளிகளை மழுங்கச் செய்து கொண்டு, வியப்பிற்கு ஒரே இடமாக உள்ளது. அது நமக்கு நல் வாழ்வைத் தரட்டும். (30)

या वायावानुकूल्यात्सरति मणिरुचा भासमाना समाना
साकं साकंपमंसे वसति विदधती वासुभद्रं सुभद्रम्।
सारं सारंगसंघैर्मुखरितकुसुमा मेचकांता च कांता
माला मालालितास्मान्न विरमतु सुखैर्योजयंती जयंती ॥ ३१

வைஜயந்தீ எனும் பூமாலை ரத்தின ஒளியுடன் இணையற்று விளங்குகிறது. வாஸுதேவரை மங்கள உருவடையச் செய்கிறது. சுற்றிக் காற்று அனுகூலமாக வீசும் போது ஈசனது தோளில் மெல்ல அசைகிறது. பூக்களைச் சுற்றி ரீங்காரமிடுகிற வண்டுகளால் அதன் ஓரப் பகுதிகள் கருநிறம் கொண்டுள்ளன. ஸ்ரீதேவியால் பாராட்டப் பெற்றதான அந்த அழகிய மாலை

நம்மை இன்பத்தோடிணைப்பதில் எப்போதும் ஓய்வடையாதிருக்கட்டும். (31)

हारस्योरुप्रभाभिः प्रतिवनवनमालांशुभिः प्रांशुभिर्यत्
श्रीभिश्चाप्यंगदानां शबलितरुचिभिर्निष्कभाभिश्च भाति।
बाहुल्येनैव बद्धांजलिपुटमजितस्याभियाचामहे तद्
बंधार्तिं बाधतां नो बहुविहतकरीं बंधुरं बाहुमूलम्॥ ३२

எவராலும் வெல்ல வொண்ணுதவரான பகவானின் அழகிய தோள் பலவிதமாக ஊறுவிளைவிக்கின்ற ஸம்ஸாரக் கடலான துயரைத் தடுக்கட்டும் எனப் பலவகையில் கை கூப்பியபடித் திரும்பத் திரும்ப வேண்டுகிறோம். தோளானது மாலையின் பேரொளியாலும் புதிது புதிதாகச் சாற்றப்படுகிற வனமாலைகளின் ஒளியாலும் மார்பணிகளின் ஒளியாலும் அழகாக விளங்குகிறது. (32)

विश्वत्राणैकदीक्षास्तदनुगुणगुणक्षत्रनिर्माणदक्षाः
कर्तारो दुर्निरूपाः स्फुटगुरुयशसां कर्मणामद्भुतानाम्।
शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशंखौ सहस्रं
बिभ्राणाः शस्त्रजालं मम ददतु हरेर्बाहवो मोहहानिम्॥ ३३

ஹரியின் கைகள் உலகைக் காப்பதென விரதத்தை முக்கியமாகக் கொண்டவை. உலகைக் காப்பதற்கேற்ற ஆற்றல் மிக்க க்ஷத்ரியர்களை உண்டாக்குவதில் திறமை மிக்கவை. இது இப்படிப்பட்டதெனக் கூற முடியாதவை. சிறப்பும் புகழும் வெளிப்படும்படி அரிய செயல்களை ஆற்றுபவை. சார்ங்கம், பாணம், உடைவாள், கேடயம், சக்கிரம், கதை, தாமரை, சங்கு மற்றும் ஆயிரக்கணக்கான ஆயுதங்களை ஏந்தியவை. அவை என் அறியாமையைப் போக்கட்டும். (33)

कंठाकल्पोद्गतैर्यः कनकमयलसत्कुंडलोस्रैरुदारैः
उद्द्योतैःकौस्तुभस्याप्युरुभिरुपचितश्चित्रवर्णो विभाति।

कंठाश्लेषे रमायाः करवलयपदैर्मुद्रिते भद्ररूपे
वैकुंठीयेऽत्र कंठे वसतु मम मतिः कुंठभावं विहाय ॥ ३४

*கழுத்தணிகளிலிருந்தும் தங்கக் குண்டலங்களிலிருந்தும் கௌஸ்துப மணியிலிருந்தும் எழுந்த பேரொளிகளால் நிறைந்த பல்வேறு வண்ணங்கள் கொண்டு விளங்குகிற வைகுண்ட நாதனின் கழுத்து லக்ஷ்மீ தேவி கழுத்தைச் சுற்றித் தழுவும் போது கைவளையல்கள் அழுத்திய அடையாளமிடப்பட்டுள்ளது. மங்களத் தோற்றமுள்ளது. அதில் என் அறிவு குன்றாமல் பதியட்டும். (34)*

पद्मानन्दप्रदाता परिलसदरुणश्रीपरीताग्रभागः
काले काले च कंबुप्रवरशशधरापूरणे यः प्रवीणः ।
वक्त्राकाशान्तरस्थस्तिरयति नितरां दंततारौघशोभां
श्रीभर्तुर्दंतवासोद्युमणिरघतमोनाशनायास्त्वसौ नः ॥ ३५

*லக்ஷ்மி பதியின் பற்களை ஆடை போல் மூடுகிற உதடு எனும் சூரியன் லக்ஷ்மிக்கு ஆனந்தமளிப்பது. நாற்புறமும் ஒளிர்கிற (அருணனுகிற) செவ்வொளியால் வெளிப்புறம் சிவந்தது. அவ்வப் போது சந்திரன் போன்ற சங்கைக் காற்றால் நிரப்புவதில் திறம் பெற்றது. திருமுகமாகிய ஆகாசத்தின் நடுவே ஒளிர்வது. பற்களாகிய நக்ஷத்திரங்களின் அழகை நன்றாக மறைப்பது. அது நம் பாப இருளைப் போக்கட்டும். (35)*

नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमा या
वक्त्रेन्दोरंतराले कृतवसतिरिवाभाति नक्षत्रराजिः ।
लक्ष्मीकांतस्य कांताकृतिरतिविलसन्मुग्धमुक्ताफलश्रीः
दन्ताली संततं सा नतिनुतिनिरतान् रक्षतादक्षता नः ॥ ३६

*லக்ஷ்மியின் மணாளனின் பற்களின் வரிசை நட்சத்திர வரிசை போன்றுள்ளது. தம் மணாளனாகிய சந்திரனது பிரிவைத் தாங்க இயலாமல், திருமுக மண்டலமாகிய சந்திரனின் இடையே எப்போதும் அழகுடன் வசிக்கிறது. மிகவும்*

*தளுக்குடன் கூடிய முத்து வரிசையின் ஒளியை அது வென்றது. ஒளி குன்றுதது. அது வணங்குவதிலும் துதிப்பதிலும் ஈடுபாடு மிக்க நம்மை எப்போதும் கேடு நீங்கியவராகக் காக்கட்டும்.*

ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव संभावये त्वां
शंभो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः ।
इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्न-
स्यास्येंदोरास्रवंती वरवचनसुधा ह्लादयेन्मानसं नः ॥ ३७

*தன்னை அடி பணிந்து வணங்குகிற தேவர் - முனிவர் கூட்டத்தைக் கண்டு மகிழ்ச்சியடைந்த விஷ்ணுவின் சந்திரன் போன்ற வாக்கிலிருந்து ''பிரும்மாவே ! வேதத்தில் வஞ்சனையின்றி அறிவைச் செலுத்துகிறீரா ? சம்புவாகிய தேவரே ! உம்மைப் பாராட்டுகிறேன். இந்திரனே ! தேவர்களுடன் மூவுலகையும் பாதுகாக்கிறீரா ? நாரதர் முதலான முனிவர்களே ! நீங்கள் சுகமா'' எனப் பெருகுகிற சிறந்த சொல்லமுதம் நம் மனத்தை இன்புறச் செய்யட்டும். (37)*

कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहाकुंडलप्रोतदीप्यन्-
माणिक्यश्रीप्रतानैः परिमिलितमलिश्यामलं कोमलं यत् ।
प्रोद्यत्सूर्यांशुराजन्मरकतमुकुराकारचोरं मुरारेः
गाढामागामिनीं नो गमयतु विपदं गंडयोर्मंडलं तत् ॥ ३८

*முரனின் எதிரியான பகவானின் அந்தக் கன்னப்பகுதி, காதுகளில் துலங்கும் பொன்னாலான மனத்தைக் கவர்கிற மகர குண்டலங்களில் பதித்த மாணிக்கங்களின் ஒளி சூழ்ந்தது, வண்டு போன்று கருத்தது. மென்மையழகு கொண்டது. நன்கு உதித்த சூரியனின் கிரணங்களின் பிரதிபலிப்பு கொண்ட மரகதக் கண்ணாடியின் அழகைக் கொள்ளையடிப்பது. அது வரவிருக்கிற பேராபத்தை விலக்கட்டும். (38)*

वक्त्रांभोजे लसंतं मुहुरधरमणिं पक्वबिंबाभिरामं
दृष्ट्वा दष्टुं शुकस्य स्फुटमवतरतस्तुंडदंडायते नः।
घोणः शोणीकृतात्मा श्रवणयुगलसत्कुंडलोस्रैर्मुरारेः
प्राणाख्यस्यानिलस्य प्रसरणसरणिः प्राणदानाय नः स्तात्॥ ३९

*முரனின் எதிரியான திருமாலின் தாமரை போன்ற முகத்தில், இரண்டு காதுகளின் குண்டல ஒளியால் சிவந்ததான மூக்கு, நன்கு பழுத்த கோவைப் பழம் போல் அழகான உதடு என்ற ரத்தினத்தை கண்டு (கோவைப் பழம் என நினைத்து) கொத்துவதற்குக் கீழிறங்குகிற கிளியின் நீண்ட அலகு போன்று காணப்படுகிறது. பிராணவாயுவின் நடமாடும் இடமான அந்த மூக்கு நமக்கு உயிரூட்டட்டும். (39)*

दिक्कालौ वेदयंतौ जगति मुहुरिमौ संचरन्तौ रवींदू
त्रैलोक्यालोकदीपावभिदधति ययोरेव रूपं मुनींद्राः।
अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे
पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे॥ ४०

*தாமரைக் கண்ணனின் கண்கள் உலகிற்கு திசைகளையும் காலத்தையும் அறிவிக்க மாறிமாறி இங்குமங்கும் நடமாடுகின்றன. உலகம் வெளிப் பொருளைக் காண உதவுகிற வெளிச்சம் தருகிற தீபங்கள். முனிவர்கள் இவற்றை ஸூர்ய சந்திரர்களின் வடிவங்களே கூறுவர். தாமரை போன்ற ஒளியுடன் சிறிது சிவந்து வெளுத்துக் கருத்துக் காண்பவை. கருணை ததும்பப் பார்ப்பவை. அவை நம்மைக் காக்கட்டும். (40)*

लक्ष्माकारालकालिस्फुरदलिकशशांकार्धसंदर्शमीलन्-
नेत्रांभोजप्रबोधोत्सुकनिभृततरालीनभृंगच्छदाभे।
लक्ष्मीनाथस्य लक्षीकृतविबुधगणापांगबाणासनार्ध
च्छाये नो भूतिभूरिप्रसवकुलशते भ्रूलते पालयेताम्॥ ४१

*பறவையரசரான கருடன் மீது ஏறிச் செல்கிற நாராயணனின் வளைந்த நடுப்பகுதியுள்ள புருவமிரண்டும் தம்*

*சிறு அசைவால் அசுரர்களுடன் தேவர்களையும் தம் தம் நிலையில் கட்டுப்பட்டிருக்கச் செய்பவை. சந்திரனின் பாதிப்பாகம் போன்று வெளுத்த நெற்றி எனும் அரங்கில் வாளி என்ற காதணிகளுக்கு நடுவே நடனம் செய்கிற இரு கரு நாகங்கள் போலுள்ளன. இவை நரகமெனும் பாதாளத்தில் விழுவதிலிருந்தும் நம்மைக் காப்பாற்றட்டும். (41)*

पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं
येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसंघाः ।
नृत्यल्लालाटरंगे रजनिकरतनोरर्धखंडावदाते
कालव्यालद्वयं वा विलसति समया बालिका मातरं नः ॥ ४२

*லக்ஷ்மியின் மணாளனின் கொடி போன்ற புருவங்கள் நம்மைக் காக்கட்டும். மச்சம் போன்று அமைந்த சுட்டி மயிர்களால் அழகிய நெற்றியாகி பாதி சந்திரனைக் காண்பதில் கூம்பிய கண்களாகிய தாமரை மலர்கள் மலர்வதை ஆவலுடன் எதிர்நோக்கி, மிகவும் நெருக்கமாக அமர்ந்துள்ள கருவண்டுகளின் வரிசை போன்று அவை காணப்படுகின்றன. தேவர்களை இலக்காகக் கொண்டு அவர்கள் மீது பாய்கிற கடாக்ஷம் என்கிற அம்பு பூட்டிய வில்லின் இருபகுதிகள் போன்றவை. அளவற்ற நல்வாழ்வளிக்க வல்லவை. (42)*

रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्ष-
प्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकेशानलिंगम् ।
भूयाद्भूयो विभूत्यै मम भुवनपतेर्भ्रूलताद्वंद्वमध्याद्
उत्थं तत्पुंड्रमूर्ध्वं जनिमरणतमःखंडनं मंडनं च ॥ ४३

*உலகநாயகனின் நெற்றியில் பொலிவுடன் விளங்குகிற ஊர்த்துவ புண்டிரம் கொடிய மன்மதனின் வில்லிலிருந்து எய்யப்பட்ட பாணக் கூட்டங்களால் வாடிய லக்ஷ்மி தன் கடாக்ஷமாகிற நன்கு மலர்ந்த தாமரையாலான மாலையை சாற்றி மகிழ்விக்கப் பெற்ற பரமசிவனது ஸ்படிக லிங்கமாயுள்ளது. பிறப்பிறப்பெனும் இருளைப் போக்குவது. கொடி போன்ற புருவங்களிடையே மேலேழுந்து*

அலங்காரமாக விளங்குகிற அது மேன்மேலும் மேன்மை தரட்டும்.

(நாராயணனின் நெற்றியில் ஸ்படிக சிவலிங்கம் உள்ளதை சந்திரபாகா நதிக் கரையிலமைந்த பாண்டுரங்கனிடம் காணலாம்.) (43)

पीठीभूतालकांते कृतमुकुटमहादेवलिंगप्रतिष्ठे
लालाटे नाट्यरंगे विकटतरतटे कैटभारेश्चिराय।
प्रोद्धाट्यैवात्मतंद्रीप्रकटपटकुटीं प्रस्फुरंतीं स्फुटांगं
पट्टीयं भावनाख्यां चटुलमतिनटी नाटिकां नाटयेन्नः ॥ ४४

நெற்றியின் ஓரத்தில் உள்ள முன்னுச்சி மயிர்ச் சுருளின் நுனியைப் பீடமாகக் கொண்டு அதன் மீது ஸ்தாபிக்கப் பெற்ற மஹாதேவனின் லிங்கமாகிய கிரீடத்தைக் கொண்ட கைடப சத்ருவான பகவானின் மிக விசாலமான நெற்றியாகிய நடன அரங்கில் தன் சோம்பலாகிய அகன்ற திரையை விலக்கி, தன் அங்கங்கள் நன்கு புலப்படும்படி ஒளி வீசுகிற திறமை மிக்க சஞ்சலமான நம் புத்தியாகிய நடனமாது நீண்ட காலம் பகவானை உள்வாங்குதலாகிய நாடகத்தை நடிக்கட்டும். (44)

मालालीवालिधाम्नः कुवलयकलिता श्रीपते कुंतलाली
कालिंदारुह्य मूर्ध्नो गलति हरशिरःस्वर्धुनीस्पर्धया नु।
राहुर्वा याति वक्त्रं सकलशशिकलाभ्रांतिलोलांतरात्मा
लोकैरालोच्यते या प्रदिशतु सकलैः साऽखिलं मंगलं नः ॥ ४५

வண்டு போன்ற கரிய மேனி கொண்ட லக்ஷ்மீபதி தரித்துள்ள நீல அல்லிப் பூக்களாலான மாலைகளின் வரிசை போன்று விளங்குகிற நீண்ட சுருண்ட கேசக்கற்றை பரமசிவனது தலையிலுள்ள கங்கைக்குப் போட்டியாக மேலேறித் தலையில் அமர்ந்த யமுனையின் நீர் வீழ்ச்சி போன்றுள்ளது. (யமுனையின் நீர் கருநிறம்மிக்கதென்பர்.) கலைகளனைத்தும் நிறைந்த சந்திர பிம்பம் எனத் தடுமாறிய மனம் கொண்ட ராகு முகம் நோக்கிச் செல்கிறதோ! என்று வியந்து

காணச் செய்கிற குழற்கற்றை நமக்கு இடையறுது எப்போதும் மங்களமனைத்தையும் அளிக்கட்டும். (45)

सुप्ताकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपाः
व्याप्तव्योमांतरालास्तरलरुचिजलारंजिताः स्पष्टभासः ।
देहच्छायोद्गमाभा रिपुवपुरगुरुप्लोषरोषाग्निधूम्याः
केशाः केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ।। ४६

நாராயணனின் கேசக்கற்றைகள் பகவான் யோக நித்திரையில் ஆழ்ந்துள்ள போது தாமும் தூங்கும். அவை தேவர்களாலும் காணப்பெருதவை. ஆகாசத்தின் இடைவெளி முழுவதும் பரவியவை. (கேசஅணிகளிலுள்ள) ரத்தினங்களின் காந்தியால் சிவந்தவை. ஈசனின் மேனியின் சாயை மேலெழுந்தது போன்று தனி ஒளி பெற்றவை. எதிரிகளின் உடல்களாகிற அகிற்கட்டைகளை எரிக்கின்ற கோபத் தீயிலிருந்து எழுந்த புகைப்படலம் போன்றவை. அவை கஷ்டங்களின் சிக்கல்களை அழிக்கட்டும். (46)

यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिःप्रतान
स्फूर्त्या मूर्तिर्मुरारेर्द्युमणिशतचितव्योमवद्दुर्निरीक्ष्या ।
कुर्वत्पारेपयोधि ज्वलदकृतमहाभास्वदौर्वाग्निशंकां
शश्वन्नः शर्म दिश्यात्कलिकलुषतमःपाटनं तत्किरीटम् ।। ४७

அந்தக் கிரீடம் நமக்கு எப்போதும் நலம் தரட்டும். அதில் பதிக்கப் பெற்ற உயர்ந்த ரத்தினங்களின் ஒளி வரிசை வெளிப்பாட்டால் முராரியின் மேனி நூறு சூரியர்கள் சூழ்ந்த ஆகாசம் போன்று பார்க்க இயலாதுள்ளது. கடலின் அக்கரையில் கொழுந்து விட்டெரிகிற பேரொளி கொண்ட வடவை நெருப்போ என்று ஐயப்படச் செய்கிறது. கலிதோஷமாகிய இருளை அகற்றுகிறது. (47)

भ्रांत्वा भ्रांत्वा यदंतस्त्रिभुवनगुरुरप्यब्दकोटीरनेकाः
गंतुं नांतं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात् ।

उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं
देहांभोभिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो नः ॥ ४८

மூவுலகத் தந்தையான பிரும்மா பகவானின் மேனியினுள் பல கோடி ஆண்டுகள் சுற்றித் திரிந்தும் எல்லை காண இயலாமல் மறுபடி இறையருளால் சஞ்சலம் நீங்கி தொப்புள் கொடியின் வழியே வண்டைப் போல் வெளியேறி உள்ளே கண்ட உலகங்களுக்கொப்பான வேறு மூன்று உலகங்களைப் படைத்தார். அரக்கர்களை எதிர்க்கின்ற பகவானின் எல்லை காண இயலாத மேனி எனும் கடல் நமக்கு சாகா நிலையை அளிக்கட்டும். (48)

मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः
काकुत्स्थः कंसघाती मनसिजविजयी यश्च कल्कीभविष्यन् ।
विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः
पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥ ४९

மீன், ஆமை, பன்றி, நரஸிம்ஹர், வாமனர், பரசுராமர், ராமன், கம்ஸனை அழித்த கிருஷ்ணர், மன்மதனை வென்ற புத்தர், தோன்ற விருக்கிற கல்கி என விஷ்ணுவின் அம்சம் கொண்டு தோன்றிய அவதாரங்கள் உலகிற்கு நன்மை புரிபவை. தர்மத்தை நிலை கொள்ளச் செய்பவை, அவை மிகக் கனத்த கருணைச் சுமையால் உள்ளம் கனிந்து என்னைக் காப்பாற்றட்டும்! (49)

यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणः
स्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादाः ।
नित्यानंदं स्वसंविन्निरवधिममृतं स्वांतसंक्रांतबिंबच्
छायापत्त्यापि नित्यं सुखयति यमिनो यत्तदव्यान्महो नः ॥ ५०

நித்யமும் ஆனந்தமும் தன்னைத் தானே விளக்குவதும், வரையற்றதுமான அந்த பிரும்ம ஜ்யோதியானது நிர்மலமான உள்ளத்தில் பிரதிபிம்பமாக நிழல் பெற்று மனமடங்கி ஈசனைப்

*பற்றியவர்களை எப்போதும் இன்பமடையச் செய்கிறது. மனமும் வாக்கும் அதனை எட்ட முடியாமல் திரும்பின. வேதங்களோ நேரிடைப் பொருள் காணுமல் லக்ஷணை முறையை நாடி வேறு ஒன்றில்லை என மறுத்துக் கூறுவதில் திருப்தியடைந்து தன்னைப் புகழ்ந்து கொண்டன. அந்தப் பேரொளி நம்மைக் காப்பாற்றட்டும். (50)*

आ पादादा च शीर्ष्णो वपुरिदमनघं वैष्णवं यः स्वचित्ते
धत्ते नित्यं निरस्ताखिलकलिकलुषे संततांतः प्रमोदः ।
जुह्वज्जिह्वाकृशानौ हरिचरितहविःस्तोत्रमंत्रानुपाठैः
तत्पादांभोरुहाभ्यां सततमपि नमस्कुर्महे निर्मलाभ्याम् ॥ ५१

*இந்த ஸ்தோத்திரம் என்ற மந்திரத்தை உச்சரித்து நாக்கெனும் அக்னியில் ஹரியைப் பற்றிய வரலாறு எனும் ஹோமப் பொருளை இட்டுத் திருவடி முதல் திருமுடிவரை விஷ்ணுவின் மேனியைக் கலியின் மாசு நீக்கிய தன் உள்ளத்தில் நிரப்பி எப்போதும் அவரைத் தியானிக்கிற தூய்மை மிக்க பக்தரின் சரண கமலங்களை வணங்குவோம். (51)*

मोदात्पादादिकेशान्तस्तुतिमिति रचितां कीर्तयित्वा त्रिधाम्नः
पादाब्जद्वन्द्वसेवासमयनतमतिर्मस्तकेनानमेद्यः ।
उन्मुच्यैवात्मनैनो निचयकवचकं पञ्चतामेत्य भानोः
बिंबान्तर्गोचरं स प्रविशति परमानन्दमात्मस्वरूपम् ॥ ५२

*இவ்வாறு இயற்றப் பெற்ற பாதாதி கேசாந்தஸ்து தியை ஆனந்தத்தால் பாடி ஆகாயம் கடல் மலை என்ற மூன்றிடங்களிலும் துலங்குகிற பகவானின் சரண கமலங்களில் உள்ளம் பதித்துத் தலையால் வணங்குபவன் தேகத்தோடு தன்னை இறுக்கிப் பிடித்துள்ள பாப கூட்டமென்ற கவசத்தைக் கழற்றி எறிந்து விட்டு இயற்கை எய்தி ஸூரிய மண்டலத்தின் உள்ளே துலங்குகிற பேரானந்த மயமான ஆத்ம நிலையில் ஒன்றி விடுகிருன். (52)*

श्रीमधुसूदनसरस्वती विरचिता

# आनन्दमन्दाकिनी

ஸ்ரீமதுஸூதந ஸரஸ்வதீ இயற்றிய

# ஆநந்த மந்தாகினீ

वाग्देवीचतुरास्यपञ्चवदना नित्यं सहस्रानने-
ऽप्युच्चैर्यत्र जडात्मतामुपगताः केऽन्ये वराकाः सुराः ।
मर्त्याः स्वल्पधियः कथं नु कुशलास्तत्राप्यहं प्रज्ञया
हीनः किं करवाणि तां व्रजकुलोत्तंस प्रशंसां तव ।। १

*1. ஆயர் குலத்து உத்தமரே ! வாக்கின் தேவதையான ஸரஸ்வதியும் நான்முகனும் ஐந்து முகங்களுள்ள சிவனும், ஆயிரம் முகம் கொண்ட ஆதிசேஷனும் உன்னைத் துதிப்பதில் ஜடத்தன்மை அடைந்துள்ளனரெனில் மற்ற பேதை தேவர்களோ, அல்ப அறிவுள்ள மாந்தரோ, திறமையற்றவராவர். அதிலும் உள்ளறிவு சிறிதும் அற்ற நான் உம்மை எவ்வாறு புகழ்வேன்.*

नित्यं ब्रह्मसुरेन्द्रशंकरमुखैर्दत्तोपहाराय ते
विस्वादांस्तुषमिश्रतण्डुलकणान्विप्रः सुदामा ददौ ।
तद्वद्देव निरर्थकैः कतिपयै रूक्षाक्षरैर्निर्मितां
वागीशप्रमुखस्तुतस्य भवतः कुर्यां स्तुतिं निस्त्रपः ।। २

*2. தேவரே ! பிரும்மா இந்திரன் சிவன் முதலானோரால் விருந்திடப் பெற்ற உமக்கு ருசியற்றதும் தவிட்டுடன் கலந்ததுமான அவலை ஸுதாமா என்ற அந்தணர் தந்தார். அதே போன்று பிருஹஸ்பதி (பிரும்மா) முதலானோரால் துதிக்கப்பெற்ற உமக்கு பொருளற்ற சில வரண்ட சொற்களாலான இந்தத் துதியை வெட்கமின்றி அமைக்கிறேன்.*

शश्वद्ब्रह्मशिवेन्द्रदेवगुरुवाग्देवीफणीन्द्रादिभिः
स्तुत्यस्यापि हरे ममास्तु रचिता वाणी विनोदाय ते।
चित्रालंकृतिशालिभिः सुललितैर्नित्यं कवीनां स्तवैः
सम्राजः समुपासितस्य शुकगीर्धत्ते प्रमोदं यथा ॥ ३

3. ஹரே ! அடிக்கடி பிரும்மா சிவன் இந்திரன் பிருஹஸ்பதி ஸரஸ்வதி ஆதிசேஷன் முதலானவரால் துதிக்கப் பெற்ற உமக்கு என்னுல் அமைக்கப்பெற்ற துதி பொழுது போக்க உதவட்டும். வியக்கத் தக்க சொல்லணிச் சிறப்புடன் லலிதமாயும் உள்ள கவிகளின் துதிகளால் கொண்டாடப் பெற்ற அரசனுக்கு கிளியின் மொழியும் ஆனந்தமளிக்குமல்லவா?

चित्राकारकिरीटकोटिविलसद्रत्नौघकान्तिच्छटा-
संघट्टेन विचित्रमम्बरतलं कुर्वत्स्थितं मूर्धनि।
जीयात्केकिशिखण्डमण्डनमिदं नीलाचलस्थायिनी
स्वर्णाद्रेः शिखरे पुरंदरधनुर्व्यूहस्य निन्दावहम् ॥ ४

4. நீலாசலத்தில் அமர்ந்த இந்த வடிவம் தலேயில் மயில் தோகை அணிந்துள்ளது. மிகச் சிறப்புடன் ஒளி மிக்க ரத்தினங்கள் பதித்த கிரீட ஒளிக் கதிர் ஒன்றுக்கொன்று மோதிக் கொண்டு வானில் விசித்திர ஒளிக் குவியலைப் பரப்புகிறது. தங்க மலேயான மேருவின் மீது பரவிய வானவில் கூட்டத்தை இந்த ஒளிக்குவியல் பழிக்கிறது.

(நீலாசலம் - புரிஜகன்னுத க்ஷேத்திரத்திலிருந்த மலே. இன்று அது பூமியினுள் மறைந்து விட்டது. நீலமாதவர் அங்கிருந்ததாக ஐதீகம். மதுஸூதனரின் இஷ்ட தைவமான கிருஷ்ணனது கேசாதிபாதாந்த ஸ்தோத்திரமாக இதனேக் கருதலாம்.)

यत्पादान्तनखांशुचिन्तनवशादज्ञानमन्धं तमो-
ऽप्यन्तं याति मुकुन्द तस्य भवतो ध्वान्तानि किं मूर्धनि।

ज्ञातं त्वां दयितं समेत्य जलदा ये केशतामाश्रिताः
ते बद्धाश्चपलागणैः प्रणयजक्रोधात्किरीटच्छलात् ।। ५

5. முகுந்தா ? உமது திருவடி நகங்களின் ஒளியை நினைத்தாலே அறியாமையிருள் அகன்று விடும். அந்த உமது தலையில் இருளா ? முன்னர் நன்கு அறிமுகமான அன்புக்குரிய உம்மை நோக்கி வந்த மேகங்கள் கேசக்கற்றை நிலையடைந்தன. அதனால் மின்னல்கள் மேகங்களிடம் (தம்மை விட்டுப் பிரிந்ததற்காக) அன்புக் கோபமடைந்தன. ரத்தின ஒளி மிக்க கிரீடம் என வேஷம் போட்டு கேசபாசங்களை அடக்கிக் கட்டிப் போட்டுள்ளன.

त्वच्चक्षुः सवितुः सरोरुहरुचेः साक्षात्कथं गण्डयोः
भाले च व्रजनाथ नर्तनपरा ध्वान्तार्भकाः संततम् ।
निर्णीतं मुखनेत्रपङ्कजवनीमाध्वीकपानान्मुहुः
माद्यन्तो मधुपा भ्रमन्ति परितो वक्त्रालकव्याजतः ।। ६

6. தாமரை போன்ற நிறம் கொண்ட ஸூர்யன் போன்ற கண்களுக்கும், கன்னங்களுக்கும், நெற்றிக்கும் அருகே வர நர்த்தனம் புரிகிற இருட்டாகிற சிறு குழந்தைகள் போன்ற வண்டுகள் எப்போதும் வட்டமிடுகின்றன. கண்களும் முகமும் தாமரைக்குளம் போன்று தோன்ற, அதில் தேனைப் பருகி அந்தத் தேனீக்கள் போதை மிகுந்து வட்டமிடுகின்றன. முகத்தில் தொங்கி மறைக்கின்ற சுட்டி மயிர்களின் வேஷம் தாங்கியுள்ளன.

त्वद्भाले निकषोपले विजयते काश्मीरगोरोचना-
संभूतस्तिलकः परीक्षणविधौ किं हेमरेखोद्गमः ।
चाञ्चल्यं चपला विहाय जलदं किं वा समालम्बते
किं वा मारकतस्थले समुदितः कंदर्पवृक्षाङ्कुरः ।। ७

7. கிருஷ்ண ! உம் நெற்றி உரை கல் போன்று பட்டையாக உள்ளது. அதில் குங்குமப்பூ - கோரோசனை இவற்றாலான

திலகம் உள்ளது. பரிசோதனை செய்கையில் தங்கரேக்கு வெளிப்படுகிறது. மின்னல் கொடிகள் தன் சஞ்சலத் தன்மையை இழந்து மேகத்தின் மேல் படர்ந்துள்ளனவோ ? அல்லது மரகதத் தரையில் மன்மதனின் அம்பிற்கான சம்பக மரங்கள் முளைத்துள்ளனவோ ?

त्वद्भ्रूवल्लिमिषेण कार्मुकलतामाकृष्य पुष्पाशुगः
कृत्वा चम्पककोरकं च तिलकव्याजेन बाणं हरे।
लक्ष्यं कुन्तलनीलकण्ठमतुलश्रीचन्द्रकं विध्यति
प्रायः शत्रुसमाननाम्न्यपि जने क्रोधो यदूर्जस्विनाम् ॥ ८

8. ஹரே ! உம் புருவங்கள் கொடி போன்று வளைந்துள்ளன. பூக்களை அம்பாகக் கொண்ட மன்மதன் அவற்றை வில்லாகக் கொண்டு (நாணேற்றி) அதில் சம்பக மொட்டை அம்பாக்கினான். கூந்தல் கழுத்தில் கருத்த சிவன் போலும் நெற்றி சந்திர ரேகை போலும் அவன் கண்களில் பட, நெற்றியை இலக்காக்கி அம்பை எய்கிறான் போலும். எதிரியின் சாயையிருந்தாலும் அந்தப் பொருளிடம் வீரனுக்குப் பெரும்பாலும் கோபம் உண்டாகும்.

निःशेषप्रमदामनोमनसिजक्रीडामहामन्दिर-
व्रीडावज्रकपाटिकाविघटनप्रौढाकृतिः कुञ्चिका।
दुर्मानिग्रहिलत्रिलोकमहिलामानच्छिदाकर्तरी
शृङ्गारद्रुममञ्जरी स्फुरति किं गोविन्द ते भ्रूलता ॥ ९

9. கோவிந்த ! அனைத்து யுவதிகளின் மனத்தில் உருவாகிய மன்மத கேளிகளுக்கான பெருமாளிகைக்கு அவர்களது வெட்கமே வைரம் பாய்ந்த கதவாகிறது. மூடியிருக்கிற அந்தக் கதவுகளைத் திறக்க பெரிதும் உதவுகிற சாவி உமது புருவக்கொடி. துரஹங்காரம் பிடித்த மூவுலகத்துப் பெண்களின் அஹங்காரத்தைச் சிதைக்கிற கத்திரிக் கோல் அது. ஆனால் சிருங்காரமெனும் மரத்தில் பூத்துள்ள பூங்கொத்தாக அது விளங்குகிறதேன் ?

नो कार्यं श्रुतिवर्त्मलङ्घनमिदं नालीकमुग्धाकृतिः
पर्यन्ताकलनं विधाय सहजस्वच्छेन भाव्यं सदा।
अन्तः कृष्णमुपास्य तद्रुचिमता संभावना सर्वतः
कार्येत्यम्बुजलोचनाक्षियुगलं मानं दधौ ते सताम्॥ १०

*10. தாமரைக் கண்ணா ! உன் இரு கண்களும் நல்லோர் நடைமுறையை மதித்து நடக்கின்றன. அவை சுருதிகளின் (வேதங்கள் காட்டுகிற) வழியைக் கடக்கக் கூடாது. (சிலேடையால் - காதுகளின் எல்லையை மீறக் கூடாது. காது வரை நீண்ட கண்கள்) அலீகப் பேச்சால் (பொய் மொழிதலால்) அசட்டுத் தோற்றம் பெறக் கூடாது. (சிலேடையால் தாமரை போன்ற அழகிய தோற்றம் கொள்ள வேண்டும்.) சுற்றுச் சூழ்நிலையை ஆராய்ந்து இயல்பாகத் தெளிவுடன் இருக்க வேண்டும். (சுழல்கிற பார்வை இயல்பான தெளிந்த தோற்றத்துடன் இருக்க வேண்டும்.) உள்ளத்தினுள் கிருஷ்ணனை வழிபட்டு அதே எண்ணத்துடன் எங்கும் அவரைக் காணவேண்டும். (நடுவில் உள்ள கருவிழியைச் சீராக வைத்து எங்கும் பார்வையைப் பரப்ப வேண்டும்.) இந்த மூன்று நிலைகளையும் உம் இருகண்கள் பின்பற்றுகின்றன.*

सौन्दर्यामृतदीर्घिके तव दृशौ पक्ष्मावलिश्रेतयोः
कूले कामकृषीवलेन रचिता शृङ्गाररसस्योन्नतिः।
दृग्भङ्गीर्निगदन्ति यास्तु विबुधा रत्यम्भसां वीचयः
ताः स्युर्गोपवधूहृदम्बुजवनीदोलायिता यत्नतः॥ ११

*11. உமது இருகண்கள் அழகின் அமுத ஓடைகள், புருவமயிர்கள் அவற்றின் இரு கரைகள். கரைகளில் மன்மதனெனும் உழவர் சிருங்காரம் எனும் பயிரை வளர்த்துள்ளார். கண்ணசைவுகளே காமக் கிளர்ச்சியாகிய நீரலைகள். கோபிகளின் இதயங்களாகிய தாமரைக் குவியல்களை முழு முயற்சியில் ஊஞ்சலாட்டுபவை.*

दूरे ब्रह्मशिवेन्द्रपूर्वदिविषद्बृन्दे नमस्कुर्वति
व्यावल्गद्व्रजबालकौघलगुडत्र्युट्यत्किरीटे हठात्।
सावज्ञा मधुमत्तसुन्दरदृशां शोभाद्विषः सालसाः
दृक्पातास्तव नन्दवंशतिलक स्वान्ते सदा सन्तु मे ।। १२

12. நந்த வம்சத்தின் திலகமே ! பிரும்மா, சிவன், இந்திரன் முதலிய தேவர்களின் கூட்டம் தூரநின்று உம்மை வணங்குகிறது. ஆயர்பாடியிலுள்ள சிறுவர்கள் கூடி விளையாடும் போது அவர்கள் எறிந்த கிட்டிப் புட்கள் தேவர்களின் கிரீடங்களைத் தாக்குகின்றன. அதனைப் பொருட்படுத்தாமல் உம் கண் பார்வைகள் சோம்பலுடன், தேன் பருகிக் கிரங்கி நிற்கிற அழகிய கண்களின் அழகை எதிர்க்கின்றன. அந்த கண் பார்வை வீச்சுகள் என் உள்ளத்தில் எப்போதும் இருக்கட்டும்.

मुक्तेरप्यतिदुर्लभा हिमगिरिप्रस्यन्दिमन्दाकिनी-
धारातोऽप्यतिशीतलातिमसृणा चान्द्रान्मयूखादपि।
वाञ्छातोऽप्यतिविस्तृता विषयिणां त्वत्पादचिन्तापर-
स्वान्तादप्यतिनिर्मला मयि कृपादृष्टिस्तवास्तां हरे।। १३

13. ஹரியே ! உமது கிருபை ததும்புகிற பார்வை என் மீது விழட்டும். அது முக்தியை விடப் பெற அரிது. இமயமலையிலிருந்து பெருகிற கங்கையின் நீரை விடக் குளிர்ந்தது. சந்திரனின் நிலவை விட வழுவழுப்பானது. விஷயப் பற்றுள்ளவரின் நப்பாசையை விட மிகவும் விரிவுள்ளது. உம் திருவடிகளையே தியானிப்பவரின் உள்ளத்தை விட அதிகத் தூய்மை பெற்றது. அந்தப் பார்வை என் மீது இருக்கட்டும்.

कल्पान्ताग्निशिखोन्नतिर्दितिसुतव्राते प्रपन्ने जने
पीयूषद्रवसिन्धुवृद्धिरमरस्तोमे विभूत्यायतिः।

सीमा प्रेमभरस्य गोपनिकरे कंदर्पकाण्डाहतिः
ब्रह्माण्डोदरसुन्दरीहृदि हरे जीयाद्दृशोस्ते द्युतिः ॥ १४

*14. ஹரியே ! உமது கண்களின் ஒளி அஸுரக் கூட்டத்தின் மீது பிரளயத் தீப்பிழம்பை விட உக்கிரமானது. தன்னை அண்டி நிற்கிற மக்களிடம் அமுத நீர் பெருக்குள்ள கடலின் எழுச்சி. தேவர்கள் கூட்டத்திடம் ஆளுமை வரவு, கோபர்கள் கூட்டத்தில் அன்புச் சுமையின் எல்லை. பிரும்மாண்டத்திலுள்ள அழகிகளின் உள்ளத்தில் மன்மதனின் அம்புகளின் அடி. அது சிறந்து மேலாக விளங்கட்டும்.*

निर्बन्धेन यदीन्द्रनीलमहसा संपादितौ दर्पणौ
ताभ्यां किं तुलना कपोलतलयोः संभाव्यते वा न वा।
एवं ज्ञातुमुपागते श्रुतिपथं नेत्रे त्रपाकुञ्चिते
शङ्के द्वैधवती त्वदीयवदनप्रान्तश्रियं पश्यतः ॥ १५

*15. இந்திர நீலக் கற்களின் ஒளியைக் கொண்டு மிகவும் முயன்று தயாரிக்கப் பெற்ற இரு முகக் கண்ணாடிகளுடன் உமது இரு கன்னங்களை ஒப்பிட முடியுமா ? முடியாதா ? இதனையறியக் காதுகளின் இடத்திற்குக் கண்கள் வந்தன. உமது கன்னங்களின் அழகைக் கண்டு அவை வெட்கத்தால் குனிந்து உள்ளத்தில் ஐயப்பாட்டுடன் நிற்கின்றன.*

त्वां पादाङ्गदकङ्कणाङ्गदशिरोलंकारहाराम्बरैः
संपूज्य प्रददौ सुतामथ मणिं रत्नाकरः कौस्तुभम्।
आस्ये तस्य सुतः सुधांशुरखिलां कान्तिं यदा दत्तवान्
स्वाकारं व्यतरंस्तदैव मकराः किं कुण्डलान्तस्तव ॥ १६

*16. உமக்கு ரத்தின கொலுசு, காப்பு, தோள் வளைகள், வளையல்கள், தலையணிகள், ஹாரங்கள், ஆடைகள் இவற்றையளித்து உபசரித்து கடலரசன் தன் மகளையும் கௌஸ்துப மணியையும் அளித்தான். கடலரசனின் மகனாகிய*

*சந்திரன் உமது முகத்திற்குத் தன் காந்தியனைத்தையும் அளித்தான். கடலிலுள்ள மகர முதலைகள் குண்டல வடிவில் தம் உருவத்தையே தந்தனவோ ?*

लावण्यामृतवाहिनी तव मुखस्येयं मनोज्ञाकृतिः
तस्यामद्भुतबुद्बुदः समभवत्तत्रापि फेनोद्गमः ।
नासावंशगतं तमेव विशदं मुक्ताफलं ये विदुः
ते मान्या मधुसूदन त्वयि मनोवृत्त्यैव धन्या यतः ।। १७

*17. மதுவெனும் அரக்கனை அழித்தவரே ! மனம் கவர்கிற உமது முகத்தின் தோற்றம் அழகெனும் அமுதத்தைப் பெருக்கெடுத்தோடச் செய்கிற நதி. அதில் வியக்கத்தக்க குமிழ்கள். அவற்றின் மீது நுரை கொப்புளிக்கிறது. அதனை நீண்ட மூக்கின் அணியான அப்பழுக்கற்ற முத்தாக உணர்கின்றனர். அவர்களே உம்பால் சென்ற மனப்போக்கால் பாக்யசாலிகள் (கொடுத்து வைத்தவர்கள்.)*

नेत्राम्भोजमुखेन्दुभालतिलकैर्नित्यं विवादो यतः
सौन्दर्यार्थमिति प्रतीत्य विधिना सीता कृता नासिका ।
तूणी वा कुसुमायुधस्य नृपतेर्यन्मल्लिकाकोरकः
काण्डस्तत्र चकास्ति मौक्तिकफलव्याजेन नन्दात्मज ।। १८

*18. தாமரை போன்ற கண்கள், சந்திரன் போன்ற முகம், நெற்றியில் திலகம், இவற்றுள் ஒருவருக்கொருவர் அழகு பற்றிய போட்டி. இதனைத் தவிர்க்க பிரும்மாவால், எல்லைக் கோடு இடப்பட்டது. அது உமது மூக்கு. நந்தனின் புதல்வரே! அது மன்மதனின் அம்புறாத் தூணியோ ? மல்லிகை மொட்டோ ? அதன் காம்பு போல் முத்து என்ற தொங்கட்டான் உள்ளதே !*

योऽहं ते पदपङ्कजद्युतिलवं प्राप्याभवं पल्लवः
कल्पक्ष्मारुहमस्तकाभरणतां यातश्च राधापते ।

राष्ट्रवर्धनाय नमः । राष्ट्रवर्धनश्री - । ६. अं अशोकाय नमः । अशोकश्री - । ६. धं धर्मपालाय नमः । धर्मपालश्री - । ६. सुं सुमन्त्राय नमः । सुमन्त्रश्री - ।

ओं रां रामाय नमः । श्रीरामश्री - । एवं त्रिः ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥

इति भक्त्या अञ्जलिना प्रणम्य पुष्पाञ्जलिं दद्यात् ।

षष्ठावरण पूजा-

द्वादशदलेषु पूर्वादिक्रमेण-

६. वं वसिष्ठाय नमः । वसिष्ठश्री । ६. वां वामदेवाय नमः । वामदेवश्री - । ६. जां जाबालये नमः । जाबालिश्री - । ६. गौं गौतमाय नमः । गौतमश्री - । ६. भं भरद्वाजाय नमः । भरद्वाजश्री - । ६. विं विश्वामित्राय नमः । विश्वामित्रश्री - । ६. वां वाल्मीकये नमः । वाल्मीकिश्री - । ६. नां नारदाय नमः । नारदश्री - । ६. सं सनकाय नमः । सनकश्री - । ६. सं सनन्दनाय नमः । सनन्दनश्री - । ६. सं सनातनाय नमः । सनातनश्री - । ६. सं सनत्कुमाराय नमः । सनत्कुमारश्री - ।

ओं रां रामाय नमः । श्रीरामश्री - । एवं त्रिः ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं षष्ठमावरणार्चनम् ॥

इति भक्त्या अञ्जलिना प्रणम्य पुष्पाञ्जलिं दद्यात् ।

सप्तमावरणपूजा-

(षोडशदलेषु) ६. नीं नीलाय नमः। नीलश्री -। ६. नं नलाय नमः। नलश्री -। ६. सुं सुषेणाय नमः। सुषेणश्री -। ६. मैं मैन्दाय नमः। मैन्दश्री -। ६. द्विं द्विविदाय नमः द्विविदश्री। ६. शं शरभाय नमः। शरभश्री -। ६. गं गन्धमादनाय नमः। गन्धमादनश्री -। ६. गं गवाक्षाय नमः। गवाक्ष श्री - ६. कुं कुण्डलाय नमः। कुण्डलश्री -। ६. श्रीं श्रीवत्साय नमः। श्रीवत्सश्री -। ६. कौं कौस्तुभाय नमः। कौस्तुभश्री -। ६. शं शङ्खाय नमः। शङ्खश्री -। ६. चं चक्राय नमः। चक्रश्री -। ६. गं गदायै नमः। गदाश्री -। ६. पं पद्माय नमः। पद्मश्री -।

ओं रां रामाय नमः। श्रीरामश्री -। एवं त्रिः।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्॥

इत्यञ्जलिना प्रणम्य पुष्पाञ्जलिं दद्यात्।

अष्टमावरणपूजा

द्वात्रिंशद्दलेषु - प्राच्यादिक्रमेण -। ६. ध्रुं ध्रुवाय नमः। ध्रुवश्री -। ६. सों सोमाय नमः। सोमश्री -। ६. अं अद्भ्यो नमः। अपृश्री -। ६. अं अह्ने नमः। अहःश्री -। ६. अं अनिलाय नमः। अनिलश्री -। ६. अं अनलाय नमः। अनलश्री -। ६. प्र प्रत्यूषाय नमः। प्रत्यश्री -। ६. प्रं प्रभासाय नमः। प्रभासश्री -। ६. वीं वीरभद्राय नमः। वीरभद्रश्री -। ६. शं शंभवे नमः। शंभुश्री -। ६. गिं गिरीशाय नमः। गिरीशश्री -। ६. अं अजायैकपदे नमः। अजैकपाच्छ्री -। ६. अं अहये बुध्न्याय नमः। अहिर्बुध्न्यश्री -। ६. पिं पिनाकिने नमः। पिनाकिश्री -। ६. भुं

भुवनेशाय नमः । भुवनेशश्री - । ६. कं कपालिने नमः । कपालिश्री - । ६. दिं दिक्पतये नमः । दिक्पतिश्री - । ६. स्थां स्थाणवे नमः । स्थाणुश्री - । ६. भं भर्गाय नमः । भर्गश्री - । ६. वं वरुणाय नमः । वरुणश्री - । ६. सूं सूर्याय नमः । सूर्यश्री - । ६. वें वेदाङ्गाय नमः । वेदाङ्गश्री - । ६. भां भानवे नमः । भानुश्री - । ६. इं इन्द्राय नमः । इन्द्रश्री - । ६. कं कवये नमः । कविश्री - । ६. गं गभस्तये नमः गभस्तिश्री - । ६. मं मयाय नमः । मयश्री - । ६. हिं हिरण्यरेतसे नमः - । हिरण्यरेतःश्री - । ६. दिं दिवाकराय नमः । दिवाकरश्री - । मिं मित्राय नमः । मित्रश्री । ६. विं विष्णवे नमः । विष्णुश्री - । ६. धां धात्रे नमः । धातृश्री - ।

ओं रां रामाय नमः । श्रीरामश्री - । एवं त्रिः ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम् ॥

इति भक्त्या अंजलिना प्रणम्य पुष्पाञ्जलिं दद्यात् ।

नवमावरणपूजा-

भूपुरान्तः - पूर्वादिक्रमेण अष्टसु दिक्षु -

६. इं इन्द्राय नमः । इन्द्रश्री - । ६. अं अग्नये नमः । अग्निश्री - । ६. यं यमाय नमः । यमश्री - । ६. निं निरृतये नमः । निरृतिश्री - । ६. वं वरुणाय नमः । वरुणश्री - । ६. वां वायवे नमः । वायुश्री - । ६. कुं कुबेराय (सों सोमाय) नमः । कुबेरश्री - (सोमश्री) - । ६. ईं ईशानाय नमः । ईशानश्री - । ६. ब्रं ब्रह्मणे नमः । ब्रह्मश्री - (ईशानपूर्वदिशोर्मध्ये) - । ६. अं अनन्ताय नमः । अनन्तश्री - (निरृतिपश्चिमयोर्मध्ये) ।

ओं रां रामाय नमः । श्रीरामश्री - ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ।।

इति भक्त्या अञ्जलिना प्रणम्य पुष्पांजलिं समर्पयेत् ।

दशमावरणपूजा -

भूपुराद्बहिः - (पूर्ववद्दशसु दिक्षु)

६. वं वज्राय नमः । वज्रश्री - । ६. शं शक्त्यै नमः । शक्तिश्री - । ६. दण्डाय नमः । दण्डश्री - । ६. खं खड्गाय नमः । खड्गश्री - । ६. पां पाशाय नमः । पाशश्री - । ६. अं अङ्कुशाय नमः । अङ्कुशश्री - । ६. गं गदायै नमः । गदाश्री । ६. शूं शूलाय नमः । शूलश्री - । ६. पं पद्माय नमः । पद्मश्री - । ६. चं चक्राय नमः । चक्रश्री - ।

ओं रां रामाय नमः । श्रीरामश्री - । एवं त्रिः ।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं दशमावरणार्चनम् ।।

इति भक्त्या अञ्जलिना प्रणम्य पुष्पांजलिं समर्पयेत् ।

अनेन दशावरणार्चनेन भगवान् सर्वावरणदेवतात्मकः सीतालक्ष्मण भरत शत्रुघ्नहनुमदादिपरिवृतः श्रीरामः प्रीयताम् ।।

श्रीरामचन्द्रार्पणमस्तु ।

(श्रीरामनवावरणपूजायां अयं विशेषः प्रथमा षडङ्गपूजा आवरणपूजात्वेन न गण्यते । द्वितीयावरणपूजा प्रथमा भवति ।)

# सुन्दरस्तवः

सुन्दरकाण्डप्रतिसर्गसंग्रहात्मकः श्रीबालकृष्ण शास्त्रिविरजितः

जाम्बवत्स्मारितबलं सागरोल्लङ्घनोत्सुकम् ।
स्मरतां स्फूर्तिदं दीनरक्षकं नौमि मारुतिम् ।। १

मैनाक-सुरसा-सिंहीरतिलङ्घ्याम्बुधेस्तटे ।
पृषदंशाल्पकाकारं तिष्ठन्तं नौमि मारुतिम् ।। २

त्रिकूटशृङ्ग वृक्षाग्र प्राकारादिष्ववस्थितम् ।
दुर्गरक्षेक्षणोद्विग्न चेतसं नौमि मारुतिम् ।। ३

लङ्कयाऽधृष्यया वाममुष्टिघातावघूर्णया ।
उक्त्वाऽऽयतिमनुज्ञातं सोत्साहं नौमि मारुतिम् ।। ४

विविधैर्मवनैर्दीप्तां पुरीं राक्षससङ्कुलाम् ।
पश्यन्तं राक्षसेन्द्रान्तः पुरगं नौमि मारुतिम् ।। ५

ज्योत्स्नायां निश्यतिरम्येषु हर्म्येषु जनकात्मजाम् ।
मार्गमाणमदृष्ट्वा तां विषण्णं नौमि मारुतिम् ।। ६

कुम्भकर्णादि रक्षोऽग्र्य प्रासादावृतमुत्तमम् ।
सुगुप्तं रावणगृहं विशन्तं नौमि मारुतिम् ।। ७

पुष्पकाख्यं राजगृहं भूस्वर्गं विस्मयावहम् ।
दृष्ट्वाऽप्यदृष्ट्वा वैदेहीं दुःखितं नौमि मारुतिम् ।। ८

रत्नोज्ज्वलं विश्वकर्मनिर्मितं कामगं शुभम् ।
पश्यन्तं पुष्पकं स्फारनयनं नौमि मारुतिम् ।। ९

सङ्कुलान्तःपुरं सुप्तनानायौवतमच्छलम् ।
दृष्ट्वाऽप्यविकृतं सीतां दिदृक्षुं नौमि मारुतिम् ।। १०

पीवानं रावणं सुप्तं तत्पत्नीं शयनेऽन्यतः ।
दृष्ट्वा सीतेति संहृष्टं चपलं नौमि मारुतिम् ।। ११

सुप्तस्त्री दृष्टिनष्टात्म ब्रह्मचर्यविशङ्किनम्।
अपक्रम्याऽऽपानभूमिं गच्छन्तं नौमि मारुतिम्।। १२

कालात्यय-नृपक्रोध-कार्यासिद्धि-विशङ्कितम्।
निर्विण्णमप्यनिर्वेदे दृष्टार्थं नौमि मारुतिम्।। १३

पुनर्निवृत्तौ कापेयमानुषापायशङ्किनम्।
रामादीन् सिद्धये नत्वोत्तिष्ठन्तं नौमि मारुतिम्।। १४

सीतामशोकवनिकानद्यां स्नानार्थमेष्यतीम्।
द्रष्टुं पुष्पित वृक्षाग्रनिलीनं नौमि मारुतिम्।। १५

सीतां दृष्ट्वा शिंशपाधः स्थितां चारित्रमातृकाम्।
मनसा राममासाद्य निवृत्तं नौमि मारुतिम्।। १६

इह सीता ततो रामः ईदृशीयं स तादृशः।
अन्योन्यमर्हत इति स्तुवन्तं नौमि मारुतिम्।। १७

राक्षसीवेष्टितेहेयं तद्दृष्टाहं नृपात्मजौ।
नमामि सुकृतं मेऽतीत्याश्वस्तं नौमि मारुतिम्।। १८

सुप्तोत्थितं दृष्टपूर्वं रावणं प्रमदावृतम्।
सीतोपच्छन्दकं दृष्ट्वाऽवप्लुतं नौमि मारुतिम्।। १९

रावणागमनोद्विग्नां विषण्णां वीक्ष्य मैथिलीम्।
सर्वोपमाद्रव्यदूरां सीदन्तं नौमि मारुतिम्।। २०

सान्त्वेनानुप्रदानेन शौर्येण जनकात्मजाम्।
रक्षोऽधिपे लोभयति वृक्षस्थं नौमि मारुतिम्।। २१

मां प्रधृष्य सतीं नश्येरिति तद्धितवादिनीम्।
करुणां रूपिणीं सीतां पश्यन्तं नौमि मारुतिम्।। २२

मासद्वयावधिं कृत्वा स्मारयित्वाऽऽत्मपौरुषम्।
अपयातं रावणं धिक्कुर्वन्तं नौमि मारुतिम्।। २३

कुलं वीर्यं प्रेम गत्यन्तराभावं विवृण्वतीः।
राक्षसीर्दुर्मुखीमुख्याः जिघत्सुं नौमि मारुतिम्॥ २४

क्रुद्धाभिर्भर्त्स्यमानां तां आत्मानमनुशोचतीम्।
देवीं विलोक्य रुदतीं खिद्यन्तं नौमि मारुतिम्॥ २५

पुनर्निर्भर्त्सन परास्वासु वेणीस्पृगङ्गुलिम्।
मानुष्यगर्हिणीं देवीं पश्यन्तं नौमि मारुतिम्॥ २६

विलपन्तीं जनस्थानाहरणाद्यनुचिन्तनैः।
प्राणत्यागपरां सीतां दृष्ट्वाऽऽर्तं नौमि मारुतिम्॥ २७

त्रिजटास्वप्नसंहृष्टां रक्षःस्त्रीभ्योऽभयप्रदाम्।
अस्वस्थहृदयां देवीं पश्यन्तं नौमि मारुतिम्॥ २८

अचिरादात्मनिर्यातिमदृष्ट्वोद्बन्धनोद्यताम्।
सीतां दृष्ट्वा शिंशपाध उद्विग्नं नौमि मारुतिम्॥ २९

वामाक्ष्यूरुभुजस्पन्दैः निमित्तैर्मुदितां शनैः।
सीतां शान्तज्वरां दृष्ट्वा प्रहृष्टं नौमि मारुतिम्॥ ३०

दृष्टाऽत्रेयं कथं सान्त्व्योपेयाऽऽवेद्या न वेद्म्यहम्।
इति रामकथाख्यानप्रवृत्तं नौमि मारुतिम्॥ ३१

सुप्ते रक्षिगणे श्रुत्वा शुभां रामकथां द्रुमम्।
उत्पश्यन्तीं जनकजां पश्यन्तं नौमि मारुतिम्॥ ३२

स्वप्ने कपिर्दुर्निमित्तं, श्रुता रामकथा शुभा।
देवीं द्वेधा विमुह्यन्तीं पश्यन्तं नौमि मारुतिम्॥ ३३

का त्वं वसिष्ठ चन्द्रात्रि पत्नीष्विति वितर्कितैः।
सीतामौनमपास्यन्तं प्रणतं नौमि मारुतिम्॥ ३४

रामदूतोऽस्मि मा भैषीः श्रद्धत्स्व प्रतिनेष्यसे।
विशङ्कां सन्त्यजेत्येवं वदन्तं नौमि मारुतिम्॥ ३५

सुग्रीवसख्यं भूषाद्यावेदनं वालिनो वधम्।
तीर्त्वाब्धिं दर्शनं देव्या आख्यान्तं नौमि मारुतिम्।। ३६

अभिज्ञानेन सुग्रीवोद्योगेन विरहाधिना।
सुखिनीं दुःखिनीं देवीं पश्यन्तं नौमि मारुतिम्।। ३७

मानिनीं दृढविस्रंभां राघवोद्योगकाङ्क्षिणीम्।
रक्षो जित्वैव नेयां तां नमन्तं नौमि मारुतिम्।। ३८

काकोदन्तं रामगुणान् देवृभक्तिं शिरोमणिम्।
अभिज्ञानतया दात्रीं ध्यायन्तं नौमि मारुतिम्।। ३९

मणौ प्रतीतां उत्साहोद्योजनप्रार्थिनीं सतीम्।
आश्वसयन्तमुचितैर्हेतुभिः नौमि मारुतिम्।। ४०

पुनस्तदेवाभिज्ञानं स्मारयन्त्या कृताशिषम्।
मैथिल्या मनसा राममासन्नं नौमि मारुतिम्।। ४१

दृष्ट्वा सीतां ध्रुवे जन्ये ज्ञातुं रक्षोबलं वनम्।
विनाश्य तोरणासीनं युयुत्सुं नौमि मारुतिम्।। ४२

राक्षसीज्ञातवृत्तान्त रावणप्रेषितान् क्षणात्।
निघ्नन्तं किङ्करानेकं जयिष्णुं नौमि मारुतिम्।। ४३

जयत्यतिबल इति गर्जन्तं पादपाग्निना।
दग्ध्वा चैत्यं पुनः सङ्ग्रामोत्सुकं नौमि मारुतिम्।। ४४

परिघीकृत्य सालद्रुं प्रहस्तसुतमारणम्।
दशग्रीवबलेयत्ता जिज्ञासुं नौमि मारुतिम्।। ४५

सप्तामात्यसुतान् आत्मनिनदैर्गतजीवितान्।
कृत्वा पुनस्तोरणाग्रे लसन्तं नौमि मारुतिम्।। ४६

उद्विग्नरावणाज्ञप्त पृतनापति पञ्चकम्।
प्रापय्य पञ्चतां तोरणाग्रस्थं नौमि मारुतिम्।। ४७

अक्षं राजात्मजं वीरं दर्शनीयपराक्रमम्।
हत्वा नियुद्धे तिष्ठन्तं तोरणे नौमि मारुतिम्॥ ४८

नीतमिन्द्रजिताऽस्त्रेण ब्राह्मेण क्षणरोधिना।
सभास्थरावणोदीक्षा विस्मितं नौमि मारुतिम्॥ ४९

दशास्यं मन्त्रिसंवीतं वरोदीर्णं महाद्युतिम्।
अनादृत्याहवक्रान्तिं पश्यन्तं नौमि मारुतिम्॥ ५०

कोऽसि कस्यासि केनात्रागतो भग्नं वनं कुतः।
प्रहस्तस्योत्तरं दातुमुद्युक्तं नौमि मारुतिम्॥ ५१

सुग्रीवसचिवं रामदूतं सीतोपलब्धये।
प्राप्तमुक्त्वा तद्धितोक्तिनिरतं नौमि मारुतिम्॥ ५२

भ्रातृसान्त्वित पौलस्त्यादिष्ट वालाग्नि योजनम्।
कर्तव्यचिन्ताऽतिव्यग्रं उदीर्णं नौमि मारुतिम्॥ ५३

वालदाहभिया सीताप्रार्थनाशीतलानलम्।
प्रीणयन्तं पुरीदाहाद् भीषणं नौमि मारुतिम्॥ ५४

अवध्य इति वालाग्रन्यस्ताग्निं नगरीं क्षणात्।
दहन्तं सिद्धगन्धर्वैः स्तुतं तं नौमि मारुतिम्॥ ५५

लब्धा सीता, रिपुर्ज्ञातः, बलं दृष्टं, वृथाऽखिलम्।
सीताऽपि मौढ्याद् दग्धेति सीदन्तं नौमि मारुतिम्॥ ५६

आपृच्छ्य मैथिलीं रामदर्शनत्वरयाऽचलात्।
त्रिकूटादुत्पतन्तं तं कृतार्थं नौमि मारुतिम्॥ ५७

सोपायनैरङ्गदाद्यैः उन्नदद्भिरुपास्थितम्।
दृष्टा सीतेत्युदीर्याथ व्याख्यान्तं नौमि मारुतिम्॥ ५८

तीर्त्वाऽन्विष्योपलभ्याश्वास्य च भंक्त्वोपदिश्य च।
दग्ध्वा दृष्ट्वाऽऽगतोऽस्मीति ब्रुवन्तं नौमि मारुतिम्॥ ५९

दृष्ट्वा सीतां रामनाम श्रावयित्वा समागतः।
ब्रूत कर्तव्यमित्येतान् पृच्छन्तं नौमि मारुतिम्॥ ६०

न वयं, कपिराडत्र प्रमाणं प्रतियाम तम्।
कुर्मस्तदादिष्टमिति प्रत्युक्तं नौमि मारुतिम्॥ ६१

मध्येमार्गं मधुवने निपीय मधु पुष्कलम्।
नदद्भिर्वानरैः साकं क्रीडन्तं नौमि मारुतिम्॥ ६२

माद्यन्मृत्यत्कपिवृतं ध्वस्ते मधुवने क्षणात्।
अभियुक्तं दधिमुखेनाव्यग्रं नौमि मारुतिम्॥ ६३

सीतां दृष्टां मधुवनध्वंसाद् विज्ञाय तुष्यता।
दिदृक्षितं कपीशेनात्यादरान्नौमि मारुतिम्॥ ६४

निशम्य सुग्रीवादेशं त्वरितैः सखिभिर्वृतम्।
सुग्रीवेणादराद्दृष्टं महितं नौमि मारुतिम्॥ ६५

नियतामक्षतां सीतां अभिज्ञानं मणिं च तम्।
निवेद्य प्राञ्जलिं प्रह्वं कृतार्थं नौमि मारुतिम्॥ ६६

दृष्ट्वा चूडामणिं साश्रु स्मृत्वा तातविदेहयोः।
रामेण वृत्तविस्तारे चोदितं नौमि मारुतिम्॥ ६७

विस्रम्भं तर्जनं शोकावेगं च समयावधिम्।
सन्देशमुक्त्वा कर्तव्योद्योजकं नौमि मारुतिम्॥ ६८

त्वच्चित्ता त्वयि विस्रब्धा विजित्य रिपुमञ्जसा।
प्रत्यादेयेति विनयाद्वदन्तं नौमि मारुतिम्॥ ६९

स्निग्धरामपरीम्भमुग्धस्मेरमुखाम्बुजम्।
हृदयासीनवैदेहीराघवं नौमि मारुतिम्॥ ७०

पुराणागमादिगतानि

# कवचरक्षादिस्तोत्राणि

## अपामार्जनस्तोत्रम्

श्रीवासुदेवाय नमः

दाल्भ्य उवाच

भगवन्प्राणिनः सर्वे विषरोगाद्युपद्रवैः ।
दुष्टग्रहोपघातैश्च सर्वकालमुपद्रुताः ।। १

आभिचारिककृत्याभिः स्पर्शरोगैश्च दारुणैः ।
सदा संपीड्यमानास्ते तिष्ठन्ति मुनिसत्तम ।। २

येन कर्मविपाकेन ग्रहरोगाद्युपद्रवाः ।
न भवन्ति नृणां तन्मे यथावद्वक्तुमर्हसि ।। ३

पुलस्त्य उवाच

जनार्दनं भूतपतिं जगद्गुरुं स्मरन्मनुष्यः सततं महामुने ।
दुष्टान्यशेषाण्यपहन्ति सद्यो निःशेषकार्याणि च साधु साधयेत् ।।

व्रतोपवासैर्यैर्विष्णुर्नान्यजन्मनि तोषितः ।
ते नरा मुनिशार्दूल ग्रहरोगादिभागिनः ।। ५

यैर्न तत्प्रवणं चित्तं सर्वदैव नरैः कृतम् ।
विषग्रहज्वराणां ते मनुष्या दाल्भ्य भागिनः ।। ६

आरोग्यं परमामृद्धिं मनसा यद्यदिच्छति ।
तत्तदाप्नोत्यसंदिग्धं परत्राच्युततोषकृत् ।। ७

नाधीन्प्राप्नोति न व्याधीन्न विषग्रहबन्धनम्।
कृत्यास्पर्शभयं वाऽपि तोषिते मधुसूदने ।। ८

सर्वदुष्टशमस्तस्य सौम्यास्तस्य सदा ग्रहाः ।
देवानामप्यधृष्योऽसौ तुष्टो यस्य जनार्दनः ।। ९

यः समः सर्वभूतेषु यथात्मनि तथा परे।
उपवासादिना येन तोषितो मधुसूदनः ।। १०

तोषिते तत्र जायन्ते नराः पूर्णमनोरथाः ।
अरोगाः सुखिनो भोगान् भोक्तारो मुनिसत्तम ।। ११

न तेषां शत्रवो नैव स्पर्शरोगाभिचारिकम्।
ग्रहरोगादिकं वाऽपि पापकार्यं न जायते ।। १२

अव्याहतानि कृष्णस्य चक्रादीन्यायुधानि तु।
रक्षन्ति सकलापद्भ्यो येन विष्णुरुपासितः ।। १३

दाल्भ्य उवाच

अनाराधितगोविन्दा ये नरा दुःखभागिनः ।
तेषां दुःखाभिभूतानां यत्कर्तव्यं दयालुभिः ।। १४

पश्यद्भिः सर्वभूतस्थं वासुदेवं महामुने।
समदृष्ट्या हृषीकेशं तन्मम ब्रूह्यशेषतः ।। १५

पुलस्त्य उवाच

तद्वक्ष्यामि मुनिश्रेष्ठ समाहितमनाः शृणु।
रागदोषहरं नृणां गुरुपापप्रणाशनम्।। १६

सौवर्णं राजतं ताम्रं मृन्मयं वा नवं दृढम्।
अव्रणं कलशं शुद्धं स्थापयेत्तन्दुलोपरि।। १७

तत्रोदकं समानीय शुद्धं निर्मलमेव च ।
शतमेकं कुशान् साग्रान्स्थापयेत्कलशोपरि ।। १८

पूजयेत्तत्र कलशमुपचारैः समन्त्रकैः ।
विरिञ्चिना सहोत्पन्न परमेष्ठीनिसर्गज ।। १९

नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव ।
कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।। २०

कुशाग्रे शंकरं विद्यात्त्रयो देवाः कुशे स्थिताः ।
गृहीत्वैतान्समूलाग्रान् कुशान्शुद्धानुपस्पृशेत् ।। २१

मार्जयेत्सर्वगात्राणि कुशाग्रैर्दाल्भ्य शान्तिकृत् ।
शरीरे यस्य तिष्ठन्ति कुशोत्था जलबिन्दवः ।
नश्यन्ति तस्य पापानि गरुडेनेव पन्नगाः ।। २२

विष्णुभक्तो विशेषेण शुचिस्तद्गतमानसः ।
रोगग्रहविषार्तानां कुर्याच्छान्तिमिमां शुभाम् ।। २३

वाराहं नारसिंहं च वामनं विष्णुमेव च ।
ध्यात्वा समाहितो भूत्वा दिक्षु नामानि विन्यसेत् ।। २४

नारसिंहं समभ्यर्च्य शुचौ देशे कुशासने ।
मन्त्रैरेतैर्यथालिङ्गं कुर्याद्दिग्बन्धमादितः ।। २५

पूर्वे नारायणः पातु वारिजाक्षस्तु दक्षिणे ।
प्रद्युम्नः पश्चिमे पातु वामदेवस्तथोत्तरे ।। २६

ईशान्यां वामनः पातु ह्याग्नेय्यां तु जनार्दनः ।
नैर्ऋत्यां पद्मनाभस्तु वायव्यां मधुसूदनः ।। २७

ऊर्ध्वं गोवर्धनधरो ह्यधरायां त्रिविक्रमः ।
एताभ्यो दशदिग्भ्यस्तु सर्वतः पातु केशवः ।। २८

जले रक्षतु वाराहः स्थले रक्षतु वामनः।
अटव्यां नारसिंहश्च सर्वतः पातु केशवः ॥ २९

एवं कृत्वा तु दिग्बन्धं विष्णुं सर्वत्र संस्मरेत्।
आत्मनश्च परस्यापि विधिरेष उदाहृतः ॥ ३०

अन्यग्रचित्तः कुर्वीत न्यासकर्म यथाविधि।
एतत्समस्तं विन्यस्य पश्चान्मन्त्रं प्रयोजयेत्॥ ३१

करन्यासं पुरा कृत्वा ततोऽङ्गन्यासमारभेत्।
अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महीधरम्॥ ३२

मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम्।
कनिष्ठिक्यां न्यसेद्विष्णुं करमध्ये तु माधवम्॥ ३३

हृन्मध्ये चिन्तयेद्देवं परमात्मानमीश्वरम्।
नृसिंहं मणिबन्धे च करपृष्ठे जनार्दनम्॥ ३४

कृते च वैष्णवे न्यासे सर्वपापैः प्रमुच्यते।
एवं कृत्वा करन्यासं सर्वं तस्याक्षयं भवेत्।
एवं न्यासं करे कृत्वा पश्चादङ्गेषु विन्यसेत्॥ ३५

शिखायां केशवं न्यस्य मूर्ध्नि नारायणं न्यसेत्।
मालाधरं ललाटे च गोविन्दं तु भ्रुवोर्न्यसेत्॥ ३६

चक्षुर्मध्ये न्यसेद्विष्णुं श्रोत्रयोर्मधुसूदनम्।
त्रिविक्रमं कपोले तु वामनं कर्णमूलयोः ॥ ३७

नासारन्ध्रद्वये चैव श्रीधरं कल्पयेद्बुधः।
उत्तरोष्ठे हृषीकेशं पद्मनाभं तथाऽधरे॥ ३८

दामोदरं दन्तपङ्क्तौ वाराहं चिबुके तथा।
जिह्वायां वासुदेवं च तालौ च गरुडध्वजम्॥ ३९

वैकुण्ठं कण्ठदेशे च अनन्तं नासिकोपरि।
दक्षिणे च भुजे विप्र विन्यसेत् पुरुषोत्तमम्॥ ४०

वामे भुजे महाभागं राघवं हृदि विन्यसेत्।
कुक्ष्योः पृथ्वीधरं चैव पार्श्वयोरमितौजसम्॥ ४१

स्तनयोः पीतवसनं हरिं नाभ्यां तु विन्यसेत्।
करे तु दक्षिणे विप्र ततः संकर्षणं न्यसेत्॥ ४२

वामे रिपुहरं विद्यात्कटिमध्येऽपराजितम्।
पृष्ठे क्षितिधरं विद्यादच्युतं स्कन्धयोर्द्वयोः॥ ४३

वक्षःस्थले माधवं च कक्षयोर्योगशायिनम्।
वामकुक्षौ माधवं च दक्षिणे जलशायिनम्॥ ४४

योगीशं दक्षिणे पार्श्वे वामपार्श्वे श्रियः पतिम्।
आन्त्रेषु वासुदेवं च गुदमध्येऽव्ययं न्यसेत्॥ ४५

स्वयंभुवं मेढ्रमध्ये ऊर्वोश्चैव गदाधरम्।
जानुमध्ये चक्रधरं जङ्घयोरच्युतं न्यसेत्॥ ४६

पादयोः पुष्कराक्षं च सर्वतो विश्वरूपिणम्।
गुल्फयोर्नारसिंहं च पादपृष्ठेऽमितौजसम्।
अङ्गुल्यां श्रीधरं विद्यात् पद्माक्षं सर्वसन्धिषु॥ ४७

नखेषु घननीलाङ्गं न्यसेत्पादतलेऽच्युतम्।
रोमकूपे गुडाकेशं कृष्णं रक्तास्थिमज्जसु॥ ४८

मनोबुद्ध्योरहंकारं चित्ते न्यस्य जनार्दनम्।
पादमूले तु देवस्य शङ्खं विन्यस्य निर्मलम्॥ ४९

वनमालां हृदि न्यस्य सर्वदेवाभिपूजिताम्।
गदां वक्षःस्थले न्यस्य चक्रं चैव तु पृष्ठतः॥ ५०

श्रीवत्साङ्कं न्यसेन्मूर्ध्नि पङ्कजं कवचे न्यसेत्।
आपादमस्तकं चैव विन्यसेत्पुरुषोत्तमम्॥ ५१

विष्णुरूर्ध्वमधो रक्षेद्वैकुण्ठो विदिशो दिशः।
पातु मां सर्वतो रामो धन्वी चक्री च केशवः॥ ५२

वराहध्यानम्

अथ ध्यानं प्रवक्ष्यामि शृणु पापप्रणाशनम्।
वराहरूपिणं देवं संस्मरन्नर्चयञ्जपेत्॥ ५३

बृहत्तनुं बृहद्गात्रं बृहद्दंष्ट्रं सुशोभनम्।
समस्तवेदवेदाङ्गैर्युक्ताङ्गं भूषणैर्युतम्॥ ५४

उद्धृत्य भूमिं शिरसा मूर्ध्नि जिघ्रन्तमच्युतम्।
उद्धृत्य भूमिं पाताले हस्ताभ्यामुपगृह्य ताम्॥ ५५

आलिङ्ग्य भूमिं शिरसा मूर्ध्नि जिघ्रन्तमच्युतम्।
रत्नवैडूर्यमुक्तादिभूषणैरुपशोभितम्॥ ५६

पीताम्बरधरं देवं शुक्लमाल्यानुलेपनम्।
त्रयस्त्रिंशत्कोटिदेवैः स्तूयमानं दिवानिशम्॥ ५७

नृत्यद्भिरप्सरोभिश्च गीयमानं च किन्नरैः।
इत्थं ध्यात्वा तथाऽऽत्मानं जपेन्नित्यमतन्द्रितः॥ ५८

नृसिंह ध्यानम्

सुवर्णमण्डपान्तःस्थं पद्मं ध्यायेत्सकेशरम्।
सकर्णिकैर्दलैश्चैव ह्यष्टभिः परिशोभितम्॥ ५९

कलङ्करहितं देवं पूर्णचन्द्राम्बुजप्रभम्।
तडित्समजटाशोभिकण्ठनालेन शोभितम्॥ ६०

श्रीवत्साङ्कितवक्षस्कं तीक्ष्णदंष्ट्रं सुलोचनम्।
वनमाला विशोभाढ्यं मुक्ताहारोपशोभितम्।। ६१

सपङ्कजं चतुर्हस्तं सुप्रख्यातं सुशोभनम्।
प्रातःसूर्यसमाभ्यां वै कुण्डलाभ्यां विराजितम्।। ६२

जानूपरिन्यस्तकरद्वन्द्वरत्ननखाङ्कितम्।
जङ्घाभरणसंस्पर्धि शुभालंकरणं त्विषः।। ६३

चतुर्थीचन्द्रसंकाशं सुदंष्ट्रमुखपङ्कजम्।
अतिरक्तोष्ठवदनं व्यक्तं समतिभीषणम्।। ६४

वामाङ्कस्थश्रिया युक्तं शान्तिदां तुङ्गरोहिणीम्।। ६५

अर्हणां रक्तपादां च सुभासां शुभलक्षणाम्।
सुभ्रूं सुकेशीं सुश्रोणीं सुभुजां सुप्रभाननाम्।। ६६

सुप्रतिष्ठां च सुदतीं चतुर्हस्तां विचिन्तयेत्।
दुकूलां चैव चार्वङ्गीं हरिणीं सर्वकामदाम्।। ६७

तप्तकाञ्चनसंकाशां सर्वाभरणभूषिताम्।
सुवर्णकलशप्रख्यपीनोन्नतपयोधराम्।। ६८

गृहीतमातुलुङ्गाभ्यामुद्बाहुभ्यामथान्ययोः।
गृहीतपद्मयुगलां जाम्बूनदकरां तथा।। ६९

एवं देवीं नृसिंहस्य वामाङ्कोपरि संस्मरेत्।। ७०

वामन ध्यानम्।

अतिसुविमलगात्रं रुक्मपात्रस्थमन्नं
सुललितदधिखण्डं पाणिना दक्षिणेन।
कलशममृतपूर्णं वामहस्ते दधानं
तरति सकलदुःखं वामनं भावयेद्यः।। ७१

अजिनदण्डकमण्डलुमेखलारुचिरपावनवामनमूर्तये।
इति जगत्रितयाय जितारये निगमवाक्पटवे वटवे नमः।।७२

शान्तं पद्मासनस्थं सकलशशिनिभं श्रीपतिं कोमलाङ्गं
हस्ते पीयूषकुम्भं दधियुतकलशं पद्महस्तं तथाऽन्यैः।
पीतं वस्त्रं दधानं कटकमुकुटके हारकेयूरमालां
नानालंकारयुक्तं स्फटिकमणिनिभं वामनं नौमि दान्तम्।।

अभ्रश्यामः शुभ्रयज्ञोपवीती लसत्कौपीनो जातकृष्णाजिनश्रीः।
छत्री दण्डी पुण्डरीकायताक्षः पायान्मायावामनो ब्रह्मचारी।। ७४

क्षीरसागरकल्लोलसीकरौघविभूषितम्।
मणिमुक्तामये रम्ये सैकते संस्थितं शुभम्।। ७५

शुभ्रमेघविनिर्मुक्तं सुधासिक्तं सुसुन्दरम्।
एवं वामनमात्मानं ध्यात्वाऽपामार्जनं जपेत्।। ७६

ओं नमः परमार्थाय पुरुषाय महात्मने।
अरूपबहुरूपाय व्यापिने परमात्मने।। ७७

निष्कल्मषाय शुद्धाय ध्यातृपापहराय च।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वच।। ७८

वराहाय नृसिंहाय वामनाय महात्मने।
नमः कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः।। ७९

चिकित्सानन्तरूपाय योगिने परमात्मने।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः।। ८०

नारायणाय विश्वाय विश्वेशायेश्वराय च।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः।। ८१

गोविन्दपद्मनाभाय वासुदेवाय शार्ङ्गिणे।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८२

दामोदराय देवाय अनन्ताय महात्मने।
नमस्कृत्व प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८३

विष्टरश्रवसे तस्मै क्षीराम्भोनिधिशायिने।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८४

भक्तिप्रियाय देवाय विष्वक्सेनाय शार्ङ्गिणे।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८५

कृष्णाय वासुदेवाय हरये परमात्मने।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८६

हिरण्यगर्भपतये हिरण्यकशिपुच्छिदे।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८७

चक्रहस्ताय शूराय ताक्ष्यपत्राय धीमते।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८८

अधोक्षजाय भद्राय श्रीधरायात्ममूर्तये।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ८९

त्रिविक्रमाय रामाय वैकुण्ठाय नराय च।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ९०

सच्चिदानन्दरूपाय योगिने परमात्मने।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ९१

योगेश्वराय गुह्याय गूढाय परमात्मने।
नमस्कृत्वा प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ।। ९२

वाराहेश नृसिंहेश वामनेश त्रिविक्रम।
हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ।। ९३

अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः ।
अखण्डितप्रभावैस्त्वं सर्वदुःखहरो भव ॥ ९४

हरामुकस्य दुरितं दुष्कृतं दुरुपासितम् ।
मृत्युबाधार्तिभयदं दुरिष्टस्य च यत्फलम् ॥ ९५

परापध्यानसंस्थानप्रयुक्तं चाभिचारिकम् ।
गरस्पर्शमहायोगं प्रयोगं जरया जर ॥ ९६

हरये वासुदेवाय नमः कृष्णाय शार्ङ्गिणे ।
नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥ ९७

नमः कमलकिञ्जल्कपीतनिर्मलवाससे ।
महाहवरिपुस्कन्धधृष्टचक्राय चक्रिणे ॥ ९८

दंष्ट्रोद्धृतक्षितिभृते त्रिमूर्तिपतये नमः ।
महायज्ञवराहाय शेषभोगोरुशायिने ॥ ९९

तप्तहाटककेशान्त ज्वलत्पावकलोचन ।
वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥ १००

तीक्ष्णैर्नखाग्रैर्यदुरो विदार्य त्रातुं सुरान्दैत्यपतिं जघान ।
सुदर्शनं पद्मगदे च शङ्खं बिभ्रन्नृसिंहोऽस्तु ममाभयाय ॥ १०१

काश्यपायातिह्रस्वाय ऋग्यजुःसाममूर्तये ।
तुभ्यं वामनरूपाय क्रमते गां नमो नमः ॥ १०२

वराहाशेषदुष्टानि सर्वपापफलानि च ।
मर्द मर्द महादंष्ट्र मर्द मर्द महीधर ॥ १०३

नरसिंह करालास्यदन्तप्रान्तनखोज्ज्वल ।
भञ्ज भञ्ज निनादेन दुष्टान्यस्यार्तिनाशन ॥ १०४

ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् ।
प्रशमं सर्वदुःखानि नयत्वाशु जनार्दनः ॥ १०५

आद्यन्तवन्तः कवयः पुराणाः सूक्ष्मा बृहन्तोऽप्यनुशासितारः।
सर्वान् ज्वरान्घ्नन्तु ममानिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः ॥ १०६

त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः।
स मे प्रीतः सुखं दद्यात्सर्वामयपतिर्ज्वरः ॥ १०७

ज्वरध्यानम्।

ज्वरमन्त्रस्य कालाग्निर्ऋषिः महाज्वरो देवता गायत्री छन्दः
रोगप्रशमनार्थे जपे विनियोगः ॥ १०८

ओं भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि। तन्नो ज्वरः प्रचोदयात्।

अङ्गवङ्गकलिङ्गेषु हूणेषु मगधेषु च।
वाराणस्यां च यज्जातं तन्न स्मरसि रे ज्वर ॥ १०९

एकाहिकं द्व्याहिकं च तथा त्रिदिवसज्वरम्।
चातुर्थिकं तथात्युग्रं तथैव सततज्वरम् ॥ ११०

दोषोत्थं सन्निपातोत्थं तथैवागन्तुकज्वरम्।
शमं नयाशु गोविन्द छिन्धि छिन्ध्याशु वेदनाम् ॥ १११

नेत्रदुःखं शिरोदुःखं दुःखं चोदरसंभवम्।
अतिकासमतिश्वासमतितापं सवेपथुम् ॥ ११२

गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगं तथा क्षयम्।
कामलादींस्तथा रोगान्प्रमेहांश्चातिदारुणान् ॥ ११३

भगन्दरातिसारांश्च मुखरोगान् सत्वग्भवान्।
श्वित्रादीन्नखरोगांश्च त्वगस्थ्यन्तर्बहिःस्थितान् ॥ ११४

अश्मरीं मूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान्।
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥ ११५

कफोद्भवाश्च ये रोगा ये केचित्सान्निपातिकाः।
आगन्तुकाश्च ये रोगा लूताविस्फोटकादयः ॥ ११६

ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः ।
विलयं यान्तु सर्वे ते विष्णोरुच्चारणेन तु ॥ ११७

क्षयं गच्छन्तु शेषास्ते चक्रेणाभिहता हरेः ॥ ११८

अच्युतानन्तगोविन्दनामोच्चारणभेषजात् ।
नश्यन्तु सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ ११९

अच्युतेति मनः पूतमनन्तेति वचः पुनः ।
गोविन्देति तनुः पूता त्वज्ञातज्ञातपातकैः ॥ १२०

अच्युतानन्त गोविन्द परमानन्द माधव ।
ओं नमः संपुटीकृत्य जपन्नेवमधोक्षजम् ॥ १२१

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न देवः केशवात्परः ॥ १२२

स्थावरं जङ्गमं चैव कृत्रिमं चापि यद्विषम् ।
दन्तोद्भूतं नखोद्भूतमाकाशप्रभवं विषम् ॥ १२३

लूतादिप्रभवं चैव विषमत्यन्तदुःखदम् ।
शमं नयाशु तत्सर्वं कीर्तितोऽसि जनार्दन ॥ १२४

ग्रहान्प्रेतग्रहांश्चैव तथा वै डाकिनीग्रहान् ।
वेतालांश्च पिशाचांश्च गन्धर्वान् यक्षराक्षसान् ॥ १२५

शाकिनीपूतनादींश्च तथा वैनायकग्रहान् ।
मुखमण्डलिकान्क्रूरान् रेवतीं वृद्धरेवतीम् ॥ १२६

वृद्धिकाख्यांस्तथा चोग्रांस्तथा मातृग्रहानपि ।
बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ १२७

नरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने ।
सटाकरालवदनो नरसिंहो महाबलः ॥ १२८

ग्रहानशेषान्निःशेषान् करोतु जगतो हि सः ॥ १२९

नरसिंह महासिंह ज्वालामालोज्ज्वलानन ।
ग्रहानशेषान्निःशेषान् खाद खादाग्निलोचन ॥ १३०

ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः ।
यानि च क्रूरभूतानि ग्रहपीडाश्च दारुणाः ॥ १३१

व्याघ्रसिंहवराहेषु ग्रहभूतभयेषु च ।
शस्त्रक्षतेषु ये रोगा जालगर्दभकादयः ॥ १३२

यानि च क्रूरभूतानि प्राणिपीडाकराणि च ।
तानि सर्वाणि सर्वात्मन्परमात्मन् जनार्दन ॥ १३३

किंचिद्रूपं समाश्रित्य वासुदेवाशु नाशय ।
क्षिप्त्वा सुदर्शनं चक्रं ज्वालामालातिभीषणम् ॥ १३४

सर्वदुष्टप्रशमनं कुरु देववराच्युत ।
सुदर्शन महाज्वाल छिन्धि छिन्धि महायुध ॥ १३५

तीक्ष्णधार महावोग सूर्यकोटिसमप्रभ ।
त्रैलोक्यरक्षाकर्तस्त्वं दानवान्वयमर्दन ॥ १३६

ज्वलत्पावकसंकाश छिन्धि छिन्ध्याशु वेदनाम् ।
छिन्धि वातं च लूताश्च छिन्धि रोगं महद्विषम् ॥ १३७

छिन्धि छिन्धि महाव्याधीन् छिन्धि छिन्धि महाग्रहान् ।
रुजं दाहं च शूलं च निमिषजालगर्दभौ ॥ १३८

सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
हां हां हुं हुं फट्कारेण ठद्वयेन हन द्विषः ॥ १३९

सुदर्शनस्य मन्त्रेण ग्रहा यान्ति दिशो दश ॥ १४०

नमो भगवते भो भो सुदर्शन मम दुष्टं दारय दारय दुरितं हन हन पापं मथ मथ आरोग्यं कुरु हां हां हुं हुं कुरु फट् स्वाहा ॥

त्रैलोक्यरक्षाकर्तस्त्वमाज्ञापय जनार्दन ।
सर्वदुष्टानि रक्षांसि क्षपयारिविभीषण ॥ १४२

प्राच्यां रक्ष प्रतीच्यां च दक्षिणोत्तरतस्तथा ।
ईशान्यां च तथाऽऽग्नेय्यां नैर्ऋत्यां वायुदिश्यपि ॥ १४३

अधरायां तथोर्ध्वायां सदा रक्षां करोत्वसौ ।
रक्षां करोतु भगवान्नरसिंहः स्वगर्जितैः ॥ १४४

भुव्यन्तरिक्षे च तथा पृष्ठतः पार्श्वतोऽग्रतः ।
रक्षां करोतु भगवान्बहुरूपी जनार्दनः ॥ १४५

यथा यज्ञेश्वरो विष्णुर्वेदान्तेष्वपि गीयते ।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ १४६

परमात्मा यथा विष्णुर्वेदान्तष्वपि गीयते ।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ १४७

यथा विष्णुर्जगत्सर्वं सदेवासुरमानुषम् ।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ १४८

यथा विष्णौ स्मृते सद्यः संक्षयं याति पातकम् ।
तेन सत्येन सकलं यन्मयोक्तं तथास्तु तत् ॥ १४९

शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशाम्यतु ।
स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्तनात् ॥ १५०

यत एवागतं पापं तत्रैव प्रतिगच्छतु ।
यदस्य दुःखं तत्सर्वं शमं नयतु माधवः ॥ १५१

वासुदेवशरीरोत्थैः कुशैः संमार्जिता मया।
अपामार्जितगोविन्दो नरो नारायणो भवेत्॥ १५२

ममास्तु सर्वदुःखानां प्रशमो वचनाद्धरेः।
शान्ताः समस्तरोगास्ते ग्रहाः सर्वे विषादयः॥ १५३

भूतानि प्रशमं यान्तु स्मृते च मधुसूदने।
एतत्समस्तरोगेषु ग्रहभूतभयेषु च॥ १५४

अपामार्जनकं शस्त्रं विष्णोर्नामाभिमन्त्रितम्॥ १५५

एते कुशा विष्णुशरीरसंभवा जनार्दनाग्रे स्वयमेव चागताः।
हतो मया दुष्टमशेषमस्य स्वस्थो भवत्वेष यथा वचो हरेः॥

शान्तिरस्तु शिवं चास्तु दुष्टमस्य प्रशाम्यतु।
यदस्य दुरितं किंचित्तत्क्षिप्तं लवणार्णवे॥ १५७

स्वास्थ्यमस्य सदैवास्तु हृषीकेशस्य कीर्तनात्।
यत एवागतं पापं तत्रैव प्रतिगच्छतु॥ १५८

एतद्रोगादिपीडासु जन्तूनां हितकाम्यया।
विष्णुभक्तेन कर्तव्यमपामार्जनकं परम्॥ १५९

अनेन सर्वदुःखानि प्रशमं यान्त्यसंशयम्।
सर्वभूतहितार्थाय कुर्यात्तस्मात्सदैव हि॥ १६०

य इदं धारयेद्विद्वान् श्रद्धाभक्तिसमन्वितः।
ग्रहास्तं नोपसर्पन्ति न रोगा न च राक्षसाः॥ १६१

धन्यो यशस्वी शत्रुघ्नः स्तवोऽयं मुनिसत्तम।
पठतां शृण्वतां चैव ददाति परमां गतिम्॥ १६२

## अपामार्जनकवचम्

पूर्वे नारायणः पातु वारिजाक्षस्तु दक्षिणे।
प्रद्युम्नः पश्चिमे पातु वासुदेवस्तथोत्तरे।। १

ऐशान्यां रक्षताद्विष्णुराग्नेय्यां च जनार्दनः।
नैर्ऋत्यां पद्मनाभस्तु वायव्यां मधुसूदनः।। २

ऊर्ध्वं गोवर्धनोद्धर्ता ह्यधरायां त्रिविक्रमः।
एताभ्यो दशदिग्भ्यश्च सर्वतः पातु केशवः।। ३

एवं कृत्वा तु दिग्बंधं विष्णुं सर्वत्र संस्मरेत्।
अव्यग्रचित्तः कुर्वीत न्यासकर्म यथाविधि।। ४

अङ्गुष्ठा ग्रेतु गोविंदं तर्जन्यां तु महीधरम्।
मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम्।। ५

कनिष्ठायां न्यसेद्विष्णुं कर पृष्ठे तु वामनम्।
एवमेवाङ्गुलिन्यासः पश्चादङ्गेषु विन्यसेत्।। ६

शिखायां केशवं न्यस्य मूर्ध्नि नारायणं न्यसेत्।
माधवं च ललाटे तु गोविन्दं तु भ्रुवोर्न्यसेत्।। ७

चक्षुर्मध्ये न्यसेद्विष्णुं कर्णयोर्मधुसूदनम्।
त्रिविक्रमं कंठमूले वामनं तु कपोलयोः।। ८

नासारंध्रद्वये चापि श्रीधरं कल्पयेद्बुधः।
उत्तरोष्ठे हृषीकेशं पद्मनाभं तथाऽधरे।। ९

दामोदरं दन्तपंक्तौ वाराहं चुबुके तथा।
जिह्वायां वासुदेवं च ताल्वोश्चैव गदाधरम्।। १०

वैकुंठं करमध्ये तु अनन्तं नासिकोपरि।

वैकुंठं करमध्ये तु अनन्तं नासिकोपरि।
दक्षिणे तु भुजे विप्रो विन्यसेत्पुरुषोत्तमम्।। ११

वामे भुजे महायोगं राघवं हृदि विन्यसेत्।
कुक्षौ पृथ्वीधरं चैव पार्श्वयोः केशवं न्यसेत्।। १२

वक्षःस्थले माधवं च कक्षयोर्योगशायिनम्।
पीताम्बरं स्तनतटे हरिं नाभ्यां तु विन्यसेत्।। १३

दक्षिणे तु करे देवं ततस्संकर्षणं न्यसेत्।
वामे रिपुहरं विद्यात्कटिमध्ये जनार्दनम्।। १४

पृष्ठे क्षितिधरं विद्यादच्युतं स्कंधयोरपि।
वामुकुक्षौ वारिजाक्षं दक्षिणे जलशायिनम्।। १५

स्वयंभुवं मेढ्रमध्ये उर्वोश्चैव गदाधरम्।
जानुमध्ये चक्रधरं जङ्घयोरमृतं न्यसेत्।। १६

गुल्फयोर्नारसिंहं च पादयोरमितत्विषम्।
अङ्गुलीषु श्रीधरं च पद्माक्षं सर्वसंधिषु।। १७

नखेषु माधवं चैव न्यसेत्पादतलेऽच्युतम्।
रोमकूपे गुडाकेशं कृष्णं रक्तास्थिमज्जसु।। १८

मनोबुद्ध्योरहङ्कारे चित्ते न्यस्य जनार्दनम्।
अच्युतानन्तगोविन्दान्वातपित्तकफेषु च।। १९

एवं न्यासविधिं कृत्वा यत्कार्यं द्विज तच्छृणु।
पादमूले तु देवस्य शंखं चैव तु विन्यसेत्।। २०

वनमालां हृदि न्यस्य सर्वदेवाभिपूजिताम्।
गदां वक्षःस्थले न्यस्य चक्रं चैव तु पृष्ठतः।। २१

श्रीवत्समुरसि न्यस्य पश्चाङ्गं कवचं न्यसेत्।
आपादमस्तकं चैव विन्यसेत्पुरुषोत्तमम्॥ २२

एवं न्यासविधिं कृत्वा साक्षान्नारायणो भवेत्।
तनुर्विष्णुमयी तस्य यत्किंञ्चिन्न स भासते॥ २३

अपामार्जनको न्यासस्सर्वव्याधिविनाशनः।
आत्मनश्च परस्यापि विधिरेष सनातनः॥ २४

वैष्णवेन तु कर्तव्यस्सर्वसिद्धिप्रदायकः।
विष्णुस्तदूर्ध्वं रक्षेत्तु वैकुण्ठो विदिशो दिशः॥ २५

पातु मां सर्वतो रामो धन्वी चक्री च केशवः।
एतत्समस्तं विन्यस्य पश्चान्मन्त्रान्प्रयोजयेत्॥ २६

अथ मूलमन्त्रः

ओं नमो भगवते क्लेशापहर्त्रे नमः।

पूजाकाले तु देवस्य जपकाले तथैव च।
होमकाले च कर्तव्यं त्रिसंध्यासु च नित्यशः॥ २७

आयुरारोग्यमैश्वर्यं ज्ञानं वित्तं फलं लभेत्।
यद्यत्सुखतरं लोके तत्सर्वं प्राप्नुयान्नरः॥ २८

एवं भक्त्या समभ्यर्च्य हरिं सर्वार्थदायकम्।
अभयं सर्वभूतेभ्यो विष्णुलोकं स गच्छति॥ २९

श्रीविष्णुलोकं स गच्छत्यों नम इति॥

(श्रीविष्णुधर्मोत्तरपुराणे)

# अमृतसंजीवनस्तोत्रम्

अथापरमहं वक्ष्येऽमृतसंजीवनं स्तवम्।
यस्यानुष्ठानमात्रेण मृत्युर्दूरात्पलायते ।। १

असाध्याः कष्टसाध्याश्च महारोगा भयंकराः ।
शीघ्रं नश्यन्ति पठनादस्यायुश्च प्रवर्धते ।। २

शाकिनीडाकिनीदोषाः कुदृष्टिग्रहशत्रुजाः ।
प्रेतवेतालयक्षोत्था बाधा नश्यन्ति चाखिलाः ।। ३

दुरितानि समस्तानि नानाजन्मोद्भवानि च।
संसर्गजविकाराणि विलीयन्तेऽस्य पाठतः ।। ४

सर्वोपद्रवनाशाय सर्वबाधाप्रशान्तये।
आयुःप्रवृद्धये चैतत् स्तोत्रं परममद्भुतम्।। ५

बालग्रहाभिभूतानां बालानां सुखदायकम्।
सर्वारिष्टहरं चैतद्बलपुष्टिकरं परम्।। ६

बालानां जीवनायैतत् स्तोत्रं दिव्यं सुधोपमम्।
मृतवत्सत्वहरणं चिरंजीवित्वकारकम्।। ७

महारोगाभिभूतानां भयव्याकुलितात्मनाम्।
सर्वाधिव्याधिहरणं भयघ्नममृतोपमम्।। ८

अल्पमृत्युश्चापमृत्युः पाठादस्य प्रणश्यति।
जलाग्निविषशस्त्रारिनखिशृङ्गिभयं तथा।। ९

गर्भरक्षाकरं स्त्रीणां बालानां जीवनप्रदम्।
महारोगहरं नृणामल्पमृत्युहरं परम्।। १०

बाला वृद्धाश्च तरुणा नरा नार्यश्च दुःखिताः ।
भवन्ति सुखिनः पाठादस्य लोके चिरायुषः ।। ११

अस्मात्परतरं नास्ति जीवनोपाय ऐहिकः।
तस्मात्सर्वप्रयत्नेन पाठमस्य समाचरेत्॥ १२

अयुतावृत्तिकं वाथ सहस्रावृत्तिकं तथा।
तदर्धं वा तदर्धं वा पठेदेतच्च भक्तितः॥ १३

कलशे विष्णुमाराध्य दीपं प्रज्वाल्य यत्नतः।
सायं प्रातश्च विधिवत्स्तोत्रमेतत्पठेत्सुधीः॥ १४

सर्पिषा हविषा वाऽपि संयावेनाथ भक्तितः।
दशांशमानतो होमं कुर्यात्सर्वार्थसिद्धये॥ १५

नमो नमो विश्वविभावनाय नमो नमो लोकसुखप्रदाय।
नमो नमो विश्वसृजेश्वराय नमो नमो मुक्तिवरप्रदाय॥ १६

नमो नमस्तेऽखिललोकपाय नमो नमस्तेऽखिलकामदाय।
नमो नमस्तेऽखिलकारणाय नमो नमस्तेऽखिलरक्षकाय॥

नमो नमस्ते सकलार्तिहर्त्रे नमो नमस्ते विरुजप्रकर्त्रे।
नमो नमस्तेऽखिलविश्वधर्त्रे नमो नमस्तेऽखिललोकभर्त्रे॥

सृष्टं देव चराचरं जगदिदं ब्रह्मस्वरूपेण ते
सर्वं तत्परिपाल्यते जगदिदं विष्णुस्वरूपेण ते।
विश्वं संह्रियते तदेव निखिलं रुद्रस्वरूपेण ते
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय॥ १९

यो धन्वन्तरिसंज्ञया निगदितः क्षीराब्धितो निःसृतो
हस्ताभ्यां जनजीवनाय कलशं पीयूषपूर्णं दधत्।
आयुर्वेदमरीरचज्जनरुजां नाशाय स त्वं मुदा
संसिच्यामृतशीकरैर्हर महारिष्टं चिरं जीवय॥ २०

स्त्रीरूपं वरभूषणांबरधरं त्रैलोक्यसंमोहनं
कृत्वा पाययति स्म यः सुरगणान्पीयूषमत्युत्तमम्।
चक्रे दैत्यगणान्सुधाविरहितान् संमोह्य स त्वं मुदा
संसिच्यामृतशीकरैर्हर महारिष्टं चिरंजीवय ।। २१

चाक्षुषोदधिसंप्लावभूवेदप झषाकृते।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २२

पृष्ठमन्दरनिर्घूर्णनिद्राक्ष कमठाकृते।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २३

याच्ञाछलबलित्रासमुक्तनिर्जर वामन।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २४

धरोद्धारहिरण्याक्षघातक्रोडाकृते प्रभो।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २५

भक्तत्रासविनाशात्तचण्डत्व नृहरे विभो।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २६

क्षत्रियारण्यसंछेदकुठारकर रैणुक।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २७

रक्षोराजप्रतापाब्धिशोषणाशुग राघव।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २८

भूभारासुरसंदोहकालाग्ने रुक्मिणीपते।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। २९

वेदमार्गरतानर्हविभ्रान्त्यै बुद्धरूपधृक्।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। ३०

कलिवर्णाश्रमास्पष्टधर्मर्द्ध्यै कल्कि रूपभाक्।
सिञ्च सिञ्चामृतकणैश्चिरं जीवय जीवय ।। ३१

असाध्याः कष्टसाध्या ये महारोगा भयङ्कराः ।
छिन्धि तानाशु चक्रेण चिरं जीवय जीवय ।। ३२

अल्पमृत्युं चापमृत्युं महोत्पातानुपद्रवान् ।
भिन्धि भिन्धि गदाघातैश्चिरं जीवय जीवय ।। ३३

अहं न जाने किमपि त्वदन्यत्समाश्रये नाथ पदाम्बुजं ते ।
कुरुष्व तद्यन्मनसीप्सितं ते सुकर्मणा केन समक्षमीयाम् ।।३४

त्वमेव तातो जननी त्वमेव त्वमेव नाथश्च त्वमेव बन्धुः ।
विद्याधनागारकुलं त्वमेव त्वमेव सर्वं मम देवदेव ।। ३५

न मेऽपराधं प्रविलोकय प्रभोऽपराधसिन्धोश्च दयानिधिस्त्वम् ।
तातेन दुष्टोऽपि सुतः सुरक्ष्यते दयालुता तेऽवतु सर्वदाऽस्मान् ।।

अहह विस्मर नाथ न मां सदा करुणया निजया परिपूरितः ।
भुवि भवान् यदि मे नहि रक्षकः कथमहो मम जीवनमत्र वै ।। ३७

दह दह कृपया त्वं व्याधिजालं विशालं
हर हर करवालं चाल्पमृत्योः करालम् ।
निजजनपरिपालं त्वां भजे भावयालं
कुरु कुरु बहुकालं जीवितं मे सदाऽलम् ।। ३८

न यत्र धर्माचरणं न दानं व्रतं न यागो न च विष्णुचर्चा ।
न पितृगोविप्रवरामरार्चा स्वल्पायुषस्तत्र जना भवन्ति ।। ३९

क्लीं श्रीं क्लीं श्रीं नमो भगवते जनार्दनाय सकलदुरितानि नाशय नाशय क्ष्रौं आमारोग्यं कुरु कुरु ह्रीं दीर्घमायुर्देहि देहि स्वाहा । अस्य धारणतो जापादल्पमृत्युः प्रशाम्यति ।
गर्भरक्षाकरं स्त्रीणां बालानां जीवनं परम् ।। ४०

शतं पञ्चाशतं शक्त्याऽथवा पञ्चाधिविंशतिम् ।
पुस्तकानां द्विजेभ्यस्तु दद्याद्दीर्घायुषाप्तये ।। ४१

भूर्जपत्रे विलिख्येदं कण्ठे वा बाहुमूलके।
संधारयेद्गर्भरक्षा बालरक्षा च जायते।। ४२

सर्वे रोगा विनश्यन्ति सर्वा बाधा प्रशाम्यति।
कुदृष्टिजं भयं नश्येत्तथा प्रेतादिजं भयम्।। ४३

मया कथितमेतत्तेऽमृतसंजीवनं परम्।
अल्पमृत्युहरं स्तोत्रं मृतवत्सत्वनाशनम्।। ४४

(सुदर्शनसंहितातः)

## आपदुद्धारकश्रीरामस्तोत्रम्

अस्य श्रीआपदुद्धारकस्तोत्रस्य वसिष्ठो भगवान् ऋषिः अनुष्टुप्छन्दः, श्रीरामचन्द्रो देवता, श्रीं बीजं, रां शक्तिः मं कीलकं ममापदुद्धारकश्रीरामचन्द्रप्रसादसिद्ध्यर्थे जपे विनियोगः। आपदामपहर्तारं अङ्गुष्ठाभ्यां नमः। दातारं सर्वसम्पदां तर्जनीभ्यां नमः।लोकाभिरामं मध्यमाभ्यां नमः। श्रीरामम् अनामिकाभ्यां नमः। भूयो भूयः कनिष्ठिकाभ्यां नमः। नमाम्यहं करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। भूर्भुवस्स्वरोमिति दिग्बन्धः।

ध्यानम्।

आर्तानामार्तिहन्तारं भीतानां भयनाशनम्।
द्विषतां कालदण्डं च रामचन्द्रं नमाम्यहम्।। १

चापं दधानः स्तनयित्नुघोषं कर्षन्निषङ्गादिषुमार्तिनिघ्नम्।
आपत्सु भूयादभयप्रदो मे साकं सुमित्रातनयेन रामः।। २

मन्त्रः

आपदामपहर्तारं दातारं सर्वसम्पदाम्।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्।। ३ इति।

आपन्नजनरक्षैकदक्षायामिततेजसे।
नमोस्तु विष्णवे तुभ्यं रामायापन्निवारिणे* ॥ ४

पदाम्भोजरजःस्पर्शपवित्रमुनियोषिते।
नमोस्तु सीतापतये रामायापन्निवारिणे* ॥ ५

दानवेन्द्रमहामत्तगजपञ्चास्यरूपिणे।
नमोस्तु रघुनाथाय रामायापन्निवरिणे* ॥ ६

महीजाकुचसंलग्नकुङ्कुमारुणवक्षसे।
नमः कल्याणरूपाय रामायापन्निवारिणे* ॥ ७

पद्मसम्भवभूतेशमुनिसंस्तुतकीर्तये।
नमो मार्ताण्डवंश्याय रामायापन्निवारिणे* ॥ ८

हरत्यार्तिञ्च लोकानां यो वा मधुनिषूदनः।
नमोस्तु हरये तुभ्यं रामायापन्निवारिणे* ॥ ९

तापकारणसंसारगजसिंहस्वरूपिणे।
नमो वेदान्तवेद्याय रामायापन्निवारिणे* ॥ १०

रङ्गत्तरङ्गजलधिगर्वहृच्छरधारिणे।
नमः प्रतापरूपाय रामायापन्निवारिणे* ॥ ११

दारासहितचन्द्रावातंसध्यातस्वमूर्तये।
नमस्सत्त्वस्वरूपाय रामायापन्निवारिणे* ॥ १२

तारानायकसङ्काशवदनाय महौजसे।
नमोस्तु ताटकाहन्त्रे रामायापन्निवारिणे* ॥ १३

रम्यसानुलसच्चित्रकूटाश्रमविहारिणे।
नमस्सौमित्रिसेव्याय रामायापन्निवारिणे* ॥ १४

---

* ४ - ३७ पर्यन्तं प्रतिश्लोकान्ते आपदामपहर्तारं इति तृतीय श्लोकात्मको मन्त्र आवर्तनीयः।

सर्वदेवाहितासक्तदशाननविनाशिने।
नमः कलुषसंहर्त्रे रामायापन्निवारिणे* ॥ १५

रत्नसानुनिवासैकवन्द्यपादाम्बजाय च।
नमस्त्रैलोक्यनाथाय रामायापन्निवारिणे* ॥ १६

संसारबन्धमोक्षैकहेतुनामप्रकाशिने।
नमः कलुषसंहर्त्रे रामायापन्निवारिणे* ॥ १७

पवनाशुगसंक्षिप्तमारीचादिसुरारये।
नमो मखप्रतिष्ठात्रे रामायापन्निवारिणे* ॥ १८

दाम्भिकेतरभक्तौघमहदानन्ददायिने।
नमः कमलनेत्राय रामायापन्निवारिणे* ॥ १९

लोकत्रयोद्वेगकरकुम्भकर्णशिरश्छिदे।
नमो भीषणरूपाय रामायापन्निवारिणे* ॥ २०

काकासुरैकनयनहरल्लीलास्त्रधारिणे।
नमो भक्तैकवन्द्याय रामायापन्निवारिणे* ॥ २१

भिक्षुरूपसमाक्रान्तबलिवीर्यैकसम्पदे।
नमो वामनरूपाय रामायापन्निवारिणे* ॥ २२

राजीवनेत्रसुस्पन्दरुचिराङ्गसुरोचिषे।
नमः कैवल्यनिधये रामायापन्निवारिणे* ॥ २३

मन्दमारुतसंदीतमन्दारमृदु वाससे।
नमः पल्लवहस्ताय रामायापन्निवारिणे* ॥ २४

श्रीकण्ठचापदलनधुरीणबलबाहवे।
नमस्सीतानुषक्ताय रामायापन्निवारिणे* ॥ २५

राजराजसुहृद्योषार्चितमङ्गलमूर्तये।
नम इक्ष्वाकुवंश्याय रामायापन्निवारिणे* ॥ २६

मञ्जुलादर्पविषयोक्षणैकैकविलासिने।
नमः पोषितभक्ताय रामायापन्निवारिणे* ॥ २७

भूरिभूधरकोदण्डमूर्तिर्ज्ञेयस्वरूपिणे।
नमः प्रतापरूपाय रामायापन्निवारिणे* ॥ २८

योगीन्द्रहृत्सरोजातमधुपाय महात्मने।
नमो राजाधिराजाय रामायापन्निवारिणे* ॥ २९

भूवराहस्वरूपाय नमो भूरिप्रदायिने।
नमः कोमलदेहाय रामायापन्निवारिणे* ॥ ३०

योषाञ्जलिविनिर्मुक्तलाजार्चितवपुष्मते।
नमस्सौन्दर्यनिधये रामायापन्निवारिणे* ॥ ३१

नखकोटिविनिर्भिन्नदैत्याधिपतिवक्षसे।
नमो नृसिंहरूपाय रामायापन्निवारिणे* ॥ ३२

मायामानुषदेहाय वेदोद्धरणहेतवे।
नमोस्तु मत्स्यरूपाय रामायापन्निवारिणे* ॥ ३३

मितिशून्यमहादिव्यमहिम्ने मानितात्मने।
नमो ब्रह्मस्वरूपाय रामायापन्निवारिणे* ॥ ३४

अहङ्कारेतरजनस्वान्तसौधविहारिणे।
नमोऽस्तु चित्स्वरूपाय रामायापन्निवारिणे* ॥ ३५

सीतालक्ष्मणसंशोभिपार्श्वाय परमात्मने।
नमः पट्टाभिषिक्ताय रामायापन्निवारिणे* ॥ ३६

फलश्रुतिः

इमं स्तवं भगवतः पठेद्यः प्रीतिमानसः।
प्रभाते वा प्रदोषे वा रामस्य परमात्मनः ॥ ३७

स तु तीर्त्वा भवाम्भोधिमापदस्सकला अपि।
रामसायुज्यमाप्नोति देवदेवप्रसादतः ।। ३८

कारागृहादिबाधासु संप्राप्ते बहुसंकटे।
आपन्निवारकं स्तोत्रं पठेद्यस्तु यथाविधि ।। ३९

संयोज्यानुष्टुभं मंत्रं मनुश्लोकं स्मरन् विभुम्।
सप्ताहं सर्वबाधाभ्यो मुच्यते नात्र संशयः ।। ४०

द्वात्रिंशद्वारजपतः प्रत्यहं सुदृढव्रतः ।
वैशाखे भानुमालोक्य प्रत्यहं शतसंख्यया ।। ४१

धनेन धनदप्रख्यां लभते नात्र संशयः ।
बहुनात्र किमुक्तेन यं यं कामयते नरः ।। ४२

तं तं काममवाप्नोति स्तोत्रेणानेन मानवः ।
यन्त्रपूजाविधानेन जपहोमादितर्पणैः ।। ४३

यस्तु कुर्वीत सहसा सर्वान्कामानवाप्नुयात्।
इह लोके सुखी भूत्वा परे मुक्तो भविष्यति ।। ४४

आपदामपहर्तारं दातारं सर्वसंपदाम्।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।। ४५

(अगस्त्यसंहितातः)

*——*——*

## श्रीकृष्णमन्त्रकवचम् - १

शौनक उवाच

कं मन्त्रं बालकः प्राप कुमारेण च धीमता।
दत्तं परं श्रीहरेश्च तद्भवान् वक्तुमर्हति ।। १

सौतिरुवाच

कृष्णेन दत्तो गोलोके कृपया ब्रह्मणे पुरा।
द्वाविंशत्यक्षरो मन्त्रो वेदेषु च सुदुर्लभः ।। २

तं च ब्रह्मा ददौ भक्त्या कुमाराय च धीमते।
कुमारेण स दत्तश्च मन्त्रश्च शिशवे द्विज ।। ३

ओं श्रीं नमो भगवते रासमण्डलेश्वराय।
श्रीकृष्णाय स्वाहेति च मन्त्रोऽयं कल्पपादपः ।। ४

महापुरुषस्तोत्रं च पूर्वोक्तं कवचं च यत्।
अस्यौपयोगिकं ध्यानं सामवेदोक्तमेव च ।। ५

तेजोमण्डलरूपे च सूर्यकोटिसमप्रभे।
योगिभिर्वाञ्छितं ध्याने योगैः सिद्धगणैः सुरैः ।। ६

ध्यायन्ते वैष्णवा रूपं तदभ्यन्तरसंनिधौ।
अतीव कमनीयानिर्वचनीयं मनोहरम् ।। ७

नवनीलदलश्यामं शरत्पङ्कजलोचनम्।
शरत्पार्वणचन्द्रास्यं पक्वबिम्बाधिकाधरम् ।। ८

मुक्तापङ्क्तिविनिन्द्येकदन्तपङ्क्तिमनोहरम्।
सस्मितं मुरलीन्यस्तहस्तावलम्बनेन च ।। ९

कोटिकन्दर्पलावण्यलीलाधाम मनोहरम्।
चन्द्रलक्षप्रभाजुष्टं पुष्ट श्रीयुक्तविग्रहम् ।। १०

त्रिभङ्गभङ्गिमायुक्तं द्विभुजं पीतवाससम्।
रत्नकेयूरवलयरत्न नूपुरभूषितम् ।। ११

रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम्।
मयूरपिच्छचूडं च रत्नमालाविभूषितम् ।। १२

शोभितं जानुपर्यन्तं मालतीवनमालया।
चन्दनोक्षितसर्वाङ्गं भक्तानुग्रहकारकम्॥ १३

मणिनाकौस्तुभेन्द्रेण वक्षःस्थलसमुज्ज्वलम्।
वीक्षितं गोपिकाभिश्च शश्वद्वङ्किमलोचनैः॥ १४

स्थिरयौवनयुक्ताभिर्वेष्टिताभिश्च संततम्।
भूषणैर्भूषिताभिश्च राधावक्षःस्थलस्थितम्॥ १५

ब्रह्मविष्णुशिवाद्यैश्च पूजितं वन्दितं स्तुतम्।
किशोरं राधिकाकान्तं शान्तरूपं परात्परम्॥ १६

निर्लिप्तं साक्षिरूपं च निर्गुणं प्रकृतेः परम्।
ध्यायेत् सर्वेश्वरं तं च परमात्मानमीश्वरम्॥ १७

इदं ते कथितं ध्यानं स्तोत्रं च कवचं मुने।
मन्त्रौपयोगिकं सत्यं मन्त्रश्च कल्पपादपः॥ १८

## श्रीकृष्णमन्त्रकवचम् - २

ओं श्रीं नमः श्रीकृष्णाय परिपूर्णतमाय च।
स्वाहान्तो मन्त्रराजोऽयं महान् सप्तदशाक्षरः॥ १

सिद्धोऽयं पञ्चलक्षेण जपेन मुनिपुङ्गव।
तद्दशांशं च हवनं तद्दशांशाभिषेचनम्॥ २

तर्पणं तद्दशांशं च तद्दशांशं च मार्जनम्।
सुवर्णानां च शतकं पुरश्चरणदक्षिणा॥ ३

मन्त्रसिद्धस्य पुंसश्च विश्वं करतलं मुने।
शक्तः पातुं समुद्रांश्च विश्वं संहर्तुमीश्वरः॥ ४

पाञ्चभौतिकदेहेन वैकुण्ठं गन्तुमीश्वरः।
तस्य संस्पर्शमात्रेण पादपङ्कजरेणुना।
पूतानि सर्वतीर्थानि सद्यः पूता वसुन्धरा॥ ५

# श्रीगोपालकवचम्

श्रीमहादेव उवाच।

अथ वक्ष्यामि कवचं गोपालस्य जगद्गुरोः।
यस्य स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ।। १

शृणु देवि प्रवक्ष्यामि सावधानाऽवधारय।
नारदोऽस्य ऋषिर्देवि छन्दोऽनुष्टुबुदाहृतम् ।। २
देवता बालकृष्णश्च चतुर्वर्गप्रदायकः।

ओं अस्य श्रीगोपालकवचस्य नारद ऋषिः। अनुष्टुप् छन्दः श्रीबाल-कृष्णो देवता धर्मार्थकाममोक्षार्थे जपे विनियोगः।

शिरो मे बालकृष्णश्च पातु नित्यं मम श्रुती ।। ३

नारायणः पातु कण्ठं गोपीवन्द्यः कपोलकम्।
नासिके मधुहा पातु चक्षुषी नन्दनन्दनः ।। ४

जनार्दनः पातु दन्तानधरं माधवस्तथा।
ऊर्ध्वोष्ठं पातु वाराहश्चिबुकं केशिसूदनः ।। ५

हृदयं गोपिकानाथो नाभिं सेतुप्रदः सदा।
हस्तौ गोवर्धनधरः पादौ पीताम्बरोऽवतु ।। ६

करांगुलीः श्रीधरो मे पादांगुल्यः कृपामयः।
लिङ्गं पातु गदापाणिर्बालक्रीडामनोरमः ।। ७

जगन्नाथः पातु पूर्वं श्रीरामोऽवतु पश्चिमम्।
उत्तरं कैटभारिश्च दक्षिणं हनुमत्प्रभुः ।। ८

आग्नेय्यां पातु गोविन्दो नैर्ऋत्यां पातु केशवः ।
वायव्यां पातु दैत्यारिरैशान्यां गोपनन्दनः ।। ९

ऊर्ध्वं पातु प्रलम्बारिरधः कैटभमर्दनः ।
शयानं पातु पूतात्मा गतौ पातु श्रियः पतिः ।। १०

शेषः पातु निरालम्बे जाग्रद्भावे ह्यपाम्पतिः ।
भोजने केशिहा पातु कृष्णः सर्वाङ्गसन्धिषु ।। ११

गणनासु निशानाथो दिवानाथो दिनक्षये ।
इति ते कथितं दिव्यं कवचं परमाद्भुतम् ।। १२

यः पठेन्नित्यमेवेदं कवचं प्रयतो नरः ।
तस्याशु विपदो देवि नश्यन्ति रिपुसङ्कतः ।। १३

अन्ते गोपालचरणं प्राप्नोति परमेश्वरि ।
त्रिसन्ध्यमेकसन्ध्यं वा यः पठेच्छृणुयादपि ।
तत्सर्वदो रमानाथः परिपाति चतुर्भुजः ।। १४

(श्रीनारदपाञ्चरात्रतः)

*——*——*

## श्रीगोपालाक्षयकवचम्

(त्रैलोक्यविजयम्)

श्रीनारद उवाच

इन्द्राद्यमरवर्गेषु ब्रह्मन् यत्परमाद्भुतम् ।
अक्षयं कवचं नाम कथयस्व मम प्रभो ।। १

यद्धृत्वाऽऽकर्ण्य वीरस्तु त्रैलोक्यविजयी भवेत् ।
ब्रह्मोवाच
शृणु पुत्र मुनिश्रेष्ठ कवचं परमाद्भुतम् ।। २

इन्द्रादिदेववृन्दैश्च नारायणमुखाच्छ्रुतम् ।
त्रैलोक्यविजयस्यास्य कवचस्य प्रजापतिः ॥ ३

ऋषिश्छन्दो देवता च सदा नारायणः प्रभुः ।
अस्य श्रीत्रैलोक्यविजयाक्षयकवचस्य प्रजापतिः ऋषिः।
अनुष्टुप् छन्दः श्रीनारायणः परमात्मा देवता।

धर्मार्थकाममोक्षार्थे जपे विनियोगः ।
पादौ रक्षतु गोविन्दो जङ्घे पातु जगत्प्रभुः ॥ ४

ऊरु द्वौ केशवः पातु कटी दामोदरस्ततः ।
वदनं श्रीहरिः पातु नाभीदेशं च मेऽच्युतः ॥ ५

वामपार्श्वं तथा विष्णुर्दक्षिणं च सुदर्शनः ।
बाहुमूले वासुदेवो हृदयं च जनार्दनः ॥ ६

कण्ठं पातु वराहश्च कृष्णश्च मुखमण्डलम् ।
कर्णौ मे माधवः पातु हृषीकेशश्च नासिके ॥ ७

नेत्रे नारायणः पातु ललाटं गरुडध्वजः ।
कपोलं केशवः पातु चक्रपाणिः शिरस्तथा ॥ ८

प्रभाते माधवः पातु मध्याह्ने मधुसूदनः ।
दिनान्ते दैत्यनाशश्च रात्रौ रक्षतु चन्द्रमाः ॥ ९

पूर्वस्यां पुण्डरीकाक्षो वायव्यां च जनार्दनः ।
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम् ॥ १०

कवचं धारयेद्यस्तु साधको दक्षिणे भुजे ।
देवा मनुष्या गन्धर्वा यक्षास्तस्य हितावहाः ॥ ११

अपुत्रो लभते पुत्रं रोगनाशस्तथा भवेत् ।
सर्वतापप्रमुक्तश्च विष्णुलोकं स गच्छति ॥ १२

(श्रीब्रह्मसंहितायां)

# जगन्मङ्गलकवचम्

श्रीसनत्कुमार उवाच

ब्रूहि मे कवचं ब्रह्मन्! जगन्मङ्गल-मङ्गलम्।
पूज्यं पुण्यस्वरूपं च कृष्णस्य परमात्मनः॥ १

ब्रह्मोवाच

शृणु वक्ष्यामि विप्रेन्द्र! कवचं परमाद्भुतम्।
श्रीकृष्णेनैव कथितं मह्यं च कृपया पुरा॥ २

मया दत्तं च धर्माय तेन नारायणर्षये।
ऋषिणा तेन तद्दत्तं सुभद्राय महात्मने॥ ३

अतिगुह्यतमं शुद्धं परं स्नेहाद् वदाम्यहम्।
यद् धृत्वा पठनात् सिद्धाः सिद्ध्यादि प्राप्नुवन्ति च॥ ४

एवमिन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः।
ऋषिश्छन्दश्च सावित्री देवो नारायणः स्वयम्॥ ५

धर्मार्थ-काम मोक्षेषु विनियोगः प्रकीर्तितः।
ओं राधेशो मे शिरः पातु कण्ठं राधेश्वरः स्वयम्॥ ६

गोपीशश्चक्षुषी पातु तालुं च भगवान् स्वयम्।
गण्डयुग्मं च गोविन्दः कर्णयुग्मं च केशवः॥ ७

गलं गदाधरः पातु स्कन्धं कृष्णः स्वयंप्रभुः।
वक्षःस्थलं वासुदेवश्चोदरं चाऽपि सोऽच्युतः॥ ८

नाभिं पातु पद्मनाभः कङ्कालं कंससूदनः।
पुरुषोत्तमः पातु पृष्ठं नित्यानन्दो नितम्बकम्॥ ९

पुण्डरीकः पादयुग्मं हस्तयुग्मं हरिः स्वयम्।
नासां च नखरं पातु नरसिंहः स्वयंप्रभुः ॥ १०

सर्वेश्वरश्च सर्वाङ्गं सततं मधुसूदनः।
प्राच्यां पातु च रामश्च वह्नौ वंशीधरः स्वयम्॥ ११

पातु दामोदरो दक्षे नैर्ऋत्ये च नरोत्तमः।
पश्चिमे पुण्डरीकाक्षो वायव्यां वामनः स्वयम्॥ १२

अनन्तश्चोत्तरे पातु ऐशान्यामीश्वरः स्वयम्।
जले स्थले चान्तरिक्षे स्वप्ने जागरणे तथा॥ १३

पातु बृन्दावनेशश्च मां भक्तं शरणागतम्।
इति ते कथितं वत्स ! कवचं परमाद्भुतम्॥ १४

सुखदं मोक्षदं सारं सर्वसिद्धिप्रदं सताम्।
इदं कवचमिष्टं च पूजाकाले च यः पठेत्॥ १५

हरिदास्यमवाप्नोति गोलोके वासमुत्तमम्
इहैव हरिभक्तिं च जीवन्मुक्तो भवेन्नरः ॥ १६

(नारदपाञ्चरात्रतः)

## तुलसीकवचम्

अस्य श्रीतुलसीकवचस्तोत्रमंत्रस्य, श्रीमहादेव ऋषिः, अनुष्टुप्छंदः, श्रीतुलसी देवता, मनसीप्सितकामना-सिद्ध्यर्थं जपे विनियोगः ॥

तुलसि श्रीमहादेवि नमः पंकजधारिणि।
शिरो मे तुलसी पातु भालं पातु यशस्विनी॥ १

दृशौ मे पद्मनयना श्रीसखी श्रवणे मम।
घ्राणं पातु सुगंधा मे मुखं च सुमुखी मम ।। २

जिह्वां मे पातु शुभदा कंठं विद्यामयी मम।
स्कंधौ कह्लारिणी पातु हृदयं विष्णुवल्लभा ।। ३

मध्यं मे पुण्यदा पातु नाभिं सौभाग्यदायिनी।
कटिं कुंडलिनी पातु ऊरू नारदवंदिता ।। ४

जननी जानुनी पातु जंघे सकलवंदिता।
नारायणप्रिया पादौ सर्वांगं सर्वरक्षिणी ।। ५

संकटे विषमे दुर्गे भये वादे महाहवे।
नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा ।। ६

इतीदं परमं गुह्यं तुलस्याः कवचामृतम्।
मर्त्यानाममृतार्थाय भीतानामभयाय च ।। ७

मोक्षाय च मुमुक्षूणां ध्यायिनां ध्यानयोगकृत्।
वशाय वश्यकामानां विद्यायै वेदवादिनाम् ।। ८

द्रविणाय दरिद्राणां पापिनां पापशांतये ।। ९

अन्नाय क्षुधितानां च स्वर्गाय स्वर्गमिच्छताम्।
पशव्यं पशुकामानां पुत्रदं पुत्रकांक्षिणाम् ।। १०

राज्याय भ्रष्टराज्यानामशांतानां च शांतये।
भक्त्यर्थं विष्णुभक्तानां विष्णौ सर्वांतरात्मनि ।। ११

जाप्यं त्रिवर्गसिद्ध्यर्थं गृहस्थेन विशेषतः।
उद्यंतं चंडकिरणमुपस्थाय कृतांजलिः ।। १२

तुलसीकानने तिष्ठन्नासीनो वा जपेदिदम्।
सर्वान्कामानाप्नोति तथैव मम सन्निधिम्॥ १३

मम प्रियकरं नित्यं हरिभक्तिविवर्धनम्।
या स्यान्मृतप्रजा नारी तस्या अंगं प्रमार्जयेत्॥ १४

सा पुत्रं लभते दीर्घजीविनं चाप्यरोगिणम्।
वंध्याया मार्जयेदंगं कुशैर्मंत्रेण साधकः॥ १५

साच संवत्सरादेव गर्भं धत्ते मनोहरम्।
अश्वत्थे राजवश्यार्थी जपेत्प्रातः सरूपभाक्॥ १६

पलाशमूले विद्यार्थी तेजोऽर्थ्यभिमुखे रवेः।
कन्यार्थी चंडिकागेहे शत्रुहत्यै गृहे मम॥ १७

श्रीकामो विष्णुगेहे च उद्याने स्त्री वशा भवेत्।
किमत्र बहुनोक्तेन शृणु सैन्येशतत्त्वतः॥ १८

यं यं काममभिध्यायेत्तं तं प्राप्नोत्यसंशयम्॥ १९

(श्रीब्रह्मांडपुराणे)

## त्रैलोक्यमंगलकवचम्

नारद उवाच।

भगवन्सर्वधर्मज्ञ कवचं यत्प्रकाशितम्।
त्रैलोक्यमंगलं नाम कृपया कथय प्रभो॥ १

सनत्कुमार उवाच

शृणु वक्ष्यामि विप्रेंद्र कवचं परमाद्भुतम्।
नारायणेन कथितं कृपया ब्रह्मणे पुरा॥ २

ब्रह्मणा कथितं मह्यं परं स्नेहाद्ददामि ते।
अतिगुह्यतरं तत्त्वं ब्रह्ममंत्रौघविग्रहम्।। ३

यद्धृत्वा पठनाद्ब्रह्मा सृष्टिं वितनुते ध्रुवम्।
यद्धृत्वा पठनात्पाति महालक्ष्मीर्जगत्त्रयम्।। ४

पठनाद्धारणाच्छंभुः संहर्ता सर्वमंत्रवित्।
त्रैलोक्यजननी दुर्गा महिषादिमहासुरान्।। ५

वरदृप्तान् जघानैव पठनाद्धारणाद्यतः।
एवमिंद्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः।। ६

इदं कवचमत्यंतगुप्तं कुत्रापि नो वदेत्।
शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत्।। ७

त्रैलोक्यमंगलस्यास्य कवचस्य प्रजापतिः।। ८

ऋषिश्छंदश्च गायत्री देवो नारायणः स्वयम्।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः।। ९

प्रणवो मे शिरः पातु नमो नारायणाय च।
भालं मे नेत्रयुगलमष्टार्णो भुक्तिमुक्तिदः।। १०

क्लीं पायाच्छ्रोत्रयुग्मं चैकाक्षरः सर्वमोहनः।
क्लीं कृष्णाय सदा घ्राणं गोविंदायेति जिह्विकाम्।। ११

गोपीजनपदवल्लभाय स्वाहाननं मम।
अष्टादशाक्षरो मंत्रः कंठं पातु दशाक्षरः।। १२

गोपीजनपदवल्लभाय स्वाहा भुजद्वयम्।
क्लीं ग्लौं क्लीं श्यामलांगाय नमः स्कन्धौ दशाक्षरः।। १३

क्लीं कृष्णः क्लीं करौ पायात् क्लीं कृष्णो मां गतोऽवतु।
हृदयं भुवनेशानः क्लीं कृष्णः क्लीं स्तनौ मम ॥ १४

गोपालायाग्निजायांतं कुक्षियुग्मं सदाऽवतु।
क्लीं कृष्णाय सदा पातु पार्श्वयुग्ममनुत्तमः ॥ १५

कृष्णगोविंदकौ पातां स्मराद्यौ ङेयुतौ मनुः।
अष्टाक्षरः पातु नाभिं कृष्णेति द्व्यक्षरोऽवतु ॥ १६

पृष्ठं क्लीं कृष्णकं गल्लं क्लीं कृष्णाय द्विठान्तकः।
सक्थिनी सततं पातु श्रीं ह्रीं क्लीं कृष्णठद्वयम् ॥ १७

ऊरू सप्ताक्षरः पायात्त्रयोदशाक्षरोऽवतु।
श्रीं ह्रीं क्लीं पदतो गोपीजनवल्लपदान्ततः ॥ १८

भाय स्वाहेति पायुं वै क्लीं ह्रीं श्रीं सदशार्णकः।
जानुनी च सदा पातु ह्रीं श्रीं क्लीं च दशाक्षरः ॥ १९

त्रयोदशाक्षरः पातु जंघे चक्राद्युदायुधः।
अष्टादशाक्षरो ह्रीं-श्रीं-पूर्वको विंशदर्णकः ॥ २०

सर्वांगं मे सदा पातु द्वारकानायको बली।
नमो भगवते पश्चाद्वासुदेवाय तत्परम् ॥ २१

ताराद्यो द्वादशार्णोऽयं प्राच्यां मां सर्वदाऽवतु।
श्रीं ह्रीं क्लीं च दशार्णस्तु ह्रीं क्लीं श्रीं षोडशार्णकः ॥ २२

गदाद्युदायुधो विष्णुर्मामग्नेर्दिशि रक्षतु।
ह्रीं श्रीं दशार्णमंत्रोऽयं दक्षिणे मां सदावतु ॥ २३

तारो नमो भगवते रुक्मिणीवल्लभाय च।
स्वाहेसि षोडशार्णोऽयं नैर्ऋत्यां दिशि रक्षतु ॥ २४

क्लीं हृषीके पदं शाय नमो मां वारुणेऽवतु।
अष्टादशार्णः कामान्तो वायव्ये मां सदाऽवतु।। २५

श्रीं मायाकामकृष्णाय गोविंदाय द्विठो मनुः।
द्वादशार्णात्मको विष्णुरुत्तरे मां सदाऽवतु।। २६

वाग्भवं कामकृष्णाय ह्रीं गोविंदाय तत्परम्।
श्रीं गोपीजनवल्लभांताय स्वाहा हस्तौ ततः।। २७

द्वाविंशत्यक्षरो मंत्रो मामैशान्ये सदाऽवतु।
कालियस्य फणामध्ये दिव्यं नृत्यं करोति तम्।। २८

नमामि देवकीपुत्रं नृत्यराजानमच्युतम्।
द्वात्रिंशदक्षरो मंत्रोऽप्यधो मां सर्वदाऽवतु।। २९

कामदेवाय विद्महे पुष्पबाणाय धीमहि।
तन्नोऽनंगः प्रचोदयादेषा मां पातु चोर्ध्वतः।। ३०

इति ते कथितं विप्र ब्रह्ममंत्रौघविग्रहम्।
त्रैलोक्यमंगलं नाम कवचं ब्रह्मरूपकम्।। ३१

ब्रह्मणा कथितं पूर्वं नारायणमुखाच्छ्रुतम्।
तव स्नेहान्मयाख्यातं प्रवक्तव्यं न कस्यचित्।। ३२

गुरुं प्रणम्य विधिवत्कवचं प्रपठेत्ततः।
सकृद्द्विस्त्रिर्यथाज्ञानं स हि सर्वतपोमयः।। ३३

मंत्रेषु सकलेष्वेव देशिको नात्र संशयः।
शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः।। ३४

हवनादीन्दशांशेन कृत्वा तत्साधयेद्ध्रुवम्।
यदि स्यात्सिद्धकवचो विष्णुरेव भवेत्स्वयम्।। ३५

मंत्रसिद्धिर्भवेत्तस्य पुरश्चर्याविधानतः ।
स्पर्धामुद्धूय सततं लक्ष्मीर्वाणी वसेत्ततः ।। ३६

पुष्पांजल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् ।
दशवर्षसहस्राणि पूजायाः फलमाप्नुयात् ।। ३७

भूर्जे विलिख्यांगुलिकां स्वर्णस्थां धारयेद्यदि ।
कंठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ।। ३८

अश्वमेधसहस्राणि वाजपेयशतानि च ।
महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ।। ३९

कलां नार्हंति तान्येव सकृदुच्चारणात्ततः ।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः ।
त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत् ।। ४०

(श्रीनारदपंचरात्रे ज्ञानामृतसारे)

## त्रैलोक्यविजयं कृष्णकवचम्

त्रैलोक्यविजयस्यास्य कवचस्य प्रजापतिः ।
ऋषिश्छन्दश्च गायत्री देवो राधेश्वरः स्वयम् ।। १

त्रैलोक्यविजयप्राप्तौ विनियोगः प्रकीर्तितः ।
परात्परं च कवचं त्रिषु लोकेषु दुर्लभम् ।। २

प्रणवो मे शिरः पातु श्रीकृष्णाय नमः सदा ।
पायात् कपालं कृष्णाय स्वाहा पञ्चाक्षरः स्मृतः ।। ३

कृष्णेति पातु नेत्रे च कृष्ण स्वाहेति तारकम् ।
हरये नम इत्येवं भ्रूलतां पातु मे सदा ।। ४

ओं गोविन्दाय स्वाहेति नासिकां पातु संततम्।
गोपालाय नमो गण्डौ पातु मे सर्वतः सदा।। ५

ओं नमो गोपाङ्गनेशाय कर्णौ पातु सदा मम।
ओं कृष्णाय नमः शश्वत् पातु मेऽधरयुग्मकम्।। ६

ओं गोविन्दाय स्वाहेति दन्तालीं मे सदाऽवतु।
ओं कृष्णाय दन्तरन्ध्रं दन्तोर्ध्वं क्लीं सदाऽवतु।। ७

ओं श्रीकृष्णाय स्वाहेति जिह्विकां पातु मे सदा।
राधेश्वराय स्वाहेति तालुकं पातु मे सदा।। ८

राधिकेशाय स्वाहेति स्कन्धं पातु सदा मम।
नमो गोपाङ्गनेशाय वक्षः पातु सदा मम।। ९

ओं गोपेशाय स्वाहेति स्कन्धं पातु सदा मम।
नमः किशोरवेषाय स्वाहा पृष्ठं सदावतु।। १०

उदरं पातु मे नित्यं मुकुन्दाय नमः सदा।
ओं ह्रीं क्लीं कृष्णाय स्वाहेति करौ पातु सदा मम।। ११

ओं विष्णवे नमो बाहुयुग्मं पातु सदा मम।
ओं ह्रीं भगवते स्वाहा नखरं पातु मे सदा।। १२

ओं नमो नारायणायेति नखरन्ध्रं सदाऽवतु।
ओं ह्रीं ह्रीं पद्मनाभाय नाभिं पातु सदा मम।। १३

ओं सर्वेशाय स्वाहेति कङ्कालं पातु मे सदा।
ओं गोपीरमणाय स्वाहा नितम्बं पातु मे सदा।। १४

ओं गोपीरमणनाथाय पादौ पातु सदा मम।
ओं ह्रीं श्रीं रसिकेशाय स्वाहा सर्वं सदाऽवतु।। १५

ओं केशवाय स्वाहेति मम केशान् सदावतु।
नमः कृष्णाय स्वाहेति ब्रह्मरन्ध्रं सदावतु॥ १६

ओं माधवाय स्वाहेति लोमानि मे सदावतु।
ओं ह्रीं श्रीं रसिकेशाय स्वाहा सर्वं सदावतु॥ १७

परिपूर्णतमः कृष्णः प्राच्यां मां सर्वदाऽवतु।
स्वयं गोलोकनाथो मामाग्नेय्यां दिशि रक्षतु॥ १८

पूर्वब्रह्मस्वरूपश्च दक्षिणे मां सदावतु।
नैर्ऋत्यां पातु मां कृष्णः पश्चिमे पातु मां हरिः॥ १९

गोविन्दः पातु मां शश्वद्वायव्यां दिशि नित्यशः।
उत्तरे मां सदा पातु रसिकानां शिरोमणिः॥ २०

ऐशान्यां मां सदा पातु वृन्दावनविहारकृत्।
वृन्दावती प्राणनाथः पातु मामूर्ध्वदेशतः॥ २१

सदैव माधवः पातु बलिहारी महाबलः।
जले स्थले चान्तरिक्षे नृसिंहः पातु मां सदा॥ २२

स्वप्ने जागरणे शश्वत् पातु मां माधवः सदा।
सर्वान्तरात्मा निर्लिप्तः पातु मां सर्वतो विभुः॥ २३

इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्।
त्रैलोक्यविजयं नाम कवचं परमाद्भुतम्॥ २४

मया श्रुतं कृष्णवक्त्रात् प्रवक्तव्यं न कस्यचित्।
गुरुमभ्यर्च्य विधिवत् कवचं धारयेत्तु यः॥ २५

कण्ठे वा दक्षिणे बाहौ सोऽपि विष्णुर्न संशयः ।
स च भक्तो वसेद् यत्र लक्ष्मीर्वाणी वसेत्ततः ।। २६

यदि स्यात् सिद्धकवचो जीवन्मुक्तो भवेत्तु सः ।
निश्चितं कोटिवर्षाणां पूजायाः फलमाप्नुयात् ।। २७

राजसूयसहस्राणि वाजपेयशतानि च ।
अश्वमेधायुतान्येव नरमेधायुतानि च ।। २८

महादानानि यान्येव प्रादक्षिण्यं भुवस्तथा ।
त्रैलोक्यविजयस्यास्य कलां नार्हन्ति षोडशीम् ।। २९

व्रतोपवासनियमाः स्वाध्यायोऽध्ययनं तपः ।
स्नानं च सर्वतीर्थेषु नास्यार्हन्ति कलामपि ।। ३०

सिद्धत्वममरत्वं च दासत्वं श्रीहरेरपि ।
यदि स्यात् सिद्धकवचः सर्वं प्राप्नोति निश्चितम् ।। ३१

स भवेत् सिद्धकवचो दशलक्षं जपेत्तु यः ।
यो भवेत् सिद्धकवचः सर्वज्ञः स भवेद ध्रुवम् ।। ३२

*___*___*

## नारायणवर्म

राजोवाच

यया गुप्तः सहस्राक्षः सवाहान् रिपुसैनिकान् ।
क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ।। १

भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ।
यथाततायिनः शत्रून् येन गुप्तोऽजयन्मृधे ।। २

श्रीशुक उवाच

वृतः पुरोहितस्त्वाष्ट्रो महेंद्रायानुपृच्छते।
नारायणाख्यं वर्माह तदिहैकमनाः शृणु।। ३

विश्वरूप उवाच

धौतांघ्रिपाणिराचम्य सपवित्र उदङ्मुखः।
कृतस्वांगकरन्यासो मंत्राभ्यां वाग्यतः शुचिः।। ४

नारायणमयं वर्म संनह्येद्भय आगते।
दैवभूतात्मकर्मभ्यो नारायणमयः पुमान्।। ५

पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि।
मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत्।। ६

ओं नमो नारायणायेति विपर्ययमथापि वा।
करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया।। ७

प्रणवादि यकारांतमंगुल्यंगुष्ठपर्वसु।
न्यसेद्धृदय ओंकारं विकारमनुमूर्धनि।। ८

षकारं तु भ्रुवोर्मध्ये णकारं शिखया न्यसेत्।
वेकारं नेत्रयोर्युंज्यान्नकारं सर्वसंधिषु।। ९

मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद्बुधः।
सविसर्गं फडंतं तत्सर्वदिक्षु विनिर्दिशेत्।। १०

ओं विष्णवे नमः

इत्यात्मानं परं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम्।
विद्यातेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत्।। ११

ओं हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे।
दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ।। १२

जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात्।
स्थलेषु मायावटुवामनोऽव्यात् त्रिविक्रमः खेऽवतु विश्वरूपः ।।

दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः।
विमुंचतो यस्य महाट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ।।

रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः।
रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोऽव्याद्भरताग्रजो माम्।।१५

मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात्।
दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबंधात्।।१६

सनत्कुमारोऽवतु कामदेवाद्धयग्रीवो मां पथि देवहेलनात्।
देवर्षिवर्यः पुरुषार्चनांतरात्कूर्मो हरिर्मां निरयादशेषात्।। १७

धन्वंतरिर्भगवान्पात्वपथ्याद्द्वंद्वाद्भयादृषभो निर्जितात्मा।
यज्ञश्च लोकादवताज्जनांताद्बलो गणात्क्रोधवशादहींद्रः।।

द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाषंडगणात्प्रमादात्।
कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः।। १९

मां केशवो गदया प्रातरव्याद्गोविंद आसंगव आत्तवेणुः।
नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररींद्रपाणिः ।।

देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम्।
दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ।। २१

श्रीवत्सधामाऽपररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः।
दामोदरोऽव्यादनुसंध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ।। २२

चक्रं युगांतानलतिग्मनेमि भ्रमत्समंताद्भगवत्प्रयुक्तम् ।
दंदग्धि दंदग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ।।

गदेऽशनिस्पर्शन विस्फुलिंगे निष्पिंढि निष्पिंढ्यजितप्रियासि ।
कूष्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् ।।२४

त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ।
दरेंद्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कंपयन् ।।

त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिंधि छिंधि ।
चक्षूंषि चर्मन् शतचन्द्र छादय द्विषामघानां हर पापचक्षुषाम् ।।

यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च ।
सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योऽघेभ्य एव च ।। २७

सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ।
प्रयांतु संक्षयं सद्यो येऽन्ये श्रेयःप्रतीपकाः ।। २८

गरुडो भगवांस्तोत्रस्तोभश्छंदोमयः प्रभुः ।
रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ।। २९

सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ।
बुद्धींद्रियमनःप्राणान् पांतु पार्षदभूषणाः ।। ३०

यथा हि भगवानेव वस्तुतः सदसच्च यत् ।
सत्येनानेन नः सर्वे यांतु नाशमुपद्रवाः ।। ३१

यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ।
भूषणायुधलिंगाख्यां धत्ते शक्तीः स्वमायया ।। ३२

तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः ।
पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ।। ३३

विदिक्षु दिक्षूर्ध्वमधः समंतादंतर्बहिर्भगवान्नारसिंहः ।
प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ।। ३४

मघवन्निदमाख्यातं वर्म नारायणात्मकम् ।
विजेष्यस्यंजसा येन दंशितोऽसुरयूथपान् ।। ३५

एतद्धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ।। ३६

न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ।
राजदस्युग्रहादिभ्यो व्याध्यादिभ्यश्च कर्हिचित् ।। ३७

इमां विद्यां पुरा कश्चित्कौशिको धारयन् द्विजः ।
योगधारणया स्वांगं जहौ स मरुधन्वनि ।। ३८

तस्योपरि विमानेन गंधर्वपतिरेकदा ।
ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ।। ३९

गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः ।
स वालखिल्यवचनादस्थीन्यादाय विस्मितः ।। ४०

प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ।
य इदं शृणुयात्काले यो धारयति चादृतः ।
तं नमस्यंति भूतानि मुच्यते सर्वतोभयात् ।। ४१

श्रीशुक उवाच

एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ।
त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ।। ४२

(श्रीमद्भागवते)

# नारायणहृदयम्

ओं अस्य श्रीनारायणहृदयस्तोत्रमन्त्रस्य भार्गव ऋषिः, अनुष्टुप् छन्दः, श्रीलक्ष्मीनारायणो देवता, श्रीलक्ष्मी-नारायणप्रीत्यर्थे जपे विनियोगः । अथ करन्यासः - ओं नारायणः परं ज्योतिरित्यङ्गुष्ठाभ्यां नमः । ओं नारायणः परं ब्रह्मेति तर्जनीभ्यां नमः । ओं नारायणः परो देव इति मध्यमाभ्यां नमः । ओं नारायणः परं धामेति अनामिकाभ्यां नमः । ओं नारायणः परो धर्म इति कनिष्ठिकाभ्यां नमः । ओं विश्वं नारायणः पर इति करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ध्यानम्

उद्यदादित्यसंकाशं पीतवाससमच्युतम् ।
शङ्खचक्रगदापाणिं ध्यायेल्लक्ष्मीपतिं हरिम् ।
ओं नमो भगवते नारायणाय इति मन्त्रं जपेत् ।।

श्रीवेदव्यास उवाच

श्रीमन्नारायणो ज्योतिरात्मा नारायणः परः ।
नारायणः परं ब्रह्म नारायण नमोऽस्तु ते ।। १

नारायणः परो देवो दाता नारायणः परः ।
नारायणः परो ध्याता नारायण नमोऽस्तु ते ।। २

नारायणः परं धाम ध्याता नारायणः परः ।
नारायणः परो धर्मो नारायण नमोऽस्तु ते ।। ३

नारायणपरो बोधो विद्या नारायणः पर।
विश्वं नारायणः साक्षान्नारायण नमोस्तु ते ।। ४

नारायणाद्विधिर्जातो जातो नारायणाच्छिवः ।
जातो नारायणादिन्द्रो नारायण नमोऽस्तु ते ।। ५

रविर्नारायणं तेजश्चन्द्रो नारायणं महः ।
वह्निर्नारायणः साक्षान्नारायण नमोऽस्तु ते ।। ६

नारायण उपास्यः स्याद्गुरुर्नारायणः परः ।
नारायणः परो बोधो नारायण नमोऽस्तु ते ।। ७

नारायणः फलं मुख्यं सिद्धिर्नारायणः सुखम् ।
सर्वं नारायणः शुद्धो नारायण नमोऽस्तु ते ।। ८

नारायणस्त्वमेवासि नारायण हृदि स्थितः ।
प्रेरकः प्रेर्यमाणानां त्वया प्रेरितमानसः ।। ९

त्वदाज्ञां शिरसा धृत्वा जपामि जनपावनम् ।
नानोपासनमार्गाणां भावकृद्भावबोधकः ।। १०

भावकृद्भावभूतस्त्वं मम सौख्यप्रदो भव ।
त्वन्मायामोहितं विश्वं त्वयैव परिकल्पितम् ।। ११

त्वदधिष्ठानमात्रेण सैव सर्वार्थकारिणी ।
त्वमेवैतां पुरस्कृत्य मम कामान् समर्पय ।। १२

न मे त्वदन्यः संत्राता त्वदन्यं न हि दैवतम् ।
त्वदन्यं न हि जानामि पालकं पुण्यरूपकम् ।। १३

यावत्सांसारिको भावो नमस्ते भावनात्मने।
तत्सिद्धिदो भवेत्सद्यः सर्वथा सर्वदा विभो॥ १४

पापिनामहमेकाग्र्यो दयालूनां त्वमग्रणीः।
दयनीयो मदन्योऽस्ति तव कोऽत्र जगत्त्रये॥ १५

त्वयाऽप्यहं न सृष्टश्चेन्न स्यात्तव दयालुता।
आमयो वा न सृष्टश्चेदौषधस्य वृथोदयः॥ १६

पापसंघपरिक्रान्तः पापात्मा पापरूपधृक्।
त्वदन्यः कोऽत्र पापेभ्यस्त्राता मे जगतीतले॥ १७

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या च गुरुस्त्वमेव त्वमेव सर्वं मम देवदेव॥ १८

प्रार्थनादशकं चैव मूलाष्टकमथापि वा।
यः पठेच्छृणुयान्नित्यं तस्य लक्ष्मीः स्थिरा भवेत्॥ १९

नारायणस्य हृदयं सर्वाभीष्टफलप्रदम्।
लक्ष्मीहृदयकं स्तोत्रं यदि चैतद्विनाकृतम्॥ २०

तत्सर्वं निष्फलं प्रोक्तं लक्ष्मीः क्रुध्यति सर्वतः।
एतत्संकलितं स्तोत्रं सर्वाभीष्टफलप्रदम्॥ २१

लक्ष्मीहृदयकं स्तोत्रं तथा नारायणात्मकम्।
जपेद्यः संकलीकृत्य सर्वाभीष्टमवाप्नुयात्॥ २२

नारायणस्य हृदयमादौ जप्त्वा ततः परम्।
लक्ष्मीहृदयकं स्तोत्रं जपेन्नारायणं पुनः॥ २३

पुनर्नारायणं जप्त्वा पुनर्लक्ष्मीहृदं जपेत्।
पुनर्नारायणहृदं संपुटीकरणं जपेत्।
एवं मध्ये द्विवारेण जपेल्लक्ष्मीहृदं हि तत्॥ २४

लक्ष्मीहृदयकं स्तोत्रं सर्वमेतत्प्रकाशितम्।
तद्वज्जपादिकं कुर्यादेतत्संकलितं शुभम्॥ २५

स सर्वकाममाप्नोति आधिव्याधिभयं हरेत्।
गोप्यमेतत्सदा कुर्यान्न सर्वत्र प्रकाशयेत्॥ २६

इति गुह्यतमं शास्त्रमुक्तं ब्रह्मादिकैः पुरा।
तस्मात्सर्वप्रयत्नेन गोपयेत्साधयेत्सुधीः॥ २७

यत्रैतत्पुस्तकं तिष्ठेल्लक्ष्मीनारायणात्मकम्।
भूतप्रेतपिशाचांश्च वेतालान्नाशयेत्सदा॥ २८

लक्ष्मीहृदयप्रोक्तेन विधिना साधयेत्सुधीः।
भृगुवारे च रात्रौ तु पूजयेत्पुस्तकद्वयम्॥ २९

सर्वदा सर्वथा सत्यं गोपयेत्साधयेत्सुधीः।
गोपनात्साधनाल्लोके धन्यो भवति तत्त्ववित्।
नारायण हृदं नित्यं नारायण नमोऽस्तु ते॥ ३०

(अथर्वणरहस्योत्तरभागे)

(अनेन सह लक्ष्मीहृदयमपि पठितव्यम्।)

# लक्ष्मीहृदयम्

(नारायणहृदयेन साकं पठितव्यम्)

आचम्य प्राणानायम्य देशकालौ संकीर्त्य श्रीलक्ष्मीनारायणप्रसादसिद्ध्या ममाभीष्टकामनासिद्ध्यर्थं लक्ष्मीनारायणहृदयजपाख्यं कर्म करिष्ये इति संकल्प्य न्यासादि कुर्यात्।

अस्य श्रीमहालक्ष्मीहृदयमालामंत्रस्य, भार्गव ऋषिः, आद्यादिश्रीमहालक्ष्मीर्देवता, अनुष्टुबादिनानाछंदांसि, श्रीं बीजम्, ह्रीं शक्तिः, ऐं कीलकम्, श्रीमहालक्ष्मीप्रसादसिद्ध्यर्थं जपे विनियोगः। ओं भार्गवऋषये नमः शिरसि। अनुष्टुबादिनानाच्छंदोभ्यो नमो मुखे। आद्यादिश्रीमहालक्ष्म्यै देवतायै नमो हृदये। श्रीं बीजाय नमो गुह्ये। ह्रीं शक्तये नमः पादयोः। ऐं कीलकाय नमः सर्वांगे। ओं श्रीं अंगुष्ठाभ्यां नमः। ओं ह्रीं तर्जनीभ्यां नमः। ओं ऐं मध्यमाभ्यां नमः। ओं श्रीं अनामिकाभ्यां नमः। ओं ह्रीं कनिष्ठिकाभ्यां नमः। ओं ऐं करतलकरपृष्ठाभ्यां नमः। ओं श्रीं हृदयाय नमः। ओं ह्रीं शिरसे स्वाहा। ओं ऐं शिखायै वषट्। ओं श्रीं कवचाय हुम्। ओं ह्रीं नेत्रत्रयाय वौषट्। ओं ऐं अस्त्राय फट्। ओं श्रीं ह्रीं ऐं इति दिग्बन्धः॥ अथ ध्यानम्॥

हस्तद्वयेन कमले धारयंतीं स्वलीलया।<br>
हारनूपुरसंयुक्तां लक्ष्मीं देवीं विचिंतये।<br>
इति ध्यात्वा मानसोपचारैः संपूज्य।<br>
शंखचक्रगदाहस्ते शुभ्रवर्णे सुवासिनि।<br>
मम देहि वरं लक्ष्मीः सर्वसिद्धिप्रदायिनी।

इति संप्रार्थ्य, ओं श्रीं ह्रीं ऐं महालक्ष्म्यै कमलधारिण्यै सिंहवाहिन्यै स्वाहा ।।

इति मंत्रं जस्वा पुनः पूर्ववद्धृदयादिषडंगन्यासं कृत्वा स्तोत्रं पठेत् ।

वंदे लक्ष्मीं परशिवमयीं शुद्धजांबूनदाभां
तेजोरूपां कनकवसनां सर्वभूषोज्ज्वलांगीम् ।
बीजापूरं कनककलशं हेमपद्मं दधानां
आद्यां शक्तिं सकलजननीं विष्णुवामांकसंस्थाम् ।। १

श्रीमत्सौभाग्यजननीं स्तौमि लक्ष्मीं सनातनीम् ।
सर्वकामफलावाप्तिसाधनैकसुखावहाम् ।। २

स्मरामि नित्यं देवेशि त्वया प्रेरितमानसः ।
त्वदाज्ञां शिरसा धृत्वा भजामि परमेश्वरीम् ।। ३

समस्तसंपत्सुखदां महाश्रियं समस्तसौभाग्यकरीं महाश्रियम् ।
समस्तकल्याणकरीं महाश्रियं भजाम्यहं ज्ञानकरीं महाश्रियम् ।।४

विज्ञानसंपत्सुखदां सनातनीं विचित्रवाग्भूतिकरीं मनोहराम् ।
अनंतसंमोदसुखप्रदायिनीं नमाम्यहं भूतिकरीं हरिप्रियाम् ।। ५

समस्तभूतांतरसंस्थिता त्वं समस्तभोक्त्रीश्वरि विश्वरूपे ।
तन्नास्ति यत्त्वव्यतिरिक्तवस्तु त्वत्पादपद्मं प्रणमाम्यहं श्रीः ।। ६

दारिद्र्यदुःखौघतमोपहंत्रि त्वत्पादपद्मं मयि संनिधत्स्व ।
दीनार्तिविच्छेदनहेतुभूतैः कृपाकटाक्षैरभिषिंच मां श्रीः ।।७

अम्ब प्रसीद करुणासुधयाऽऽर्द्रदृष्ट्या
मां त्वत्कृपाद्रविणगेहमिमं कुरुष्व ।
आलोकय प्रणतहृद्गतशोकहंत्रि
त्वत्पादपद्मयुगलं प्रणमाम्यहं श्रीः ।। ८

शान्त्यै नमोऽस्तु शरणागतरक्षणायै
 कान्त्यै नमोऽस्तु कमनीयगुणाश्रयायै।
क्षान्त्यै नमोऽस्तु दुरितक्षयकारणायै
 धात्र्यै नमोऽस्तु धनधान्यसमृद्धिदायै॥ ९

शक्त्यै नमोऽस्तु शशिशेखरसंस्तुतायै
 रत्यै नमोऽस्तु रजनीकरसोदरायै।
भक्त्यै नमोऽस्तु भवसागरतारिकायै
 मत्यै नमोऽस्तु मधुसूदनवल्लभायै॥ १०

लक्ष्म्यै नमोऽस्तु शुभलक्षणलक्षितायै
 सिद्ध्यै नमोऽस्तु शिवसिद्धसुपूजितायै।
धृत्यै नमोस्त्वमितदुर्गतिभंजनायै
 गत्यै नमोऽस्तु वरसद्गतिदायिकायै॥ ११

देव्यै नमोऽस्तु दिवि देवगणार्चितायै
 भूत्यै नमोऽस्तु भुवनार्तिविनाशनायै।
दात्र्यै नमोऽस्तु धरणीधरवल्लभायै
 पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै॥ १२

सुतीव्रदारिद्र्यविदुःखहंत्र्यै नमोऽस्तु ते सर्वभयापहंत्र्यै।
श्रीविष्णुवक्षःस्थलसंस्थितायै नमो नमः सर्वविभूतिदायै॥

जयतु जयतु लक्ष्मीर्लक्षणालंकृतांगी
 जयतु जयतु पद्मा पद्मसद्माभिवंद्या।
जयतु जयतु विद्या विष्णुवामांकसंस्था
 जयतु जयतु सम्यक् सर्वसंपत्करी श्रीः॥ १४

जयतु जयतु देवी देवसंघाभिपूज्या
 जयतु जयतु भद्रा भार्गवी भाग्यरूपा।

जयतु जयतु नित्या निर्मलज्ञानवेद्या
जयतु जयतु सत्या सर्वभूतान्तरस्था ॥ १५

जयतु जयतु रम्या रत्नगर्भान्तरस्था
जयतु जयतु शुद्धा शुद्धजांबूनदाभा ।
जयतु जयतु कांता कान्तिमद्भासितांगी
जयतु जयतु शांता शीघ्रमागच्छ सौम्ये ॥ १६

यस्याः कलायाः कमलोद्भवाद्याः रुद्राश्च शक्रप्रमुखाश्च देवाः ।
जीवन्ति सर्वा अपि शक्तयस्ताः प्रभुत्वमाप्ताः परमायुषस्ते ॥ १७

लिलेख निटिले विधिर्मम लिपिं विसृज्यापरं
त्वया विलिखितव्यमेतदिति तत्फलप्राप्तये ।
तदंतरफले स्फुटं कमलवासिनि श्रीरिमां
समर्पय स्वमुद्रिकां सकलभाग्यसंसूचिकाम् ॥ १८

कलया ते यथा देवि जीवन्ति सचराचराः ।
तथा संपत्करे लक्ष्मीः सर्वदा संप्रसीद मे ॥ १९

यथा विष्णुर्ध्रुवे नित्यं स्वकलां संन्यवेशयत् ।
तथैव स्वकलां लक्ष्मि मयि सम्यक् समर्पय ॥ २०

सर्वसौख्यप्रदे देवि भक्तानामभयप्रदे ।
अचलां कुरु यत्नेन कलां मयि निवेशिताम् ॥ २१

मुदास्तां मद्भाले परमपदलक्ष्मीः स्फुटकला
सदा वैकुंठश्रीर्निवसतु कला मे नयनयोः ।
वसेत्सत्ये लोके मम वचसि लक्ष्मीर्वरकला
श्रियः श्वेतद्वीपे निवसतु कला मेऽस्तु करयोः ॥ २२

तावन्नित्यं ममांगेषु क्षीराब्धौ श्रीकला वसेत् ।
सूर्याचन्द्रमसौ यावद्यावल्लक्ष्मीपतिः श्रिया ॥ २३

सर्वमंगल संपूर्णा सर्वैश्वर्यसमन्विता।
आद्यादिश्रीर्महालक्ष्मीस्त्वत्कला मयि तिष्ठतु॥ २४

अज्ञानतिमिरं हंतुं शुद्धज्ञानप्रकाशिका।
सर्वैश्वर्यप्रदा मेऽस्तु त्वत्कला मयि संस्थिता॥ २५

अलक्ष्मीं हरतु क्षिप्रं तमः सूर्यप्रभा यथा।
वितनोतु मम श्रेयस्त्वत्कला मयि संस्थिता॥ २६

ऐश्वर्यमंगलोत्पत्तिस्त्वत्कलायां निधीयते।
मयि तस्मात्कृतार्थोऽस्मि पात्रमस्मि स्थितेस्तव॥ २७

भवदावेशभाग्यार्हो भाग्यवानस्मि भार्गवि।
त्वत्प्रसादात्पवित्रोऽहं लोकमातर्नमोऽस्तु ते॥ २८

पुनासि मां त्वं कलयैव यस्मादतः समागच्छ ममाग्रतस्त्वम्।
परं पदं श्रीर्भव सुप्रसन्ना मय्यच्युतेन प्रविशादिलक्ष्मीः॥ २९

श्रीवैकुंठस्थिते लक्ष्मीः समागच्छ ममाग्रतः।
नारायणेन सह मां कृपादृष्ट्याऽवलोकय॥ ३०

सत्यलोकस्थिते लक्ष्मीस्त्वं ममागच्छ संनिधिम्।
वासुदेवेन सहिता प्रसीद वरदा भव॥ ३१

श्वेतद्वीपस्थिते लक्ष्मीः शीघ्रमागच्छ सुव्रते।
विष्णुना सहिते देवि जगन्मातः प्रसीद मे॥ ३२

क्षीरांबुधिस्थिते लक्ष्मीः समागच्छ समाधवे।
त्वत्कृपादृष्टिसुधया सततं मां विलोकय॥ ३३

रत्नगर्भस्थिते लक्ष्मीः परिपूर्णहिरण्मयि।
समागच्छ समागच्छ स्थित्वाशु पुरतो मम॥ ३४

स्थिरा भव महालक्ष्मीर्निश्चला भव निर्मले।
प्रसन्ने कमले देवि प्रसन्नहृदया भव॥ ३५

श्रीधरे श्रीमहाभूते त्वदंतःस्थं महानिधिम्।
शीघ्रमुद्धृत्य पुरतः प्रदर्शय समर्पय ।। ३६

वसुंधरे श्रीवसुधे वसुदोग्ध्रि कृपां मयि।
त्वत्कुक्षिगतसर्वस्वं शीघ्रं मे संप्रदर्शय ।। ३७

विष्णुप्रिये रत्नगर्भे समस्तफलदे शिवे।
त्वद्गर्भगतहेमादीन् संप्रदर्शय दर्शय ।। ३८

रसातलगते लक्ष्मीः शीघ्रमागच्छ मे पुरः।
न जाने परमं रूपं मातर्मे संप्रदर्शय ।। ३९

आविर्भव मनोवेगाच्छीघ्रमागच्छ मे पुरः।
मा वत्स भैरिहेत्युक्त्वा कामं गौरिव रक्ष माम् ।। ४०

देवि शीघ्रं समागच्छ धरणीगर्भसंस्थिते।
मातस्त्वद्भृत्यभृत्योऽहं मृगये त्वां कुतूहलात् ।। ४१

उत्तिष्ठ जागृहि त्वं मे समुत्तिष्ठ सुजागृहि।
अक्षयान्हेमकलशान्सुवर्णेन सुपूरितान् ।। ४२

निक्षेपान्मे समाकृष्य समुद्धृत्य ममाग्रतः।
समुन्नतानना भूत्वा समाधेहि धरांतरात् ।। ४३

मत्संनिधिं समागच्छ मदाहितकृपारसात्।
प्रसीद श्रेयसां दोग्ध्रि लक्ष्मीर्मे नयनाग्रतः ।। ४४

अत्रोपविश लक्ष्मीस्त्वं स्थिरा भव हिरण्मयि।
सुस्थिरा भव संप्रीत्या प्रसीद वरदा भव ।। ४५

आनीय त्वं तथा देवि निधीन्मे संप्रदर्शय।
अद्य क्षणेन सहसा दत्त्वा संरक्ष मां सदा ।। ४६

मयि तिष्ठ तथा नित्यं यथेन्द्रादिषु तिष्ठसि।
अभयं कुरु मे देवि महालक्ष्मीर्नमोऽस्तु ते ।। ४७

समागच्छ महालक्ष्मीः शुद्धजांबूनदप्रभे।
प्रसीद पुरतः स्थित्वा प्रणतं मां विलोकय ।। ४८

लक्ष्मीर्भुवं गता भासि यत्र यत्र हिरण्मयि।
तत्र तत्र स्थिता त्वं मे तव रूपं प्रदर्शय ।। ४९

क्रीडसे बहुधा भूमौ परिपूर्णा कृपा मयि।
मम मूर्ध्नि स्थिते हस्तमविलम्बितमर्पय ।। ५०

फलद्भाग्योदये लक्ष्मीः समस्तपुरवासिनि।
प्रसीद मे महालक्ष्मीः परिपूर्णमनोरथे ।। ५१

अयोध्यादिषु सर्वेषु नगरेषु समाश्रिते।
विभवैर्विविधैर्युक्ते समागच्छ बलान्विते ।। ५२

समागच्छ समागच्छ ममाग्रे भव सुस्थिरा।
करुणारसनिष्यन्दनेत्रद्वयविशालिनि ।। ५३

संविधत्स्व महालक्ष्मीस्त्वं पाणिं मम मस्तके।
करुणासुधया मां त्वमभिषिच्य स्थिरं कुरु ।। ५४

सर्वराजगृहे लक्ष्मीः समागच्छ बलान्विते।
स्थित्वाऽऽशु पुरतो मेऽद्य प्रसादेनाभयं कुरु ।। ५५

सादरं मस्तके हस्तं मम त्वं कृपयाऽर्पय।
सर्वराजगृहे लक्ष्मीस्त्वत्कला मयि तिष्ठतु ।। ५६

आद्यादिश्रीर्महालक्ष्मीर्विष्णुवामाङ्कसंस्थिते।
प्रत्यक्षं कुरु मे रूपं रक्ष मां शरणागतम् ।। ५७

प्रसीद मे महालक्ष्मीः सुप्रसीद महाशिवे ।
अचला भव संप्रीत्या सुस्थिरा भव मद्गृहे ।। ५८

यावत्तिष्ठन्ति वेदाश्च यावत्त्वन्नाम तिष्ठति ।
यावद्विष्णुश्च यावत्त्वं तावत्कुरु कृपां मयि ।। ५९

चान्द्री कला यथा शुक्ले वर्धते सा दिने दिने ।
तथा दया ते मय्येव वर्धतामभिवर्धताम् ।। ६०

यथा वैकुण्ठनगरे यथा वै क्षीरसागरे ।
तथ मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ।। ६१

योगिनां हृदये नित्यं यथा तिष्ठसि विष्णुना ।
तथा मद्भवने तिष्ठ स्थिरं श्रीविष्णुना सह ।। ६२

नारायणस्य हृदये भवती यथाऽस्ते
नारायणोऽपि तव हृत्कमले यथाऽऽस्ते ।
नारायणस्त्वमपि नित्यमुभौ तथैव
तौ तिष्ठतां हृदि ममापि दयावती श्रीः ।। ६३

विज्ञानवृद्धिं हृदये कुरु श्रीः सौभाग्यवृद्धिं कुरु मे गृहे श्रीः ।
दयासुवृद्धिं कुरुतां मयि श्रीः सुवर्णवृद्धिं कुरु मे गृहे श्रीः ।।

न मां त्यजेथाः श्रितकल्पवल्लि सद्भक्तिचिन्तामणिकामधेनो ।
विश्वस्य मातर्भव सुप्रसन्ना गृहे कलत्रेषु च पुत्रवर्गे ।। ६५

आद्यादिमाये त्वमजांडबीजं त्वमेव साकारनिराकृतिस्त्वम् ।
त्वया धृताश्चाब्जभवाण्डसंघाश्चित्रं चरित्रं तव देवि विष्णोः ।।६६

ब्रह्मरुद्रादयो देवा वेदाश्चापि न शक्नुयुः ।
महिमानं तव स्तोतुं मंदोऽहं शक्नुयां कथम् ।। ६७

अंब त्वद्वत्सवाक्यानि सूक्तासूक्तानि यानि च ।
तानि स्वीकुरु सर्वज्ञे दयालुत्वेन सादरम् ।। ६८

भवतीं शरणं गत्वा कृतार्थाः स्युः पुरातनाः।
इति संचिंत्य मनसा त्वामहं शरणं व्रजे॥ ६९

अनंता नित्यसुखिनस्त्वद्भक्तास्त्वत्परायणाः।
इति वेदप्रमाणाद्धि देवि त्वां शरणं व्रजे॥ ७०

तव प्रतिज्ञा मद्भक्ता न नश्यंतीत्यपि क्वचित्।
इति संचिंत्य संचिंत्य प्राणान्संधारयाम्यहम्॥ ७१

त्वदधीनस्त्वहं मातस्त्वत्कृपा मयि विद्यते।
यावत्संपूर्णकामः स्यां तावद्देहि दयानिधे॥ ७२

क्षणमात्रं न शक्नोमि जीवितुं त्वत्कृपां विना।
न जीवंतीह जलजा जलं त्यक्त्वा जलग्रहाः॥ ७३

यथा हि पुत्रवात्सल्याज्जननी प्रस्नुतस्तनी।
वत्सं त्वरितमागत्य संप्रीणयति वत्सला॥ ७४

यदि स्यां तव पुत्रोऽहं माता त्वं यदि मामकी।
दयापयोधरस्तन्यसुधाभिरभिषिंच माम्॥ ७५

मृग्यो न गुणलेशोऽपि मयि दोषैकमंदिरे।
पांसूनां वृष्टिबिंदूनां दोषाणां च न मे मितिः॥ ७६

पापिनामहमेवाग्र्यो दयालूनां त्वमग्रणीः।
दयनीयो मदन्योऽस्ति तव कोऽत्र जगत्त्रये॥ ७७

विधिनाहं न सृष्टश्चेन्न स्यात्तव दयालुता।
आमयो वा न सृष्टश्चेदौषधस्य वृथोदयः॥ ७८

कृपा मदग्रजा किं ते अहं किं वा तदग्रजः।
विचार्य देहि मे वित्तं तव देवि दयानिधे॥ ७९

माता पिता त्वं गुरुः सद्गतिः श्रीस्त्वमेव संजीवनहेतुभूता।
अन्यन्न मन्ये जगदेकनाथे त्वमेव सर्वं मम देवि सत्ये ।। ८०

आद्यादिलक्ष्मीर्भव सुप्रसन्ना विशुद्धविज्ञानसुखैकदोग्ध्री।
अज्ञानहंत्री त्रिगुणातिरिक्ता प्रज्ञाननेत्री भव सुप्रसन्ना ।। ८१

अशेषवाग्जाड्यमलापहन्त्री नवं नवं स्पष्टसुवाक्प्रदायिनी।
ममेह जिह्वाग्रसुरंगनर्तकी भव प्रसन्ना वदने च मे श्रीः ।। ८२

समस्त संपत्सु विराजमाना समस्ततेजश्चयभासमाना।
विष्णुप्रिये त्वं भव दीप्यमाना वाग्देवता मे नयने प्रसन्ना ।। ८३

सर्वप्रदर्शे सकलार्थदे त्वं प्रभासुलावण्यदयाप्रदोग्ध्री।
सुवर्णदे त्वं सुमुखी भव श्रीर्हिरण्मयी मे नयने प्रसन्ना ।। ८४

सर्वार्थदा सर्वजगत्प्रसूतिः सर्वेश्वरी सर्वभयापहंत्री।
गर्वोन्नता त्वं सुमुखी भव श्रीर्हिरण्मयी मे नयने प्रसन्ना ।। ८५

समस्तविघ्नौघविनाशकारिणी समस्तभक्तोद्धरणे विचक्षणा।
अनन्तसौभाग्यसुखप्रदायिनी हिरण्मयी मे नयने प्रसन्ना ।। ८६

देवि प्रसीद दयनीयतमाय मह्यं
देवाधिनाथभवदेवगणाभिवंद्ये।
मातस्तथैव भव संनिहिता दृशोर्मे
पत्या समं मम मुखे भव सुप्रसन्ना ।। ८७

मा वत्स भैरभयदानकरोऽर्पितस्ते
मौलौ ममेति मयि दीनदयानुकंपे।
मातः समर्पय मुदा करुणाकटाक्षं
मांगल्यबीजमिह नः सृज जन्म मातः ।। ८८

कटाक्ष इह कामधुक् तव मनस्तु चिंतामणिः
करः सुरतरुः सदा नवनिधिस्त्वमेवेंदिरे।
भवेत्तव दयारसो मम रसायनं चान्वहं
मुखं तव कलानिधिर्विविधवांछितार्थप्रदम्॥ ८९

यथा रसस्पर्शनतोऽयसोऽपि सुवर्णता स्यात्कमले तथा ते।
कटाक्ष संस्पर्शनतो जनानाममंगलानामपि मंगलत्वम्॥

देहीति नास्तीति वचः प्रवेशाद्भीतो रमे त्वां शरणं प्रपद्ये।
अतः सदास्मिन्नभयप्रदा त्वं सहैव पत्या मयि संनिधेहि॥

कल्पद्रुमेण मणिना सहिता सुरम्या
श्रीस्ते कला मयि रसेन रसायनेन।
आस्तां यतो मम च दृक्शिरपाणिपाद
स्पृष्टाः सुवर्णवपुषः स्थिरजंगमाः स्युः॥ ९२

आद्यादिविष्णोः स्थिरधर्मपत्नी त्वमेव पत्या मयि संनिधेहि।
आद्यादिलक्ष्मि त्वदनुग्रहेण पदे पदे मे निधिदर्शनं स्यात्॥ ९३

आद्यादिलक्ष्मीहृदयं पठेद्यः स राज्यलक्ष्मीमचलां तनोति।
महादरिद्रोऽपि भवेद्धनाढ्यस्तदन्वये श्रीः स्थिरतां प्रयाति॥ ९४

यस्य स्मरणमात्रेण तुष्टा स्याद्विष्णुवल्लभा।
तस्याभीष्टं ददत्याशु तं पालयति पुत्रवत्॥ ९५

इदं रहस्यं हृदयं सर्वकामफलप्रदम्।
जपः पंचसहस्रं तु पुरश्चरणमुच्यते॥ ९६

त्रिकालमेककालं वा नरो भक्तिसमन्वितः।
यः पठेच्छृणुयाद्वापि स याति परमां श्रियम्॥ ९७

महालक्ष्मीं समुद्दिश्य निशि भार्गववासरे।
इदं श्रीहृदयं जप्त्वा पञ्चवारं धनी भवेत्॥ ९८

अनेन हृदयेनान्नं गर्भिण्या अभिमंत्रितम्।
ददाति तत्कुले पुत्रो जायते श्रीपतिः स्वयम्॥ ९९

नरेण वाऽथवा नार्या लक्ष्मीहृदयमंत्रिते।
जले पीते च तद्वंशे मंदभाग्यो न जायते॥ १००

य आश्विने मासि च शुक्लपक्षे रमोत्सवे संनिहितैकभक्त्या।
पठेत्तथैकोत्तरवारवृद्ध्या लभेत्स सौवर्णमयीं सुवृष्टिम्॥ १०१

य एकभक्तोऽन्वहमेकवर्षं विशुद्धधीः सप्ततिवारजापी।
स मंदभाग्योऽपि रमाकटाक्षाद्भवेत्सहस्राक्षशताधिकश्रीः॥ १०२

श्रीशांघ्रिभक्तिं हरिदासदास्यं प्रपन्नमंत्रार्थदृढैकनिष्ठाम्।
गुरोः स्मृतिं निर्मलबोधबुद्धिं प्रदेहि मातः परमं पदं श्रीः॥ १०३

पृथ्वीपतित्वं पुरुषोत्तमत्वं विभूतिवासं विविधार्थसिद्धिम्।
संपूर्णकीर्तिं बहुवर्षभोगं प्रदेहि मे देवि पुनःपुनस्त्वम्॥ १०४

वादार्थसिद्धिं बहुलोकवश्यं वयःस्थिरत्वं ललनासु भोगम्।
पौत्रादिलब्धिं सकलार्थसिद्धिं प्रदेहि मे भार्गवि जन्मजन्मनि॥

सुवर्णवृद्धिं कुरु मे गृहे श्रीर्विभूतिवृद्धिं कुरु मे गृहे श्रीः॥ १०६

अथ शिरोबीजम् ओं यंहंकंलंपंश्रीं

ध्यायेल्लक्ष्मीं प्रहसितमुखीं कोटिबालार्कभासां
विद्युद्वर्णांबरवरधरां भूषणाढ्यां सुशोभाम्।
बीजापूरं सरसिजयुगं बिभ्रतीं स्वर्णपात्रं
भर्त्रा युक्तां मुहुरभयदां मह्यमप्यच्युतश्रीः॥ १०७

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा॥ १०८

(अथर्वणरहस्ये)

## त्रैलोक्यमोहनं

# नृसिंहकवचम् - १

नारद उवाच

इन्द्रादिदेववृन्देश ईड्येश्वर जगत्पते।
महाविष्णोर्नृसिंहस्य कवचं ब्रूहि मे प्रभो ॥ १

यस्य प्रपठनाद्विद्वांस्त्रैलोक्यविजयी भवेत्।
ब्रह्मोवाच।
शृणु नारद वक्ष्यामि पुत्रश्रेष्ठ तपोधन।
कवचं नरसिंहस्य त्रैलोक्यविजयी भवेत् ॥ २

स्रष्टाऽहं जगतां वत्स पठनाद्धारणाद्यतः।
लक्ष्मीर्जगत्त्रयं पाति संहर्ता च महेश्वरः ॥ ३

पठनाद्धारणाद्देवा बहवश्च दिगीश्वराः।
ब्रह्ममन्त्रमयं वक्ष्ये भ्रान्त्यादिविनिवारकम् ॥ ४

यस्य प्रसादाद् दुर्वासास्त्रैलोक्यविजयी भवेत्।
पठनाद्धारणाद्यस्य शास्ता च क्रोधभैरवः ॥ ५

त्रैलोक्यविजयस्यापि कवचस्य प्रजापतिः।
ऋषिश्छन्दस्तु गायत्री नृसिंहो देवता विभुः ॥ ६

क्ष्रौं बीजं मे शिरः पातु चन्द्रवर्णो महामनुः ॥ ७

ओं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यम् ॥ ८

द्वात्रिंशदक्षरो मन्त्रो मन्त्रराजः सुरद्रुमः।
कण्ठं पातु ध्रुवं क्ष्रौं हृद्भगवते चक्षुषी मम ॥ ९

नरसिंहाय च ज्वालामालिने पातु कर्णकम्।
दीपदंष्ट्राय च तथा अग्निनेत्राय नासिकाम्।। १०

सर्वरक्षोघ्नाय तथा सर्वभूतहिताय च।
सर्वज्वरविनाशाय दहदहपदद्धयम्।। ११

रक्षरक्ष वर्ममन्त्रः स्वाहा पातु मुखं मम।
तारादिरामचन्द्राय नमः पातु हृदं मम।। १२

क्लीं पायात्पार्श्वयुग्मं च तारो नमः पदं पतः।
नारायणाय नाभिं च आं ह्रीं क्रौं क्ष्रौं च हुं फट्।। १३

षडक्षरः कटिं पातु ओं नमो भगवते पदम्।
वासुदेवाय च पृष्ठं क्लीं कृष्णाय क्लीं ऊरुद्धयम्।। १४

क्लीं कृष्णाय सदा पातु जानुनी च मनूत्तमः।
क्लीं ग्लौं क्लीं श्यामलाङ्गाय नमः पायात्पदद्धयम्।। १५

क्ष्रौं नृसिंहाय क्ष्रौं ह्रीं च सर्वाङ्गे मे सदाऽवतु।
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्।। १६

तव स्नेहान्मया ख्यातं प्रवक्तव्यं न कस्यचित्।
गुरुपूजां विधायाथ गृह्णीयात्कवचं ततः।। १७

सर्वपुण्ययुतो भूत्वा सर्वसिद्धियुतो भवेत्।
शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः।। १८

हवनादीन्दशांशेन कृत्वा सत्साधकोत्तमः।
ततस्तु सिद्धकवचो रूपेण मदनोपमः।। १९

स्पर्धामुद्धूय भवने लक्ष्मीर्वाणी वसेन्मुखे।
पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत्।। २०

अपि वर्षसहस्राणां पूजानां फलमाप्नुयात्।
भूर्जे विलिख्य गुटिकां स्वर्णस्थां धारयेद्यदि॥ २१

कण्ठे वा दक्षिणे बाहौ नरसिंहो भवेत्स्वयम्।
योषिद्वामभुजे चैव पुरुषो दक्षिणे करे॥ २२

बिभृयात्कवचं पुण्यं सर्वसिद्धियुतो भवेत्।
काकवन्ध्या च या नारी मृतवत्सा च या भवेत्॥ २३

जन्मवन्ध्या नष्टपुत्रा बहुपुत्रवती भवेत्।
कवचस्य प्रसादेन जीवन्मुक्तो भवेन्नरः॥ २४

त्रैलोक्यं क्षोभयत्येवं त्रैलोक्यविजयी भवेत्।
भूतप्रेतपिशाचाश्च राक्षसा दानवाश्च ये॥ २५

तं दृष्ट्वा प्रपलायन्ते देशाद्देशान्तरं ध्रुवम्।
यस्मिग्गृहे च कवचं ग्रामे वा यदि तिष्ठति।
तद्देशं तु परित्यज्य प्रयांति ह्यतिदूरतः॥ २६

(ब्रह्मसंहितायां)

## नृसिंहकवचम् - २

नृसिंहकवचं वक्ष्ये प्रह्लादेनोदितं पुरा।
सर्वरक्षाकरं पुण्यं सर्वोपद्रवनाशनम्॥ १

सर्वसम्पत्करं चैव स्वर्गमोक्षप्रदायकम्।
ध्यात्वा नृसिंहं देवेशं हेमसिंहासनस्थितम्॥ २

विवृतास्यं त्रिणयनं शरदिन्दुसमप्रभम्।
लक्ष्म्यालिङ्गितवामाङ्गं विभूतिभिरुपाश्रितम्॥ ३

चतुर्भुजं कोमलाङ्गं स्वर्णकुण्डलशोभितम् ।
सरोजशोभितोरस्कं रत्नकेयूरमुद्रितम् ।। ४

तप्तकाञ्चनसङ्काशं पीतनिर्मलवाससम् ।
इन्द्रादिसुरमौलिस्थस्फुरन्माणिक्यदीप्तिभिः ।। ५

विराजितपदद्वन्द्वं शङ्खचक्रादिहेतिभिः ।
गरुत्मता सविनयं स्तूयमानं मुदाऽन्वितम् ।। ६

स्वहृत्कमलसंवासं कृत्वा तु कवचं पठेत् ।
नृसिंहो मे शिरः पातु लोकरक्षात्मसम्भवः ।। ७

सर्वगोऽपि स्तम्भवासः फालं मे रक्षतु ध्वनिम् ।
नृसिंहो मे दृशौ पातु सोमसूर्याग्निलोचनः ।। ८

स्मृतिं मे पातु नृहरिर्मुनिवर्यस्तुतिप्रियः ।
नासां मे सिंहनासस्तु मुखं लक्ष्मीमुखप्रियः ।। ९

सर्वविद्याधिपः पातु नृसिंहो रसनां मम ।
वक्त्रं पात्विन्दुवदनस्सदा प्रह्लादवन्दितः ।। १०

नृसिंहः पातु मे कण्ठं स्कन्धौ भूभरणान्तकृत् ।
दिव्यास्त्रशोभितभुजो नृसिंहः पातु मे भुजौ ।। ११

करौ मे देववरदो नृसिंहः पातु सर्वतः ।
हृदयं योगिसाध्यश्च निवासं पातु मे हरिः ।। १२

मध्यं पातु हिरण्याक्षवक्षःकुक्षिविदारणः ।
नाभिं मे पातु नृहरिस्स्वनाभिब्रह्मसंस्तुतः ।। १३

ब्रह्माण्डकोटयः कट्यां यस्यासौ पातु मे कटिम् ।
गुह्यं मे पातु गुह्यानां मन्त्राणां गुह्यरूपधृक् ।। १४

ऊरू मनोभवः पातु जानुनी नररूपधृक्।
जङ्घे पातु धराभारहर्ता योऽसौ नृकेसरी॥ १५

सुरराज्यप्रदः पातु पादौ मे नृहरीश्वरः।
सहस्रशीर्षा पुरुषः पातु मे सर्वशस्तनुम्॥ १६

महोग्रः पूर्वतः पातु महावीराग्रजोऽग्नितः।
महाविष्णुर्दक्षिणे तु महाज्वालस्तु नैर्ऋतौ॥ १७

पश्चिमे पातु सर्वेशो दिशि मे सर्वतोमुखः।
नृसिंहः पातु वायव्यां सौम्यां भूषणविग्रहः॥ १८

ईशान्यां पातु भद्रो मे सर्वमङ्गलदायकः।
संसाराभयदः पातु मृत्योर्मृत्युर्नृकेसरी॥ १९

इदं नृसिंहकवचं प्रह्लादमुखमण्डितम्।
भक्तिमान्यः पठेन्नित्यं सर्वपापैः प्रमुच्यते॥ २०

पुत्रवान् धनवांल्लोके दीर्घायुरुपजायते।
यं यं कामयते कामं तं तं प्राप्नोत्यसंशयम्॥ २१

सर्वत्र जयमाप्नोति सर्वत्र विजयी भवेत्।
भूम्यन्तरिक्षदिव्यानां ग्रहाणां विनिवारणम्॥ २२

वृश्चिकोरगसम्भूतविषापहरणं परम्।
ब्रह्मराक्षस यक्षाणां दूरोत्सारणकारणम्॥ २३

भूर्जे वा तालपत्रे वा कवचं लिखितं शुभम्।
करमूले धृतं येन सिध्येयुः कर्मसिद्धयः॥ २४

देवासुरमनुष्येषु स्वं स्वमेव जयं लभेत्।
एकसन्ध्यं त्रिसन्ध्यं वा यः पठेन्नियतो नरः॥ २५

सर्वमङ्गलमाङ्गल्यं भुक्तिं मुक्तिं च विन्दति।
द्वात्रिंशच्च सहस्राणि पठेच्छुद्धात्मनां नृणाम्।। २६

कवचस्यास्य मन्त्रस्य मन्त्रसिद्धिः प्रजायते।
अनेन मन्त्रराजेन कृत्वा भस्माभिमन्त्रणम्।। २७

तिलकं विन्यसेद्यस्तु तस्य ग्रहभयं हरेत्।
त्रिवारं जपमानस्तु दत्तं वार्यभिमन्त्र्य च।। २८

प्राशयेद्यो नरो मन्त्रं नृसिंहध्यानमाचरेत्।
तस्य रोगाः प्रणश्यन्ति ये च स्युः कुक्षिसम्भवाः।। २९

किमत्र बहुनोक्तेन नृसिंहसदृशो भवेत्।
मनसा चिन्तितं यत्तु स तच्चाप्नोत्यसंशयम्।। ३०

गर्जन्तं गर्जयन्तं निजभुजपटलं स्फोटयन्तं हटन्तं
रूप्यन्तं तापयन्तं दिवि भुवि दितिजं क्षेपयन्तं क्षिपन्तम्।
क्रन्दन्तं रोषयन्तं दिशि दिशि सततं संहरन्तं भरन्तं
वीक्षन्तं घूर्णयन्तं शरनिकरशतैर्दिव्यसिंहं नमामि।। ३१

(श्रीब्रह्माण्डपुराणे)

## बालग्रहरक्षास्तोत्रम्

आदाय कृष्णं संत्रस्ता यशोदापि द्विजोत्तम।
गोपुच्छं भ्राम्य हस्तेन बालदोषमपाकरोत्।। १

गोकरीषमुपादाय नंदगोपोऽपि मस्तके।
कृष्णस्य प्रददौ रक्षां कुर्वित्येतदुदीरयन्।। २

रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः।
यस्य नाभिसमुद्भूतपङ्कजादभवज्जगत्।। ३

येन दंष्ट्राग्रविधृता धारयत्यवनी जगत्।
वराहरूपधृग्देवस्स त्वां रक्षतु केशवः ॥ ४

नखाङ्कुरविनिर्भिन्नवैरिवक्षःस्थलो विभुः।
नृसिंहरूपी सर्वत्र रक्षतु त्वां जनार्दनः ॥ ५

वामनो रक्षतु सदा भवंतं यः क्षणादभूत्।
त्रिविक्रमः क्रमाक्रान्तत्रैलोक्यः स्फुरदायुधः ॥ ६

शिरस्ते पातु गोविंदः कंठं रक्षतु केशवः।
गुह्यं सजठरं विष्णुर्जंघे पादौ जनार्दनः ॥ ७

मुखं बाहू प्रबाहू च मनस्सर्वेन्द्रियाणि च।
रक्षत्वव्याहतैश्वर्यस्तव नारायणोऽव्ययः ॥ ८

शङ्खचक्रगदापाणेश्शंखनादहताः क्षयम्।
गच्छन्तु प्रेतकूष्मांडराक्षसा ये तवाहिताः ॥ ९

त्वां पातु दिक्षु वैकुण्ठो विदिक्षु मधुसूदनः।
हृषीकेशोऽम्बरे भूमौ रक्षतु त्वां महीधरः ॥ १०

एवं कृतस्वस्त्ययनो नंदगोपेन बालकः।
शायितश्शकटस्याधो बालपर्यङ्किकातले ॥ ११

वनमाली गदी शार्ङ्गी शंखी चक्री च नंदकी।
श्रीमन्नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥ १२

## श्रीबालरक्षा

अव्यादजोंघ्रिमणिमांस्तव जान्वथोरू
यज्ञोऽच्युतः कटितटं जठरं हयास्यः।
हृत्केशवस्त्वदुर ईश इनस्तु कंठं
विष्णुर्भुजं मुखमुरुक्रम ईश्वरः कम्॥ १

चक्र्यग्रतः सहगदो हरिरस्तु पश्चात्
त्वत्पार्श्वयोर्धनुरसी मधुहाऽजनश्च।
कोणेषु शंख उरुगाय उपर्युपेंद्रः
तार्क्ष्यः क्षितौ हलधरः पुरुषः समंतात्॥ २

इन्द्रियाणि हृषीकेशः प्राणान्नारयणोऽवतु।
श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोऽवतु॥ ३

पृश्निगर्भश्च ते बुद्धिमात्मानं भगवान्परः।
क्रीडंतं पातु गोविंदः शयानं पातु माधवः॥ ४

व्रजंतमव्याद्वैकुंठ आसीनं त्वां श्रियःपतिः।
भुंजानं यज्ञभुक् पातु सर्वग्रहभयंकरः॥ ५

डाकिन्यो यातुधान्यश्च कूष्मांडा येऽर्भकग्रहाः।
भूतप्रेतपिशाचाश्च यक्षरक्षो विनायकाः॥ ६

कोटरारेवती ज्येष्ठा पूतनामातृकादयः।
उन्मादा ये ह्यपस्मारा देहप्राणेंद्रियद्रुहः॥ ७

स्वप्नदृष्टा महोत्पाता वृद्धबालग्रहाश्च ये।
सर्वे नश्यंतु ते विष्णोर्नामग्रहणभीरवः॥ ८

(श्रीमद्भागवते)

## महालक्ष्मीकवचम्

अस्य श्रीमहालक्ष्मीकवचमन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, महालक्ष्मीर्देवता, महालक्ष्मीप्रीत्यर्थं जपे विनियोगः

ब्रह्मोवाच

शिरो मे विष्णुपत्नी च ललाटममृतोद्भवा।
चक्षुषी सुविशालाक्षी श्रवणे सागराम्बुजा॥ १

घ्राणं पातु वरारोहा जिह्वामाम्नायरूपिणी।
मुखं पातु महालक्ष्मीः कण्ठं वैकुण्ठवासिनी ॥ २

स्कन्धौ मे जानकी पातु भुजौ भार्गवनन्दिनी।
बाहू द्वौ द्रविणी पातु करौ हरिवराङ्गना ॥ ३

वक्षः पातु च श्रीर्देवी हृदयं हरिसुन्दरी।
कुक्षिं च वैष्णवी पातु नाभिं भुवनमातृका ॥ ४

कटिं च पातु वाराही सक्थिनी देवदेवता।
ऊरू नारायणी पातु जानुनी चन्द्रसोदरी ॥ ५

इन्दिरा पातु जंघे मे पादौ भक्तनमस्कृता।
नखान् तेजस्विनी पातु सर्वाङ्गं करुणामयी ॥ ६

ब्रह्मणा लोकरक्षार्थं निर्मितं कवचं श्रियः।
ये पठन्ति महात्मानस्ते च धन्या जगत्त्रये ॥ ७

कवचेनावृताङ्गानां जनानां जयदा सदा।
मातेव सर्वसुखदा भव त्वममरेश्वरी ॥ ८

भूयः सिद्धिमवाप्नोति पूर्वोक्तं ब्रह्मणा स्वयम्।
लक्ष्मीर्हरिप्रिया पद्मा एतन्नामत्रयं स्मरन् ॥ ११

नामत्रयमिदं जप्त्वा स याति परमां श्रियम्।
यः पठेत्स च धर्मात्मा सर्वान्कामानवाप्नुयात् ॥ १२

(श्रीब्रह्मपुराणे)

# राधाकवचम्

पार्वत्युवाच।

कैलासवासिन् भगवन् भक्तानुग्रहकारक।
राधिकाकवचं पुण्यं कथयस्व मम प्रभो॥ १

यद्यस्ति करुणा नाथ त्राहि मां दुःखतो भयात्।
त्वमेव शरणं नाथ शूलपाणे पिनाकधृक्॥ २

शिव उवाच

शृणुष्व गिरिजे तुभ्यं कवचं पूर्वसूचितम्।
सर्वरक्षाकरं पुण्यं सर्वहत्याहरं परम्॥ ३

हरिभक्तिप्रदं साक्षाद्भुक्तिमुक्तिप्रसाधनम्।
त्रैलोक्याकर्षणं देवि हरिसान्निध्यकारकम्॥ ४

सर्वत्र जयदं देवि सर्वशत्रुभयापहम्।
सर्वेषां चैव भूतानां मनोवृत्तिहरं परम्॥ ५

चतुर्धा मुक्तिजनकं सदानंदकरं परम्।
राजसूयाश्वमेधानां यज्ञानां फलदायकम्॥ ६

ऋषिरस्य महादेवोऽनुष्टप् छंदश्च कीर्तितम्।
राधाऽस्य देवता प्रोक्ता रां बीजं कीलकं स्मृतम्॥ ७

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः।
श्रीराधा मे शिरः पातु ललाटं राधिका तथा॥ ८

श्रीमती नेत्रयुगलं कर्णौ गोपेंद्रनंदिनी।
हरिप्रिया नासिकां च भ्रूयुगं शशिशोभना।। ९

ओष्ठं पातु कृपादेवी अधरं गोपिका तथा।
वृषभानुसुता दन्तांश्चिबुकं गोपनंदिनी।। १०

चंद्रावली पातु गंडं जिह्वां कृष्णप्रिया तथा।
कंठं पातु हरिप्राणा हृदयं विजया तथा।। ११

बाहू द्वौ चंद्रवदना उदरं सुबलस्वसा।
कोटियोगान्विता पातु पादौ सौभद्रिका तथा।। १२

नखांश्चंद्रमुखी पातु गुल्फौ गोपालवल्लभा।
नखान् विधुमुखी देवी गोपी पादतलं तथा।। १३

शुभप्रदा पातु पृष्ठं कुक्षौ श्रीकांतवल्लभा।
जानुदेशं जया पातु हरिणी पातु सर्वतः।। १४

वाक्यं वाणी सदा पातु धनागारं धनेश्वरी।
पूर्वां दिशं कृष्णरता कृष्णप्राणा च पश्चिमाम्। १५

उत्तरां हरिता पातु दक्षिणां वृषभानुजा।
चंद्रावली नैशमेव दिवा क्ष्वेडितमेखला।। १६

सौभाग्यदा मध्यदिने सायाह्ने कामरूपिणी।
रौद्री प्रातः पातु मां हि गोपिनी रजनीक्षये।। १७

हेतुदा संगवे पातु केतुमाला दिवार्धके।
शेषाऽपराह्नसमये शमिता सर्वसंधिषु।। १८

योगिनी भोगसमये रतौ रतिप्रदा सदा।
कामेशी कौतुके नित्यं योगे रत्नावली मम ॥ १९

सर्वदा सर्वकार्येषु राधिका कृष्णमानसा।
इत्येतत्कथितं देवि कवचं परमाद्भुतम् ॥ २०

सर्वरक्षाकरं नाम महारक्षाकरं परम्।
प्रातर्मध्याह्नसमये सायाह्ने प्रपठेद्यदि ॥ २१

सर्वार्थसिद्धिस्तस्य स्याद्यद्यन्मनसि वर्तते।
राजद्वारे सभायां च संग्रामे शत्रुसंकटे ॥ २२

प्राणार्थनाशसमये यः पठेत्प्रयतो नरः।
तस्य सिद्धिर्भवेद्देवि न भयं विद्यते क्वचित् ॥ २३

आराधिता राधिका च तेन सत्यं न संशयः।
गंगास्नानाद्धरेर्नामग्रहणाद्यत्फलं लभेत् ॥ २४

तत्फलं तस्य भवति यः पठेत्प्रयतः शुचिः।
हरिद्रारोचनाचंद्रमंडितं हरिचंदनम् ॥ २५

कृत्वा लिखित्वा भूर्जे च धारयेन्मस्तके भुजे।
कंठे वा देवदेवेशि स हरिर्नात्र संशयः ॥ २६

कवचस्य प्रसादेन ब्रह्मा सृष्टिं स्थितिं हरिः।
संहारं चाहं नियतं करोमि कुरुते तथा ॥ २७

वैष्णवाय विशुद्धाय विरागगुणशालिने।
दद्यात्कवचमव्यग्रमन्यथा दोषमाप्नुयात् ॥ २८

(श्रीनारदपंचरात्रे ज्ञानामृतसारे)

# श्रीरामकवचम्

अगस्त्य उवाच—

आजानुबाहुमरविंददलायताक्षं
आजन्मशुद्धरसहासमुखप्रसादम्।
श्यामं गृहीतशरचापमुदाररूपं
रामं सराममभिराममनुस्मरामि ॥ १

शृणु वक्ष्याम्यहं सर्वं सुतीक्ष्ण मुनिसत्तम।
श्रीरामकवचं पुण्यं सर्वकामप्रदायकम्॥ २

अद्वैतानन्द चैतन्यः शुद्ध सत्वैकलक्षणः।
बहिरन्तः सुतीक्ष्णात्र रामचन्द्रः प्रकाशते॥ ३

तत्वविद्यार्थिनो नित्यं रमन्ते चित्सुखात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते॥ ४

जय रामेति यन्नाम कीर्तयन्नाभिवर्णयेत्।
सर्वपापैर्विनिर्मुक्तो याति विष्णोः परं पदम्॥ ५

श्रीरामेति परं मन्त्रं तदेव परमं पदम्।
तदेव तारकं विद्धि जन्ममृत्यभयापहम्।
श्रीरामेति वदन् ब्रह्मभावमाप्नोत्यसंशयम्॥ ६

अस्य श्रीरामकवचस्य अगस्त्य ऋषिः। अनुष्टुप् छन्दः। सीतालक्ष्मणोपेतः श्रीरामचन्द्रो देवता। श्रीरामचन्द्रप्रसादसिद्ध्यर्थे जपे विनियोगः।

अथ ध्यानम्।

नीलजीमूत-संकाशं विद्युद्वर्णांबरावृतम्।
कोमलांगं विशालाक्षं युवानमतिसुन्दरम्।। ७

सीतासौमित्रि सहितं जटामुकुटधारिणम्।
सासितूणधनुर्बाणपाणिं दानवमर्दनम्।। ८

यदा चोरभये राजभये शत्रुभये तथा।
ध्यात्वा रघुपतिं क्रुद्धं कालानलसमप्रभम्।। ९

चीरकृष्णाजिनधरं भस्मोद्धूलितविग्रहम्।
आकर्णाकृष्टविशिखं कोदंडभुजमंडितम्।। १०

रणे रिपून् रावणादींस्तीक्ष्णमार्गणवृष्टिभिः।
संहरंतं महावीरमुग्रमैन्द्ररथस्थितम्।। ११

लक्ष्मणाद्यैर्महावीरैर्वृतं हनुमदादिभिः।
सुग्रीवाद्यैर्महावीरैः शैलवृक्षकरोद्यतैः।। १२

वेगात्करालहुंकारैर्भुभुक्कारमहारवैः।
नदद्भिः परिधावद्भिः समरे रावणं प्रति।। १३

श्रीराम शत्रुसंधान्मे हन मर्दय खादय।
भूतप्रेतपिशाचादीन् श्रीरामाशु विनाशय।। १४

एवं ध्यात्वा जपेद्रामकवचं सिद्धिदायकम्।
सुतीक्ष्ण वज्रकवचं शृणु वक्ष्याम्यनुत्तमम्।। १५

श्रीरामः पातु मे मूर्ध्नि पूर्वे च रघुवंशजः।
दक्षिणे मे रघुवरः पश्चिमे पातु पावनः।। १६

उत्तरे मे रघुपतिर्भालं दशरथात्मजः ।
भ्रुवोर्दूर्वादलश्यामस्तयोर्मध्ये जनार्दनः ।। १७

श्रोत्रं मे पातु राजेन्द्रो दृशौ राजीवलोचनः ।
घ्राणं मे पातु राजर्षिर्गण्डौ मे जानकीपतिः ।। १८

कर्णमूले खरध्वंसी भालं मे रघुवल्लभः ।
जिह्वां मे वाक्पतिः पातु दंतपंक्ती रघूत्तमः ।। १९

ओष्ठौ श्रीरामचन्द्रो मे मुखं पातु परात्परः ।
कंठं पातु जगद्वंद्यः स्कंधौ मे रावणांतकः ।। २०

धनुर्बाणधरः पातु भुजौ मे वालिमर्दनः ।
सर्वाण्यंगुलिपर्वाणि हस्तौ मे राक्षसांतकः ।। २१

वक्षो मे पातु काकुत्स्थः पातु मे हृदयं हरिः ।
स्तनौ सीतापतिः पातु पार्श्वं मे जगदीश्वरः ।। २२

मध्यं मे पातु लक्ष्मीशो नाभिं मे रघुनायकः ।
कौसल्येयः कटिं पातु पृष्ठं दुर्गतिनाशनः ।। २३

गुह्यं पातु हृषीकेशः सक्थिनी सत्यविक्रमः ।
ऊरू शार्ङ्गधरः पातु जानुनी हनुमत्प्रियः ।। २४

जंघे पातु जगद्व्यापी पादौ मे ताटकांतकः ।
सर्वांगं पातु मे विष्णुः सर्वसंधीननामयः ।। २५

ज्ञानेन्द्रियाणि प्राणादीन् पातु मे मधुसूदनः ।
पातु श्रीरामभद्रो मे शब्दादीन्विषयानपि ।। २६

द्विपदादीनि भूतानि मत्संबंधीनि यानि च ।
जामदग्न्यमहादर्पदलनः पातु तानि मे ।। २७

सौमित्रिपूर्वजः पातु वागादीनीन्द्रियाणि च।
रोमांकुराण्यशेषाणि पातु सुग्रीवराज्यदः ।। २८

वाङ्मनोबुद्ध्यहंकारैर्ज्ञानाज्ञानकृतानि च।
जन्मांतरकृतानीह पापानि विविधानि च।। २९

तानि सर्वाणि दग्ध्वाशु हरकोदण्डखण्डनः ।
पातु मां सर्वतो रामः शार्ङ्गबाणधरः सदा।। ३०

इति श्रीरामचन्द्रस्य कवचं वज्रसंमितम्।
गुह्याद्गुह्यतमं दिव्यं सुतीक्ष्ण मुनिसत्तम।। ३१

यः पठेच्छृणुयाद्वापि श्रावयेद्वा समाहितः।
स याति परमं स्थानं रामचन्द्रप्रसादतः ।। ३२

महापातकयुक्तो वा गोघ्नो वा भ्रूणहा तथा।
श्रीरामचन्द्रकवचपठनाच्छुद्धिमाप्नुयात्।। ३३

ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ।

(आनन्दरामायणतः)

## सीताकवचम्

अगस्त्य उवाच—

सम्यक्पृष्टं त्वया वत्स सावधानमनाः शृणु ।
आदौ वक्ष्याम्यहं रम्यं सीतायाः कवचं शुभम्।। १

या सीताऽवनिसंभवाऽथ मिथिलापालेन संवर्धिता
पद्माक्ष नृपतेः सुताऽनलगता या मातुलिङ्गोद्भवा।
या रत्ने लयमागता जलनिधौ या वेदवारं गता
लङ्कां सा मृगलोचना शशिमुखी मां पातु रामप्रिया।।

अस्य श्री सीताकवचस्तोत्रमहामन्त्राय अगस्त्य ऋषिः । श्री सीता देवता । अनुष्टुप् छन्दः । रमेति बीजम् । जनकजेति शक्तिः । अवनिजेति कीलकम् । पद्माक्षनृपतेः सुतेत्यस्त्रम् । मातुलिङ्गीति कवचम् । मूलकासुरघातिनीति मन्त्रः । श्रीसीतारामचन्द्रप्रीत्यर्थं सकलकामनासिद्ध्यर्थं जपे विनियोगः । ओं ह्रीं सीतायै अङ्गुष्ठाभ्यां नमः । ओं ह्रीं रमायै तर्जनीभ्यां नमः । ओं ह्रूं जनकजायै मध्यमाभ्यां नमः । ओं ह्रैं अवनिजायै अनामिकाभ्यां नमः । ओं ह्रौं पद्माक्षसुतायै कनिष्ठिकाभ्यां नमः । ओं ह्रः मातुलिङ्ग्यै करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ध्यानम्–

सीतां कमलपत्राक्षीं विद्युत्पुञ्जसमप्रभाम् ।
द्विभुजां सुकुमाराङ्गीं पीत कौशेयवासिनीम् ।। १

सिंहासने रामचन्द्रवामभागस्थितां वराम् ।
नानालङ्कारसंयुक्तां कुण्डलद्वयधारिणीम् ।। २

चूडाकङ्कणकेयूर रशनानूपुरान्विताम् ।
सीमन्ते रविचन्द्राभ्यां निटिले तिलकेन च ।। ३

मयूराभरणेनापि घ्राणेऽतिशोभितां शुभाम् ।
हरिद्रां कज्जलं दिव्यं कुङ्कुमं कुसुमानि च ।। ४

बिभ्रन्तीं सुरभिद्रव्यं सुगन्धस्नेहमुत्तमम् ।
स्मितानना गौरवर्णा मन्दारकुसुमं करे ।। ५

बिभ्रन्तीमपरे हस्ते मातुलिङ्गमनुत्तमम् ।
रम्यवासां च बिंबोष्ठीं चन्द्रवाहनलोचनाम् ।। ६

कलानाथसमानास्यां कलकण्ठ मनोरमाम्।
मातुलिङ्गोद्भवां देवीं पद्माक्षदुहितां शुभाम्॥ ७

मैथिलीं रामदयितां दासीभिः परिवीजिताम्।
एवं ध्यात्वा जनकजां हेमकुंभ पयोधराम्।
सीतायाः कवचं दिव्यं पठनीयं शुभावहम्॥ ८

श्रीसीता पूर्वतः पातु दक्षिणेऽवतु जानकी।
प्रतीच्यां पातु वैदेही पातूदीच्यां च मैथिली॥ ९

अधः पातु मातुलिङ्गी ऊर्ध्वं पद्माक्षजाऽवतु।
मध्येऽवनिसुता पातु सर्वतः पातु मां रमा॥ १०

स्मितानना शिरः पातु पातु फालं नृपात्मजा।
पद्माऽवतु भ्रुवोर्मध्ये मृगाक्षी नयनेऽवतु॥ ११

कपोले कर्णमूले च पातु श्रीरामवल्लभा।
नासाग्रं सात्विकी पातु पातु वक्त्रं तु राजसी॥ १२

तामसी पातु मद्वाणीं पातु जिह्वां पतिव्रता।
दन्तान्पातु महामाया चिबुकं कनकप्रभा॥ १३

पातु कण्ठं सौम्यरूपा स्कन्धौ पातु सुरार्चिता।
भुजौ पातु वरारोहा करौ कङ्कणमण्डिता॥ १४

नखान् रत्ननखा पातु कुक्षिं पातु लघूदरा।
वक्षः पातु रामपत्नी पार्श्वे रावणमोहिनी॥ १५

पृष्ठदेशे वह्निगुप्ताऽवतु मां सर्वदैव हि।
दिव्यप्रभा पातु नाभिं कटिं राक्षसमोहिनी॥ १६

गुह्यं पातु रत्नगुप्ता लिङ्गं पातु हरिप्रिया।
ऊरू रक्षतु रंभोरूर्जानुनी प्रियभाषिणी॥ १७

जंघे पातु सदा सुभ्रूः गुल्फौ चामरवीजिता।
पादौ लवसुता पातु पात्वङ्गानि कुशांबिका।। १८

पादाङ्गुली सदा पातु मम नूपुरनिःस्वना।
रोमाण्यवतु मे नित्यं पीतकौशेय वासिनी।। १९

रात्रौ पातु कालरूपा दिने दानैकतत्परा।
सर्वकालेषु मां पातु मूलकासुरघातिनी।। २०

एवं सुतीक्ष्ण सीतायाः कवचं ते मयेरितम्।
इदं प्रातः समुत्थाय स्नात्वा नित्यं पठेत्तु यः।। २१

जानकीं पूजयित्वा स सर्वान्कामानवाप्नुयात्।
धनार्थी प्राप्नुयाद् द्रव्यं पुत्रार्थी पुत्रमाप्नुयात्।। २२

स्त्रीकामार्थी शुभां नारीं सुखार्थी सौख्यमाप्नुयात्।
अष्टवारं जपनीयं सीतायाः कवचं सदा।। २३

अष्ट भूसुरसीतायै नार्यै प्रीत्याऽर्पयेत्सदा।
फलपुष्पादिकादीनि यानि यानि पृथक् पृथक्।। २४

सीतायाः कवचं चेदं पुण्यं पातकनाशनम्।
ये पठन्ति नरा भक्त्या ते धन्या मानवा भुवि।। २५

पठन्ति रामकवचं सीतायाः कवचं विना।
तथा विना लक्ष्मणस्य कवचेन वृथा स्मृतम्।। २६

तस्मात्सदा नरैर्जाप्यं कवचानां चतुष्टयम्।
आदौ तु वायुपुत्रस्य लक्ष्मणस्य ततः परम्।। २७

ततः पठेच्च सीतायाः श्रीरामस्य ततः परम्।
एवं सदा जपनीयं कवचानां चतुष्टयम्।। २८

— आनन्दरामायणतः

# भरतकवचम्

कैकेयीतनयं सदा रघुवरन्यस्तेक्षणं श्यामलं
सप्तद्वीपपतेर्विदेहतनयाकान्तस्य वाक्ये रतम्।
श्रीसीताधवसव्यपार्श्वनिकटे स्थित्वा वरं चामरं
धृत्वा दक्षिणसत्करेण भरतं तं वीजयन्तं भजे ।।

अस्य श्रीभरतकवचमंत्रस्यागस्त्य ऋषिः श्रीभरतो देवता। अनुष्टुप् छन्दः। शङ्ख इति बीजम्। कैकेयीनन्दन इति शक्तिः। भरतखण्डेश्वर इति कीलकम्। रामानुज इत्यस्त्रम्। सप्तद्वीपेश्वरदास इति कवचम्। रामांशज इति मन्त्रः। श्रीभरतप्रीत्यर्थं सकलमनोरथसिद्ध्यर्थं जपे विनियोगः। ओं भरताय अङ्गुष्ठाभ्यां नमः। ओं शङ्खाय तर्जनीभ्यां नमः। ओं कैकेयीनन्दनाय मध्यमाभ्यां नमः। ओं भरतखण्डेश्वराय अनामिकाभ्यां नमः। ओं रामानुजाय कनिष्ठिकाभ्यां नमः। ओं सप्तद्वीपेश्वराय करतलकरपृष्ठाभ्यां नमः। इति करन्यासः। एवं हृदयादिषडङ्गन्यासः। ओं रामांशजाय चेति दिग्बन्धः। ध्यानम्।

ओं रामचन्द्रसव्यपार्श्वे स्थितं केकयजासुतम्।
रामाय चामरेणैव वीजयन्तं मनोरमम्।। १

रत्नकुण्डलकेयूरकङ्कणादिसुभूषितम्।
पीताम्बरपरीधानं वनमालाविराजितम्।। २

माण्डवीधौतचरणं रशनानूपुरान्वितम्।
नीलोत्पलदलश्यामं द्विजराजसमाननम्।। ३

आजानुबाहुं भरतखण्डस्य प्रतिपालकम्।
रामानुजं स्मितास्यं च शत्रुघ्नपरिवन्दितम्।। ४

रामन्यस्तेक्षणं सौम्यं विद्युत्पुञ्जसमप्रभम्।
रामभक्तं महावीरं वन्दे तं भरतं शुभम्॥ ५

एवं ध्यात्वा तु भरतं रामपादेक्षणं हृदि।
कवचं पठनीयं हि भरतस्येदमुत्तमम्॥ ६

ओं पूर्वतो भरतः पातु दक्षिणे कैकेयीसुतः।
नृपात्मजः प्रतीच्यां हि पातूदीच्यां रघूत्तमः॥ ७

अधः पातु श्यामलांगश्चोर्ध्वं दशरथात्मजः।
मध्ये भरतवर्षेशः सर्वतः सूर्यवंशजः॥ ८

शिरस्तक्षपिता पातु भालं पातु हरिप्रियः।
भ्रुवोर्मध्यं जनकजावाक्यैकतत्परोऽवतु॥ ९

पातु जनकजामाता मम नेत्रे सदात्र हि।
कपोलौ माण्डवीकान्तः कर्णमूले स्मिताननः॥ १०

नासाग्रं मे सदा पातु कैकेयीतोषवर्धनः।
उदाराङ्गो मुखे पातु वाणीं पातु जटाधरः॥ ११

पातु पुष्करतातो मे जिह्वां दन्तान् प्रभामयः।
चिबुकं वल्कलधरः कण्ठं पातु वराननः॥ १२

स्कन्धौ पातु जितारातिर्भुजौ शत्रुघ्नवन्दितः।
करौ कवचधारी च नखान् खड्गधरोऽवतु॥ १३

कुक्षिं रामानुजः पातु वक्षः श्रीरामवल्लभः।
पार्श्वे राघवपार्श्वस्थः पातु पृष्ठं सुभाषणः॥ १४

जठरं च धनुर्धारी नाभिं शरकरोऽवतु।
कटिं पद्मेक्षणः पातु गुह्यं रामैकमानसः॥ १५

राममित्रं पातु लिङ्गमूरू श्रीरामसेवकः ।
नन्दिग्रामस्थितः पातु जानुनी मम सर्वदा ।। १६

श्रीरामपादुकाधारी पातु जङ्घे सदा मम ।
गुल्फौ श्रीरामबन्धुश्च पादौ पातु सुरार्चितः ।। १७

रामाज्ञापालकः पातु ममाङ्गान्यत्र सर्वदा ।
मम पादाङ्गुलीः पातु रघुवंशसुभूषणः ।। १८

रोमाणि पातु मे रम्यः पातु रात्रौ सुधीर्मम ।
तूणीरधारी दिवसं दिक्पातु मम सर्वदा ।। १९

सर्वकालेषु मां पातु पाञ्चजन्यः सदा भुवि ।
एवं श्रीभरतस्येदं सुतीक्ष्ण कवचं शुभम् ।। २०

मया प्रोक्तं तवाग्रे हि महामङ्गलकारकम् ।
स्तोत्राणामुत्तमं स्तोत्रमिदं ज्ञेयं सुपुण्यदम् ।। २१

पठनीयं सदा भक्त्या रामचन्द्रस्य हर्षदम् ।
पठित्वा भरतस्येदं कवचं रघुनन्दनः ।। २२

यथा याति परं तोषं तथा स्वकवचेन च ।
तस्मादेतत्सदा जप्यं कवचानामनुत्तमम् ।। २३

अस्यात्र पठनान्मर्त्यः सर्वान्कामानवाप्नुयात् ।
विद्याकामो लभेद्विद्यां पुत्रकामो लभेत्सुतम् ।। २४

पत्नीकामो लभेत् पत्नीं धनार्थी धनमाप्नुयात् ।
यद्यन्मनोभिलषितं तत्तत् कवचपाठतः ।। २५

लभ्यते मानवैरत्र सत्यं सत्यं वदाम्यहम् ।
तस्मात्सदा जपनीयं रामोपासकमानवैः ।। २६

(श्रीमदानन्दरामायणतः)

## लक्ष्मणकवचम्

अगस्त्य उवाच।

सौमित्रिं रघुनायकस्य चरणद्वन्द्वेक्षणं श्यामलं
बिभ्रन्तं स्वकरेण रामशिरसि च्छत्रं विचित्राम्बरम्।
बिभ्रन्तं रघुनायकस्य सुमहत्कोदण्डबाणासने
तं वन्दे कपिलेक्षणं जनकजावाक्ये सदा तत्परम्॥ १

अस्य श्रीलक्ष्मणकवचमन्त्रस्य अगस्त्य ऋषिः। अनुष्टुप् छन्दः। श्री लक्ष्मणो देवता। शेष इति बीजम्। सुमित्रानन्दन इति शक्तिः। रामानुज इति कीलकम्। रामदास इत्यस्त्रम्। रघुवंशज इति कवचम्। सौमित्रिरिति मन्त्रः। श्रीलक्ष्मणप्रीत्यर्थं सकलमनोऽभिलषितसिद्ध्यर्थं जपे विनियोगः।

ओं लक्ष्मणाय अंगुष्ठाभ्यां नमः। ओं शेषाय तर्जनीभ्यां नमः। ओं सुमित्रानन्दनाय मध्यमाभ्यां नमः। ओं रामानुजाय अनामिकाभ्यां नमः। ओं रामदासाय कनिष्ठिकाभ्यां नमः। ओं रघुवंशजाय करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिषडङ्गन्यासः। ओं सौमित्रये इति दिग्बन्धः। अथ ध्यानम्।

रामपृष्ठस्थितं रम्यं रत्नकुण्डलधारिणम्।
नीलोत्पलदलश्यामं रत्नकङ्कणमण्डितम्॥ १

रामस्य मस्तके दिव्यं बिभ्रतं छत्रमुत्तमम्।
वरपीताम्बरधरं मुकुटेनातिशोभितम्॥ २

तूणीरं कार्मुकं चापि बिभ्रतं च स्मितावननम्।
रत्नमालाधरं दिव्यं पुष्पमालाविराजितम्॥ ३

एवं ध्यात्वा लक्ष्मणं च राघवन्यस्तलोचनम्।
कवचं जपनीयं हि ततो भक्त्याऽत्र मानवैः ॥ ४

लक्ष्मणः पातु मे पूर्वे दक्षिणे राघवानुजः।
प्रतीच्यां पातु सौमित्रिः पातूदीच्यां रघूत्तमः ॥ ५

अधः पातु महावीरश्चोर्ध्वं पातु नृपात्मजः।
मध्ये पातु रामदासः सर्वतः सत्यपालकः ॥ ६

स्मितराननः शिरः पातु भालं पातूर्मिलाधवः।
भ्रुवोर्मध्ये धनुर्धारी सुमित्रानन्दनोऽक्षिणी ॥ ७

कपोले राममन्त्री च सर्वदा पातु वै मम।
कर्णमूले सदा पातु कबन्धभुजखण्डनः ॥ ८

नासाग्रं मे सदा पातु सुमित्रानन्दवर्धनः।
रामन्यस्तेक्षणः पातु सदा मेऽत्र मुखं भुवि ॥ ९

सीतावाक्यकरः पातु मम वाणीं सदाऽत्र हि।
सौम्यरूपः पातु जिह्वामनन्तः पातु मे द्विजान् ॥ १०

चिबुकं पातु रक्षोघ्नः कण्ठं पात्वसुरार्दनः।
स्कन्धौ पातु जितारातिर्भुजौ पंकजलोचनः ॥ ११

करौ कङ्कणधारी च नखान् रक्तनखोऽवतु।
कुक्षिं पातु विनिद्रो मे वक्षः पातु जितेन्द्रियः ॥ १२

पार्श्वे राघवपृष्ठस्थः पृष्ठदेशं मनोरमः।
नाभिं गम्भीरनाभिस्तु कटिं च रुक्ममेखलः ॥ १३

गुह्यं पातु सहस्रास्यः पातु लिङ्गं हरिप्रियः।
ऊरू पातु विष्णुतुल्यः सुमुखोऽवतु जानुनी ॥ १४

नागेन्द्रः पातु मे जङ्घे गुल्फौ नूपुरवान्मम।
पादावंगदतातोऽव्यात्पात्वङ्गानि सुलोचनः ॥ १५

चित्रकेतुपिता पातु मम पादाङ्गुलीः सदा।
रोमाणि मे सदा पातु रविवंशसुमुद्भवः ।। १६

दशरथसुतः पातु निशायां मम सादरम्।
भूगोलधारी मां पातु दिवसे दिवसे सदा ।। १७

सर्वकालेषु मामिन्द्रजिद्धन्ताऽवतु सर्वदा।
एवं सौमित्रिकवचं सुतीक्ष्ण कथितं मया ।। १८

इदं प्रातः समुत्थाय ये पठन्त्यत्र मानवाः।
ते धन्या मानवा लोके तेषां च सफलो भवः ।। १९

सौमित्रेः कवचस्यास्य पठनान्निश्चयेन हि।
पुत्रार्थी लभते पुत्रान्धनार्थी धनमाप्नुयात्।। २०

पत्नीकामो लभेत्पत्नीं गोधनार्थी तु गोधनम्।
धान्यार्थी प्राप्नुयाद्धान्यं राज्यार्थी राज्यमाप्नुयात्।। २१

पठितं रामकवचं सौमित्रिकवचं विना।
घृतेन हीनं नैवेद्यं तेन दत्तं न संशयः ।। २२

केवलं रामकवचं पठितं मानवैर्यदि।
तत्पाठेन तु सन्तुष्टो न भवेद्रघुनन्दनः ।। २३

अतः प्रयत्नतश्चेदं सौमित्रिकवचं जनैः।
पठनीयं सर्वदैव सर्ववाञ्छितदायकम्।। २४

(श्रीमदानन्दरामायणतः)

## शत्रुघ्नकवचम्

अगस्त्य उवाच—

अथ शत्रुघ्नकवचं सुतीक्ष्ण शृणु सादरम्।
सर्वकामप्रदं रम्यं रामसद्भक्तिवर्धनम्।।

शत्रुघ्नं धृतकार्मुकं धृतमहातूणीरबाणोत्तमं
पार्श्वे श्रीरघुनन्दनस्य विनयाद्वामे स्थितं सुन्दरम्।
रामं स्वीयकरेण तालदलजं धृत्वाऽतिचित्रं वरं
सूर्याभं व्यजनं सभास्थितमहं तं वीजयन्तं भजे ।। १

अस्य श्रीशत्रुघ्नकवचमन्त्रस्य अगस्तिः ऋषिः । श्रीशत्रुघ्नो देवता । अनुष्टुप् छन्दः । सुदर्शन इति बीजम् । सुमित्रानन्दन इति शक्तिः । श्रीभरतानुज इति कीलकम् । भरतमन्त्रीत्यस्त्रम् । श्रीरामदास इति कवचम् । लक्ष्मणांशज इति मन्त्रः । श्रीशत्रुघ्नप्रीत्यर्थे सकलमनःकामनासिद्ध्यर्थं जपे विनियोगः ।

ओं शत्रुघ्नाय अंगुष्ठाभ्यां नमः । ओं सुदर्शनाय तर्जनीभ्यां नमः । ओं सुमित्रानन्दनाय मध्यमाभ्यां नमः । ओं भरतानुजाय अनामिकाभ्यां नमः । ओं भरतमन्त्रिणे कनिष्ठिकाभ्यां नमः । ओं रामदासाय करतलकरपृष्ठाभ्यां नमः । इति करन्यासः । एवं हृदयादिन्यासः । ध्यानम्—

रामस्य संस्थितं वामे पार्श्वे विनयपूर्वकम् ।
सुमित्रानन्दनं सौम्यं मुकुटेनातिरंजितम् ।। १

रत्नकंकणकेयूरवनमालाविराजितम् ।
रशनाकुण्डलधरं रत्नहारसनूपुरम् ।। २

व्यजनेन वीजयन्तं जानकीकान्तमादरात् ।
रामन्यस्तेक्षणं वीरं सुमित्रातोषवर्द्धनम् ।। ३

द्विभुजं कञ्जनयनं दिव्यपीताम्बरान्वितम् ।
सुभुजं सुन्दरं मेघश्यामलं सुन्दराननम् ।। ४

रामवाक्ये दत्तकर्णं रक्षोघ्नं खड्गधारिणम्।
धनुर्बाणधरं श्रेष्ठं धृततूणीरमुत्तमम्॥ ५

सभायां संस्थितं रम्यं कस्तूरीतिलकांकितम्।
मुकुटस्थावतंसेन शोभितं च स्मिताननम्॥ ६

रविवंशोद्भवं दिव्यरूपं दशरथात्मजम्।
मथुरावासिनं देवं लवणासुरमर्दनम्॥ ७

इति ध्यात्वा तु शत्रुघ्नं रामपादेक्षणं हृदि।
पठनीयं वरं चेदं कवचं तस्य पावनम्॥ ८

पूर्वे त्ववतु शत्रुघ्नः पातु याम्ये सुदर्शनः।
सुमित्रानन्दनः पातु प्रतीच्यां सर्वदा मम॥ ९

पातूदीच्यां रामबन्धुः पात्वधो भरतानुजः।
रविवंशोद्भवश्चोर्ध्वं मध्ये दशरथात्मजः॥ १०

सर्वतः पातु मामत्र सुमित्रातोषवर्द्धनः।
श्यामलांगः शिरः पातु भालं श्रीलक्ष्मणानुजः॥ ११

भ्रुवोर्मध्ये सदा पातु सुमुखोऽत्रावनीतले।
श्रुतकीर्तिपतिर्नेत्रे कपोले पातु राघवः॥ १२

कर्णौ कुण्डलकर्णोऽव्यान्नासाग्रं नृपवंशजः।
मुखं मम युवा पातु पातु वाणीं स्फुटाक्षरः॥ १३

जिह्वां सुबाहुतातोऽव्याद्यूपकेतुपिता द्विजान्।
चुबुकं रम्यचुबुकः कण्ठं पातु सुभाषणः॥ १४

स्कंधौ पातु महातेजा भुजौ राघववाक्यकृत्।
करौ मे कंकणधरः पातु खड्गी नखान्मम॥ १५

कुक्षिं रामप्रियः पातु पातु वक्षो रघूत्तमः ।
पाश्र्वे सुरार्चितः पातु पातु पृष्ठं वराननः ॥ १६

जठरं पातु रक्षोघ्नः पातु नाभिं सुलोचनः ।
कटिं भरतमंत्री मे गुह्यं श्रीरामसेवकः ॥ १७

रामार्पितमनाः पातु लिंगमूरू स्मितराननः ।
कोदण्डधारी पात्वत्र जानुनी मम सर्वदा ॥ १८

राममित्रं पातु जंघे गुल्फौ पातु सुनूपुरः ।
पादौ नृपतिपूज्योऽव्याच्छ्रीमान्पादांगुलीर्मम ॥ १९

पात्वंगानि समस्तानि ह्युदारांगः सदा मम ।
रोमाणि रमणीयोऽव्याद्रात्रौ पातु सुधार्मिकः ॥ २०

दिवा मे सत्यसन्धोऽव्याद्भोजने शरसत्करः ।
गमने कलकण्ठोऽव्यात्सर्वदा लवणान्तकः ॥ २१

एवं शत्रुघ्नकवचं मया ते समुदीरितम् ।
ये पठन्ति नरास्त्वेतत्ते नराः सौख्यभागिनः ॥ २२

शत्रुघ्नस्य वरं चेदं कवचं मंगलप्रदम् ।
पठनीयं नरैर्भक्त्या पुत्रपौत्रप्रवर्द्धनम् ॥ २३

अस्य स्तोत्रस्य पाठेन यं यं कामं नरोऽर्थयेत् ।
तं तं लभेन्निश्चयेन सत्यमेतद्वचो मम ॥ २४

पुत्रार्थी प्राप्नुयात्पुत्रं धनार्थी धनमाप्नुयात् ।
इच्छाकामं तु कामार्थी प्राप्नुयात्पठनादिना ॥ २५

कवचस्यास्य भूम्यां हि शत्रुघ्नस्य विनिश्चयात् ।
तस्मादेतत्सदा भक्त्या पठनीयं नरैः शुभम् ॥ २६

(श्रीमदानन्दरामायणतः)

# रामरक्षास्तोत्रम् - १

## बुधकौशिककृतम्

अस्य श्रीरामरक्षास्तोत्रमंत्रस्य बुधकौशिक ऋषिः । श्रीसीतारामचंद्रो देवता । अनुष्टुप् छन्दः । सीता शक्तिः । श्रीमद्धनुमान् कीलकम् । श्रीरामचन्द्रप्रीत्यर्थे रामरक्षा-स्तोत्रजपे विनियोगः ॥ अथ ध्यानम्

ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं
पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम् ।
वामांकारूढसीतामुखकमलमिलल्लोचनं नीरदाभं
नानालंकारदीप्तं दधतमुरुजटामंडलं रामचन्द्रम् ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम् ॥ १

ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम् ।
जानकीलक्ष्मणोपेतं जटामुकुटमंडितम् ॥ २

सासितूणधनुर्बाणपाणिं नक्तंचरांतकम् ।
स्वलीलया जगत्रातुमाविर्भूतमजं विभुम् ॥ ३

रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम् ।
शिरो मे राघवः पातु भालं दशरथात्मजः ॥ ४

कौसल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती ।
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः ॥ ५

जिह्वां विद्यानिधिः पातु कंठं भरतवंदितः ।
स्कंधौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ॥ ६

करौ सीतापतिः पातु हृदयं जामदग्न्यजित् ।
मध्यं पातु खरध्वंसी नाभिं जांबवदाश्रयः ॥ ७

सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः ।
ऊरू रघूत्तमः पातु रक्षःकुलविनाशकृत् ।। ८

जानुनी सेतुकृत्पातु जंघे दशमुखांतकः ।
पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः ।। ९

एतां रामबलोपेतां रक्षां यः सुकृती पठेत् ।
स चिरायुः सुखी पुत्री विजयी विनयी भवेत् ।। १०

पातालभूतलव्योमचारिणश्छद्मचारिणः ।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ।। ११

रामेति रामभद्रेति रामचन्द्रेति वा स्मरन् ।
नरो न लिप्यते पापैर्भुक्तिं मुक्तिं च विंदति ।। १२

जगज्जैत्रैकमंत्रेण रामनाम्नाऽभिरक्षितम् ।
यः कंठे धारयेत्तस्य करस्थाः सर्वसिद्धयः ।। १३

वज्रपंजरनामेदं यो रामकवचं स्मरेत् ।
अव्याहताज्ञः सर्वत्र लभते जयमंगलम् ।। १४

आदिष्टवान्यथा स्वप्ने रामरक्षामिमां हरः ।
तथा लिखितवान्प्रातः प्रबुद्धो बुधकौशिकः ।। १५

आरामः कल्पवृक्षाणां विरामः सकलापदाम् ।
अभिरामस्त्रिलोकानां रामः श्रीमान्स नः प्रभुः ।। १६

तरुणौ रूपसंपन्नौ सुकुमारौ महाबलौ ।
पुंडरीकविशालाक्षौ चीरकृष्णाजिनांबरौ ।। १७

फलमूलाशिनौ दांतौ तापसौ ब्रह्मचारिणौ ।
पुत्रौ दशरथस्यैतौ भ्रातरौ रामलक्ष्मणौ ।। १८

शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्वधनुष्मताम् ।
रक्षःकुलनिहंतारौ त्रायेतां नो रघूत्तमौ ।। १९

आत्तसज्जधनुषाविषुस्पृशावक्षयाशुगनिषंगसंगिनौ।
रक्षणाय मम रामलक्ष्मणावग्रतः पथि सदैव गच्छताम्।। २०

सन्नद्धः कवची खड्गी चापबाणधरो युवा।
गच्छन्मनोरथोऽस्माकं रामः पातु सलक्ष्मणः।। २१

रामो दाशरथिः शूरो लक्ष्मणानुचरो बली।
काकुत्स्थः पुरुषः पूर्णः कौसल्येयो रघूत्तमः।। २२

वेदांतवेद्यो यज्ञेशः पुराणपुरुषोत्तमः।
जानकीवल्लभः श्रीमानप्रमेयपराक्रमः।। २३

इत्येतानि जपन्नित्यं मद्भक्तः श्रद्धयान्वितः।
अश्वमेधाधिकं पुण्यं संप्राप्नोति न संशयः।। २४

रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम्।
स्तुवंति नामभिर्दिव्यैर्न ते संसारिणो नराः।। २५

रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुंदरं
काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम्।
राजेंद्रं सत्यसंधं दशरथतनयं श्यामलं शांतमूर्तिं
वंदे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम्।।

रामाय रामभद्राय रामचंद्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः।। २७

श्रीराम राम रघुनंदन राम राम
श्रीराम राम भरताग्रज राम राम।
श्रीराम राम रणकर्कश राम राम
श्रीराम राम शरणं भव राम राम।। २८

श्रीरामचंद्रचरणौ मनसा स्मरामि
श्रीरामचन्द्रचरणौ वचसा गृणामि।

श्रीरामचन्द्रचरणौ शिरसा नमामि

श्रीरामचन्द्रचरणौ शरणं प्रपद्ये ।। २९

माता रामो मत्पिता रामचन्द्रः

स्वामी रामो मत्सखा रामचन्द्रः ।

सर्वस्वं मे रामचन्द्रो दयालुः

नान्यं जाने नैव जाने न जाने ।। ३०

दक्षिणे लक्ष्मणो यस्य वामे च जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वंदे रघुनंदनम् ।। ३१

लोकाभिरामं रणरंगधीरं राजीवनेत्रं रघुवंशनाथम् ।
कारुण्यरूपं करुणाकरं तं श्रीरामचन्द्रं शरणं प्रपद्ये ।। ३२

मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ।। ३३

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वंदे वाल्मीकिकोकिलम् ।। ३४

आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।। ३५

भर्जनं भवबीजानामर्जनं सुखसंपदाम् ।
तर्जनं यमदूतानां रामरामेति गर्जनम् ।। ३६

रामो राजमणिः सदा विजयते रामं रमेशं भजे

रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ।

रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं

रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ।। ३७

राम रामेति रामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं रामनाम वरानने ।। ३८

*___*___*

## श्रीरामरक्षास्तोत्रम् - २

ओँ अस्य श्रीरामरक्षास्तोत्रस्य महर्षिर्विश्वामित्र ऋषिः अनुष्टुप् छन्दः । श्रीरामो देवता । विष्णुप्रीत्यत्थें जपे विनियोगः ।

अलसीपुष्पसंकाशं पीतवाससमच्युतम् ।
ध्यायामि पुण्डरीकाक्षं श्रीरामं विष्णुमव्ययम् ।। १

पातु नो हृदयं रामः श्रीकण्ठः कण्ठमेव च ।
नाभिं पातु मखत्राता कटिं मे विश्वरक्षकः ।। २

करौ दाशरथिः पातु पादौ मे विश्वरूपधृक् ।
चक्षुषी पातु मे देवः सीतापतिरनुत्तमः ।। ३

शिखां मे पातु विश्वात्मा कर्णौ मे पातु कामदः ।
पार्श्वयोस्तु सुरत्राता कालकोटिदुरासदः ।। ४

अनन्तः सर्वदा पातु शरीरं विश्वनायकः ।
जिह्वां मे पातु पापघ्नो लोकशिक्षाप्रवर्तकः ।। ५

राघवः पातु मे दन्तान् केशान् रक्षतु केशवः ।
सक्थिनी पातु मे दत्तविजयो नाम विश्वसृक् ।। ६

एतां रामबलोपेतां रक्षां यो वै पुमान्पठेत् ।
स चिरायुः सुखी विद्वान् लभते दिव्यसंपदम् ।। ७

रामेति रामभद्रेति रामचन्द्रेति यः स्मरेत् ।
विमुक्तः स नरः पापान्मुक्तिं प्राप्नोति शाश्वतीम् ।। ८

(पाद्मपुराणे)

*____*____*

# रामहृदयम्

श्रीमहादेव उवाच।

ततो रामः स्वयं प्राह हनूमंतमुपस्थितम्।
शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम्।। १

आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान्।
जलाशये महाकाशस्तदवच्छिन्न एव हि।
प्रतिबिंबाख्यमपरं दृश्यते त्रिविधं नभः।। २

बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम्।
आभासस्त्वपरं बिंबभूतमेवं त्रिधा चितिः।। ३

साभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि।
साक्षिण्यारोप्यते भ्रांत्या जीवत्वं च तथाऽबुधैः।। ४

आभासस्तु मृषाबुद्धिरविद्याकार्यमुच्यते।
अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पितः।। ५

अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपद्यते।
तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा।। ६

ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः।
तदाऽविद्या स्वकार्यैश्च नश्यत्येव न संशयः।। ७

एतद्विज्ञाय मद्भक्तो मद्भावायोपपद्यते।। ८

मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम्।
न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि।। ९

इदं रहस्यं हृदयं ममात्मनो
मयैव साक्षात्कथितं तवानघ।
मद्भक्तिहीनाय शठाय न त्वया
दातव्यमैंद्रादपि राज्यतोऽधिकम्।। १०

(श्रीमदध्यात्मरामायणे)

# विठ्ठलकवचम्

सूत उवाच ।

शिरो मे विठ्ठलः पातु कपोलं मुद्गरप्रियः ।
नेत्रयोर्विष्णुरूपी च वैकुण्ठो घ्राणमेव च ।। १

मुनिसेव्यो मुखं पातु दन्तपङ्क्तिं सुरेश्वरः ।
विद्याधीशस्तु मे जिह्वां कण्ठं विश्वेशवन्दितः ।। २

व्यापको हृदयं पातु स्कन्धौ पातु सुखप्रदः ।
भुजौ मे नृहरिः पातु करौ च सुरनायकः ।। ३

मध्यं पातु सुराधीशो नाभिं पातु सुरालयः ।
सुरवन्द्यः कटी पातु जानुनी कमलासनः ।। ४

जङ्घे पातु हृषीकेशः पादौ पातु त्रिविक्रमः ।
निखिलं च शरीरं मे पातां गोविन्दमाधवौ ।। ५

अकारो व्यापको विष्णुरक्षरात्मक एव च ।
पावकः सर्वपापानामकाराय नमो नमः ।। ६

तारकः सर्वभूतानां धर्मशास्त्रेषु गीयते ।
पुनातु विश्वभुवनं तोंकाराय नमो नमः ।। ७

मूलप्रकृतिरूपा या महामाया च वैष्णवी ।
तस्या बीजेन संयुक्तयकाराय नमो नमः ।। ८

वैकुण्ठाधिपतिः साक्षाद्वैकुण्ठपददायकः ।
वैजयन्तीसमायुक्तो विकाराय नमो नमः ।। ९



ஸ்ரீ பண்டரீநாதர் (விட்டோபா) பண்டரீபுரம்

स्नातः सर्वेषु तीर्थेषु पूतो यज्ञादिकर्मसु।
पावनो द्विजपङ्क्तीनां ठकाराय नमो नमः ।। १०

वाहनं गरुडो यस्य भुजङ्गः शयनं तथा।
वामभागे च लक्ष्मीश्च लकाराय नमो नमः ।। ११

नादरादिसमायुक्तं वैष्णवं परमं पदम्।
लभते मानवो नित्यं वैष्णवं धर्ममाश्रितः ।। १२

व्याधयो विलयं यान्ति पूर्वकर्मसमुद्भवाः ।
भूतानि च पलायन्ते मन्त्रोपासकदर्शनात्।। १३

इदं षडक्षरस्तोत्रं यो जपेच्छ्रद्धयान्वितः ।
विष्णोः सायुज्यमाप्नोति सत्यं सत्यं न संशयः ।। १४

(श्रीपद्मपुराणे)

## विठ्ठलहृदयम्

श्रीपार्वत्युवाच।

महाशम्भो देवदेव भक्तानुग्रहकारक।
श्रीविठ्ठलाख्यं हृदयं तन्मे ब्रूहि सदाशिव।। १

श्रीशंकर उवाच।

शृणु देवि महादेवि पार्वति प्राणवल्लभे।
गुह्याद्गुह्यतरं श्रेष्ठं नास्ति गुह्यमतः परम्।। २

जीवस्य जीवनं साक्षात्प्राणिनां प्राण उच्यते।
योगिनां हि महागम्यं पाण्डुरङ्गाभिधानकम्।। ३

अद्यापि महिमा तस्य सर्वथा ज्ञायते न हि।
नित्यनूतनतत्क्षेत्रस्योपमा नास्ति निश्चितम् ॥ ४

मुखं कञ्जेन तुलितं पद्मपत्रसमेक्षणम्।
कथं साम्यं भवेद्देवि ह्यन्तरं महदन्तरम् ॥ ५

गजैरावतयोश्चैव अश्वोच्चैःश्रवसोस्तथा।
स्पर्शपाषाणयोश्चैव ह्यन्तरं महदन्तरम् ॥ ६

काश्याः शतगुणं श्रेष्ठं द्वारवत्या द्विलक्षयोः।
एवं सर्वाणि तीर्थानि कलां नार्हन्ति कानिचित् ॥ ७

तीर्थं क्षेत्रं दैवतं च मन्त्रः स्तोत्रं महाद्भुतम्।
एतत्सर्वं यथाशक्त्या वर्णयामि मम प्रिये ॥ ८

एकदा क्षीरसंस्थाने देवदेवं जगद्गुरुम्।
गतोऽहं पादपूजार्थं सुरेन्द्रब्राह्मणैः सह ॥ ९

शेषनारदपक्षीन्द्रैर्लक्ष्मीकान्तं गणैः सह।
प्रणम्य परमात्मानं तमुवाच चतुर्मुखः ॥ १०

ब्रह्मोवाच।

महाविष्णो जगन्नाथ सर्वविश्वगुहाशय।
तव यच्च प्रियं देव संस्थानं ब्रूहि केशव ॥ ११

श्रीभगवानुवाच।

शृणु ब्रह्मन् महाशंभो अधिष्ठानं ममालयम्।
पाण्डुरङ्गमिति ख्यातं न साम्यं भुवनत्रये ॥ १२

पाण्डुरङ्गं च वैकुण्ठं तुलयित्वा मयाऽधुना।
पाण्डुरङ्गं गुरुं मत्वा पूर्णत्वेनास्थितोऽस्म्यहम् ॥ १३

नाहं तिष्ठामि क्षीराब्धौ नास्मि सूर्येन्दुमण्डले।
मन्नामकीर्तनस्थाने तत्र तिष्ठामि शंकर॥ १४

कार्यं कारणकर्तृत्वे संभवक्षेत्रमुच्यते।
तादृशं नास्ति तत्क्षेत्रं यत्र तिष्ठामि सर्वदा॥ १५

सुखे संजयति ब्रह्म ब्रह्मबीजं प्रशस्यते।
बीजेन व्यज्यते बिन्दुर्बिन्दोर्नादः प्रकीर्तितः॥ १६

आहतोऽनाहतश्चेति द्विधा नादस्तु विद्यते।
ओंकारोऽनाहतो मूर्तिराहतो नामकीर्तनम्॥ १७

बिन्दुनादात्मकं क्षेत्रं नादोऽव्यक्तः प्रदृश्यते।
यत्र संकीर्तनेनैव साक्षाद्ब्रह्ममयो भवेत्॥ १८

कीदृशं धृतवान् रूपमित्याह परमेश्वरः।
इष्टिकायां समपदं तत्त्वमस्यादिलक्षणम्॥ १९

कटिविन्यस्तहस्ताब्जं प्रणवाकृतिसौरसम्।
ऊर्ध्वबीजसमाख्यतं पूर्णेन्दुमुखमण्डनम्॥ २०

सर्वभूषणशोभाढ्यमीदृशं मोक्षदं नृणाम्।
अज्ञानजनबोधार्थं तिष्ठामीह जनार्दनः॥ २१

विठ्ठलः परमो देवस्त्रयीरूपेण तिष्ठति।
तीर्थं क्षेत्रं तथा देवो ब्रह्म ब्रह्मविदां वर॥ २२

गुह्याद्गुह्यतरं देवं क्षेत्राणां क्षेत्रमुत्तमम्।
चन्द्रभागावरं तीर्थं न भूतं न भविष्यति॥ २३

इति श्रुत्वा रमेशस्य वचनं परमामृतम्।
ब्रह्मा नारदसंयुक्तो हृदयं कीर्तयन् ययौ॥ २४

इदं विठ्ठलहृदयं सर्वदारिद्र्यनाशनम्।
सकृत्पठनमात्रेण लभते परमं पदम्॥ २५

ओमस्य हृदयमन्त्रस्य परब्रह्म ऋषिः स्मृतः।
छन्दोऽनुष्टुप् प्रविख्यातो देवः श्रीविठ्ठलो महः॥ २६

ओं नमो बीजमाख्यातं श्रीं पातु शक्तिरीडिता।
ओं श्रीं क्लीं कीलकं यस्य वेधको देवविठ्ठलः॥ २७

त्रिबीजैरङ्गुलिन्यासः षडंगानि ततः परम्।
ध्यानादिकं महादिव्यं हृदयं हृदये स्मरेत्॥ २८

ओं अस्य श्रीविठ्ठलहृदयस्तोत्रमंत्रस्य परब्रह्म ऋषिः। अनुष्टुप् छन्दः। श्रीविठ्ठलः परमात्मा देवता। ओं नम इति बीजम्। ओं श्रीं शक्तिः। ओं श्रीं क्लीं कीलकम्। ओं श्रीं विठ्ठलो वेधकः। श्रीविठ्ठलप्रीत्यर्थं जपे विनियोगः। ओं श्रीं क्लीं अंगुल्यादि-षडंगन्यासः॥ अथ ध्यानम्

ओं श्रीं क्लीं प्रहसितमुखचन्द्रं प्रोल्लसत्पूर्णबिंबं
प्रणमदभयहस्तं चारुनीलांबुदाभम्।
समपदकमनीयं तत्त्वबोधावगम्यं
सदयवरददेवं विठ्ठलं तं नमामि॥ २९

क्लीं श्रीं ओं ओं श्रीं क्लीम्॥

पांडुरंगः शिखां पातु मूर्धानं पातु विठ्ठलः।
मस्तकं माधवः पातु तिलकं पातु श्रीकरः॥ ३०

भर्गः पातु भ्रुवोर्मध्ये लोचने विष्णुरोजसा।
दृष्टिं सुदर्शनः पातु श्रोत्रे पातु दिगंबरः॥ ३१

नासाग्रं सृष्टिसौंदर्य ओष्ठौ पातु सुधार्णवः ।
दन्तान् दयानिधिः पातु जिह्वां मे वेदवल्लभः ।। ३२

तालुदेशं हरिः पातु रसनां गोरसप्रियः ।
चिबुकं चिन्मयः पातु ग्रीवां मे गरुडध्वजः ।। ३३

कंठं तु कंबुकंठश्च स्कंधौ पातु महाबलः ।
भुजौ गिरिधरः पातु बाहू मे मधुसूदनः ।। ३४

कूर्परौ कृपयाविष्टः करौ मे कमलापतिः ।
अंगुलीरच्युतः पातु नखानि नरकेसरी ।। ३५

वक्षः श्रीलांछनः पातु स्तनौ मे स्तनलालसः ।
हृदयं श्रीहृषीकेश उदरं परमामृतः ।। ३६

नाभिं मे पद्मनाभश्च कुक्षिं ब्रह्मांडनायकः ।
कटिं पातु कटिकरो जघनं तु जनार्दनः ।। ३७

शिश्नं पातु स्मराधीशो वृषणे वृषभः पतिः ।
गुह्यं गुह्यतरः पातु ऊरू पातूरुविक्रमः ।। ३८

जानू पातु जगन्नाथो जंघे मे मनमोहनः ।
गुल्फौ पातु गणाधीशः पादौ पातु त्रिविक्रमः ।। ३९

शरीरं चाखिलं पातु नरनारायणो हरिः ।
अग्रे ह्यग्रतरः पातु दक्षिणे दक्षकप्रियः ।। ४०

पृष्ठे पुष्टिकरः पातु वामे मे वासवप्रभुः ।
पूर्वे पूर्वापरः पातु आग्नेय्यां चाग्निरक्षकः ।। ४१

दक्षिणे दीक्षितार्थश्च नैर्ऋत्यामृतुनायकः ।
पश्चिमे वरुणाधीशो वायव्ये वातजापतिः ।। ४२

उत्तरे धृतखड्गश्च ईशान्ये पातु ईश्वरः ।
उपरिष्टातु भगवानंतरिक्षे चिदंबरः ॥ ४३

भूतले धरणीनाथः पाताले कूर्मनायकः ।
स्वर्गे पातु सुरेंद्रेन्द्रो ब्रह्मांडे ब्रह्मणस्पतिः ॥ ४४

अटव्यां नृहरिः पातु जीवने विश्वजीवनः ।
मार्गे पातु मनोगम्यः स्थाने पातु स्थिरासनः ॥ ४५

सबाह्याभ्यन्तरं पातु पुंडरीकवरप्रियः ।
विष्णुर्मे विषयान् पातु वासनाः पातु वामनः ॥ ४६

कर्ता कर्मेन्द्रियं पातु ज्ञाता ज्ञानेन्द्रियं सदा ।
प्राणान् पातु प्राणनाथ आत्मरामो मनादिषु ॥ ४७

जागृतिं मे जगद्ब्रह्म स्वप्नं पातु सुतेजकः ।
सुषुप्तिं मे समाधीशस्तुर्यां पातु मुनिप्रियः ॥ ४८

भार्यां पातु रमाकांतः पुत्रान् पातु प्रजानिधिः ।
कन्यां मे करुणानाथो बान्धवान् भक्तवत्सलः ॥ ४९

धनं पातु धनाध्यक्षो धान्यं विश्वकुटुम्बकः ।
पशून्मे पालकः पातु विद्यां पातु कलानिधिः ॥ ५०

वाचस्पतिः पातु वादे सभायां विश्वमोहनः ।
कामक्रोधोद्भवात्पातु पूर्णकामो मनोरमः ॥ ५१

वस्त्रं रत्नं भूषणं च नाम रूपं कुलं गृहम् ।
सर्वं सर्वात्मकः पातु शुद्धब्रह्मपरात्परः ॥ ५२

क्लीं श्रीं ओं ओं श्रीं क्लीम् ।

विठ्ठलं मूर्ध्नि विन्यस्य ललाटे श्रीकरं न्यसेत् ।
पाण्डुरङ्गं भ्रुवोर्मध्ये नेत्रयोर्व्यापकं न्यसेत् ॥ ५३

कर्णयोर्निगमार्थं च गल्लयोर्वल्लभं न्यसेत्।
नासिकायां न्यसेत्कृष्णं मुखे वै माधवं न्यसेत्॥ ५४

ओष्ठयोर्मुरलीकान्तं दन्तपङ्क्त्यां सुहासकम्।
रसनायां रसाधीशं जिह्वाग्रे कीर्तनं न्यसेत्॥ ५५

कण्ठे न्यसेन्महाविष्णुं स्कन्धयोः कमलापतिम्।
बाह्वोर्बलानुजं न्यस्य करे चक्रधरं न्यसेत्॥ ५६

पाणितले पद्मधरं कराग्रे वरदाभयम्।
वक्षःस्थले वरेण्यं च हृदये श्रीहरिं न्यसेत्॥ ५७

उदरे विश्वभर्तारं नाभौ नाभिकरं न्यसेत्।
कट्यां न्यसेत्क्रियातीतमूरौ तु उद्धवप्रियम्॥ ५८

जानुद्वये न्यसेच्छक्तिं पादयोः पावनं न्यसेत्।
सबाह्याभ्यन्तरं न्यस्य देवदेवं जगद्गुरुम्॥ ५९

क्लीं श्रीं ओं ओं श्रीं क्लीं।

विठ्ठलाय नमस्तुभ्यं नमो विज्ञानहेतवे।
विष्णुजिष्णुस्वरूपाय श्रीविष्णवे नमो नमः॥ ६०

नमः पुण्डरीकाक्षाय पूर्णबिम्बात्मने नमः।
नमस्ते पाण्डुरङ्गाय पावनाय नमो नमः॥ ६१

नमः पूर्णप्रकाशाय नमस्ते पूर्णतेजसे।
पूर्णैश्वर्यस्वरूपाय पूर्णज्ञानात्मने नमः॥ ६२

सच्चिदानन्दकन्दाय नमोऽनन्तसुखात्मने।
नमोऽनन्ताय शान्ताय श्रीरामाय नमो नमः॥ ६३

नमो ज्योतिःस्वरूपाय नमो ज्योतिर्मयात्मने।
नमो ज्योतिःप्रकाशाय सर्वोत्कृष्टात्मने नमः॥ ६४

ओं नमो ब्रह्मरूपाय नम ओंकारमूर्तये।
निर्विकल्पाय सत्याय शुद्धसत्त्वात्मने नमः ॥ ६५

महद्ब्रह्म नमस्तेऽस्तु सत्यसंकल्पहेतवे।
नमः सृष्टिप्रकाशाय गुणसाम्याय ते नमः ॥ ६६

ब्रह्मविष्णुमहेशाय नानावर्णात्मरूपिणे।
सदोदिताय शुद्धाय गुणातीताय ते नमः ॥ ६७

नमः सहस्रनाम्ने च नमः सहस्ररूपिणे।
नमः सहस्रवक्त्राय सहस्राक्षाय ते नमः ॥ ६८

केशवाय नमस्तुभ्यं नमो नारायणाय च।
माधवाय नमस्तेऽस्तु गोविन्दाय नमो नमः ॥ ६९

श्रीविष्णवे नमस्तुभ्यं मधुसूदनरूपिणे।
त्रिविक्रमसुदीर्घाय वामनाय नमो नमः ॥ ७०

श्रीधराय नमस्तुभ्यं हृषीकेशाय ते नमः।
नमस्ते पद्मनाभाय दामोदराय ते नमः ॥ ७१

नमस्ते संकर्षणाय वासुदेवाय ते नमः।
प्रद्युम्नाय नमस्तेऽस्तु अनिरुद्धाय ते नमः ॥ ७२

नमः पुरुषोत्तमायाधोक्षजाय ते नमो नमः।
नमस्ते नारसिंहाय अच्युताय नमो नमः ॥ ७३

नमो जनार्दनायास्तूपेन्द्राय च नमो नमः।
श्रीहरये नमस्तुभ्यं श्रीकृष्णाय नमो नमः ॥ ७४

नमः पंढरिनाथाय भीमातीरनिवासिने।
नमो ऋषिप्रसन्नाय वरदाय नमो नमः ॥ ७५

इष्टिकारूढरूपाय समपादाय ते नमः।
कटिविन्यस्त हस्ताय मुखब्रह्मात्मने नमः ॥ ७६

नमस्तीर्थस्वरूपाय क्षेत्ररूपात्मने नमः ।
नमोऽस्तु मूर्तिमूर्ताय त्रिमूर्तये नमो नमः ।। ७७

नमस्ते बिन्दुतीर्थाय नमोऽमृतेश्वराय च ।
नमः पुष्करतीर्थाय चन्द्रभागाय ते नमः ।। ७८

नमस्ते जानुदेवाय धीरावत्यै नमो नमः ।
नमस्ते पुंडरीकाय भीमरथ्यै नमो नमः ।। ७९

मुक्तिकेशप्रवराय वेणुवादात्मने नमः ।
नमस्तेऽनंतपादाय द्विपदाय नमो नमः ।। ८०

नमो गोवत्सपादाय गोपालाय नमो नमः ।
नमस्ते पद्मतीर्थाय नरनारायणात्मने ।। ८१

नमस्ते पितृतीर्थाय लक्ष्मीतीर्थाय ते नमः ।
नमोऽस्तु शंखचक्राय गदापद्माय ते नमः ।। ८२

नमोऽश्वत्थनृसिंहाय कुंडलाख्यस्वरूपिणे ।
नमस्ते क्षेत्रपालाय महालिंगाय ते नमः ।। ८३

नमस्ते रंगशालाय नमः कीर्तनरूपिणे ।
नमो रुक्मिणिनाथाय महामूर्त्यै नमो नमः ।। ८४

नमो वैकुंठनाथाय नमः क्षीराब्धिशायिने ।
सर्वब्रह्म नमस्तुभ्यमहंब्रह्मात्मने नमः ।। ८५

नमो नमो नमस्तुभ्यं नमस्तेऽस्तु नमो नमः ।
क्लीं श्रीं ओं ।
आद्यन्ते संपुटीकृत्य बीजैश्च प्राणवल्लभे ।। ८६

अष्टोत्तरशतं मंत्रान् हृदयं नमनैः सह ।
अनन्यैः कीर्तितं यैश्च तेषामाज्ञां वहाम्यहम् ।। ८७

यावन्यस्य यथा भावो यन्नामन्यासपूर्वकम्।
तावदेव हि विज्ञानं गदितं मदनुग्रहात्।। ८८

श्रीशंकर उवाच।

इत्युक्तं वासुदेवोक्तं गोप्याद्गोप्यतरं महत्।
नित्यं संकीर्तनं यस्य प्राप्तमुक्तिर्न संशयः।। ८९

इदं गुह्यं हि हृदयं विठ्ठलस्य महाद्भुतम्।
शृणुयाच्छ्रद्धया युक्तो वैकुंठे लभते रतिम्।। ९०

एवमुक्त्वा महादेवः पार्वतीमनुकंपया।
समाधिस्थोऽभवच्छंभुः सुस्मितः कमलाननः।। ९१

—श्रीभविष्योत्तरपुराणे पांडुरङ्गमाहात्म्य

## विष्णुकवचम्

अस्य श्रीविष्णुकवचस्तोत्रमहामन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप् छन्दः, श्रीमन्नारायणो देवता, केशवाय अङ्गुष्ठाभ्यां नमः। नारायणाय तर्जनीभ्यां नमः। माधवाय मध्यमाभ्यां नमः। गोविन्दाय अनामिकाभ्यां नमः। विष्णवे कनिष्ठिकाभ्यां नमः। मधुसूदनाय करतलकरपृष्ठाभ्यां नमः। त्रिविक्रमाय हृदयाय नमः। वामनाय शिरसे स्वाहा। श्रीधराय शिखायै वषट्। हृषीकेशाय कवचाय हुं। पद्मनाभाय नेत्रत्रयाय वौषट्। दामोदराय अस्त्राय फट्। दिग्बन्धः। अथ ध्यानम्।

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्।

लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ।। १

पूर्वतो मां हरिः पातु पश्चाच्चक्री च दक्षिणे ।
कृष्ण उत्तरतः पातु श्रीशो विष्णुश्च सर्वतः ।। २

ऊर्ध्वमानन्दकृत्पातु अधस्ताच्छार्ङ्गभृत्सदा ।
पादौ पातु सरोजांघ्रिः जङ्घे पातु जनार्दनः ।। ३

जानुनी मे जगन्नाथ ऊरू पातु त्रिविक्रमः ।
गुह्यं पातु हृषीकेशः पृष्ठं पातु ममाव्ययः ।। ४

पातु नाभिं ममानन्तः कुक्षिं राक्षसमर्दनः ।
दामोदरो मे हृदयं वक्षः पातु नृकेसरी ।। ५

करौ मे कालियारातिः भुजौ भक्तार्तिभञ्जनः ।
कंठं कालाम्बुदश्यामः स्कंधौ मे कंसमर्दनः ।। ६

नारायणोऽव्यान्नासां मे कर्णौ केशिप्रभञ्जनः ।
कपोले पातु वैकुण्ठो जिह्वां पातु दयानिधिः ।। ७

आस्यं दशास्यहन्ताऽव्यात् नेत्रे मे हरिलोचनः ।
भ्रुवौ मे पातु भूमीशो ललाटं मे सदाऽच्युतः ।। ८

मुखं मे पातु गोविन्दश्शिरो गरुडवाहनः ।
मां शेषशायी सर्वेभ्यो व्याधिभ्यो भक्तवत्सलः ।। ९

पिशाचाग्निजलेभ्यो मामापद्भ्योऽवतु वामनः ।
सर्वेभ्यो दुरितेभ्यश्च पातु मां पुरुषोत्तमः ।। १०

इदं श्रीविष्णुकवचं सर्वमङ्गलदायकम् ।
सर्वरोगप्रशमनं सर्वशत्रुविनाशनम् ।। ११

# विष्णुपंजरस्तोत्रम्

ओं अस्य श्रीविष्णुपंजरस्तोत्रमंत्रस्य, नारद ऋषिः, अनुष्टुप् छन्दः, श्रीविष्णुः परमात्मा देवता, अहं बीजम्, सोऽहं शक्तिः, ओं ह्रीं कीलकम्, मम सर्वदेहरक्षणार्थं जपे विनियोगः। नारदऋषये नमः मुखे। श्रीविष्णुपरमात्मदेवतायै नमः हृदये। अहं बीजं गुह्ये। सोऽहं शक्तिः पादयोः। ओं ह्रीं कीलकं पादाग्रे। ओं ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति मन्त्रः। ओं ह्रां अङ्गुष्ठाभ्यां नमः। ओं ह्रीं तर्जनीभ्यां नमः। ओं ह्रूं मध्यमाभ्यां नमः। ओं ह्रैं अनामिकाभ्यां नमः। ओं ह्रौं कनिष्ठिकाभ्यां नमः। ओं ह्रः करतलकरपृष्ठाभ्यां नमः। इति करन्यासः। एवं हृदयादिन्यासः। अहंबीजप्राणायामं मन्त्रत्रयेण कुर्यात्। अथ ध्यानम्॥

परं परस्मात्प्रकृतेरनादिमेकं निविष्टं बहुधा गुहायाम्।
सर्वालयं सर्वचराचरस्थं नमामि विष्णुं जगदेकनाथम्॥ १

ओं विष्णुपंजरकं दिव्यं सर्वदुष्टनिवारणम्।
उग्रतेजो महावीर्यं सर्वशत्रुनिकृंतनम्॥ २

त्रिपुरं दहमानस्य हरस्य ब्रह्मणोदितम्।
तदहं संप्रवक्ष्यामि आत्मरक्षाकरं नृणाम्॥ ३

पादौ रक्षतु गोविन्दो जङ्घे चैव त्रिविक्रमः।
ऊरू मे केशवः पातु कटिं चैव जनार्दनः॥ ४

नाभिं चैवाच्युतः पातु गुह्यं चैव तु वामनः।
उदरं पद्मनाभश्च पृष्ठं चैव तु माधवः॥ ५

वामपार्श्वं तथा विष्णुर्दक्षिणं मधुसूदनः ।
बाहू वै वासुदेवश्च हृदि दामोदरस्तथा ।। ६

कंठं रक्षतु वाराहः कृष्णश्च मुखमंडलम् ।
माधवः कर्णमूले तु हृषीकेशश्च नासिके ।। ७

नेत्रे नारायणो रक्षेल्ललाटं गरुडध्वजः ।
कपोलौ केशवो रक्षेद्वैकुंठः सर्वतोदिशम् ।। ८

श्रीवत्सांकश्च सर्वेषामंगानां रक्षको भवेत् ।
पूर्वस्यां पुंडरीकाक्ष आग्नेय्यां श्रीधरस्तथा ।। ९

दक्षिणे नारसिंहश्च नैर्ऋत्यां माधवोऽवतु ।
पुरुषोत्तमो मे वारुण्यां वायव्यां च जनार्दनः ।। १०

गदाधरस्तु कौबेर्यामीशान्यां पातु केशवः ।
आकाशे च गदा पातु पाताले च सुदर्शनम् ।। ११

संनद्धः सर्वगात्रेषु प्रविष्टो विष्णुपंजरः ।
विष्णुपंजरविष्टोऽहं विचरामि महीतले ।। १२

राजद्वारेऽपथे घोरे संग्रामे शत्रुसंकटे ।
नदीषु च रणे चैव चोरव्याघ्रभयेषु च ।। १३

डाकिनीप्रेतभूतेषु भयं तस्य न जायते ।
रक्ष रक्ष महादेव रक्ष रक्ष जनेश्वर ।। १४

रक्षंतु देवताः सर्वा ब्रह्मविष्णुमहेश्वराः ।
जले रक्षतु वाराहः स्थले रक्षतु वामनः ।। १५

अटव्यां नारसिंहश्च सर्वतः पातु केशवः ।
दिवा रक्षतु मां सूर्यो रात्रौ रक्षतु चन्द्रमाः ।। १६

पन्थानं दुर्गमं रक्षेत्सर्वमेव जनार्दनः ।
रोगविघ्नहतश्चैव ब्रह्महा गुरुतल्पगः ।। १७

स्त्रीहंता बालघाती च सुरापो वृषलीपतिः ।
मुच्यते सर्वपापेभ्यो यः पठेन्नात्र संशयः ।। १८

अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां मोक्षार्थी लभते गतिम् ।। १९

आपदो हरते नित्यं विष्णुस्तोत्रार्थसंपदः ।
यस्त्विदं पठति स्तोत्रं विष्णुपंजरमुत्तमम् ।। २०

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ।
गोसहस्रफलं तस्य वाजपेयशतस्य च ।। २१

अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ।
सर्वकामं लभेदस्य पठनान्नात्र संशयः ।। २२

जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ।
ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ।। २३

(श्रीब्रह्मांडपुराणतः)

## विष्णुपञ्जरम् - २

प्रवक्ष्याम्यधुना त्वेतद्वैष्णवं पञ्जरं शुभम् ।
नमो नमस्ते देवेश चक्रं गृह्य सुदर्शनम् ।। १

प्राच्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः ।
गदां कौमोदकीं गृह्य पद्मनाभामितद्युते ।। २

याम्यां रक्षस्व मां विष्णो त्वामहं शरणं गतः ।
पद्ममादाय सगदं नमस्ते पुरुषोत्तम ।। ३

प्रतीच्यां रक्ष मां विष्णो त्वामहं शरणं गतः ।
मुसलं शातनं गृह्य पुण्डीकाक्ष रक्ष माम् ।। ४

उत्तरस्यां जगन्नाथ भवन्तं शरणं गतः ।
शार्ङ्गमादाय च धनुरस्त्रं नारायणं हरे ।। ५

नमस्ते रक्ष रक्षोघ्न ईशान्यां शरणं गतः ।
पाञ्चजन्यं महाशङ्खमनुबोध्य च पङ्कजम् ।। ६

प्रगृह्य रक्ष मां विष्णो आग्नेय्यां यज्ञसूकर ।
वर्म सूर्यशतं गृह्य खड्गं चर्मसमं तथा ।। ७

नैर्ऋत्यां मां च रक्षस्व दिव्यमूर्ते नृकेसरिन् ।
वैजयंतीं प्रगृह्य त्वं श्रीवत्सं कंठभूषणम् ।। ८

वायव्यां रक्ष मां देव अश्वशीर्ष नमोस्तु ते ।
वैनतयं समारुह्य अन्तरिक्ष जनार्दन ।। ९

मां त्वं रक्षाजित सदा नमस्ते त्वपराजित ।
विशालाक्षं समारुह्य रक्ष मां त्वं रसातले ।। १०

अकूपार नमस्तुभ्यं महामीन नमोस्तु ते ।
करशीर्षाङ्घ्रिसर्वेषु तथाष्टबाहुपञ्जरम् ।। ११

कृत्वा रक्षस्व मां देव नमस्ते पुरुषोत्तम ।
एतदुक्तं भगवता वैष्णवं पञ्जरं महत् ।। १२

पुरा रक्षार्थमीशेन कात्यायन्या द्विजोत्तम ।
नाशयमास सा यत्र दानवं महिषासुरम् ।
नमरं रक्तबीजं च तथाऽन्यासुर कण्टकान् ।। १३

(वामनपुराणतः)

# विष्णुहृदयस्तोत्रम्

अस्य श्रीविष्णुहृदयस्तोत्रस्य सङ्कर्षण ऋषिः, अनुष्टुप् त्रिष्टप् गायत्री च यथायोगं छन्दः, श्रीमहाविष्णुः परमात्मा देवता, श्रीमहाविष्णप्रीत्यर्थें विनियोगः ।

ममाग्रतस्सदा विष्णुः पृष्ठतश्चापि केशवः ।
गोविंदो दक्षिणे पार्श्वे वामे च मधुसूदनः ॥ १

उपरिष्टात्तु वैकुण्ठो वराहः पृथिवीतले ।
अवान्तरदिशो याःस्युः तासु सर्वासु माधवः ॥ २

गच्छतस्तिष्ठतो वापि जाग्रतस्स्वपतोऽपि वा ।
नरसिंहकृता गुप्तिः वासुदेवमयो ह्ययम् ॥ ३

अव्यक्तं चैवास्य योनौ वदन्ति व्यक्तं तेऽहं दीर्घमायुर्गतिश्च ।
वह्निं वक्त्रं चन्द्रसूर्यौ च नेत्रे दिशःश्रोत्रे प्राणमाहुश्च वायुम् ॥ ४

वाचं वेदा हृदयं वै नभश्च पृथ्वी पादौ तारका रोमकूपाः ।
साङ्गोपाङ्गो ह्यधिदेवता च विद्या ह्युपस्थं ते सर्वं एते समुद्राः ॥ ५

तं देवदेवं शरणं प्रजानां यज्ञात्मकं सर्वलोकप्रतिष्ठम् ।
यज्ञं वरेण्यं वरदं वरिष्ठं ब्रह्माणमीशं पुरुषं नमस्ये ॥ ६
आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ ७
महाभारतकाख्यानं कुरुक्षेत्रं सरस्वतीम् ।
केशवं गाश्च गंगाश्च कीर्तयन्नावसीदति ॥ ८

ओं भूः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं भुवः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं सुवः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।

ओं भूर्भूवस्सुवः पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः
ओं प्रद्युम्नाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं अनिरुद्धाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं भवोद्भवाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं केशवाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं नारायणाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं माधवाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं गोविंदाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं विष्णवे पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं मधुसूदनाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः
ओं त्रिविक्रमाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं वामनाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं श्रीधराय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं हृषीकेशाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं पद्मनाभाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं दामोदराय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं सत्याय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं ईशानाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं तत्पुरुषाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं सत्पुरुषाय पुरुषाय पुरुषरूपाय वासुदेवाय नमो नमः ।
ओं प्रणवेन्द्र विष्णो शतसहस्रनेत्र पुरुषाय वासुदेवाय नमो नमः ।

य इदं विष्णुहृदयमधीते ब्रह्महत्यायाः पूतो भवति । पतितसंभाषणात्पूतो भवति । अगम्यागमनात्पूतो भवति । वृषलीगमनात्पूतो भवति । अभक्ष्यभक्षणात्पूतो भवति ।

ब्रह्मचारी सब्रह्मचारी भवति। अनेकक्रतुसहस्रेणेष्टं भवति। गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति । चत्वारो वेदाश्चाधीता भवन्ति। सर्ववेदेषु ज्ञातो भवति सर्वतीर्थेषु स्नातो भवति। यदि कस्यचिन्न ब्रूयात् श्वित्री भवति। अष्टौ ब्राह्मणान् ग्राहयित्वा विष्णुलोकमाप्नोति मानसेन गतिर्भवति । न नश्यति मन्त्रः । तत्र यत्रेच्छेत्तत्र तत्रो-पजायते । स्मरति चात्मानं भगवान्महाविष्णुरित्याह।

*___*___*

## वेङ्कटेश्वरवज्रकवचस्तोत्रम्

मार्कण्डेय उवाच।

नारायणं परं ब्रह्म सर्वकारणकारणम्।
प्रपद्ये वेङ्कटेशाख्यं तदेव कवचं मम।। १

सहस्रशीर्षा पुरुषो वेङ्कटेशश्शिरोऽवतु।
प्राणेशः प्राणनिलयः प्राणं रक्षतु मे हरिः ।। २

आकाशराट् सुरानाथ आत्मानं मे सदाऽवतु।
देवदेवोत्तमः पायाद्देहं मे वेङ्कटेश्वरः ।। ३

सर्वत्र सर्वकालेषु मङ्गाम्बाजानिरीश्वरः ।
पालयेन्मामकं कर्म साफल्यं नः प्रयच्छतु।। ४

य एतद्वज्रकवचमभेद्यं वेङ्कटेशितुः ।
सायं प्रातः पठेन्नित्यं मृत्युं तरति निर्भरः ।। ५

*___*___*

# श्रीसुदर्शनकवचम - १

अस्य श्रीसुदर्शनकवच महामन्त्रस्य अहिर्बुध्न्य ऋषिः । अनुष्टुप् छन्दः । सुदर्शनरूपी परमात्मा देवता । सहस्रारं इति बीजम् । सुदर्शनं इति शक्तिः । चक्राडिति कीलकम् । मम सर्वरक्षार्थे जपे विनियोगः ।

ओं आचक्राय स्वाहा । अंगुष्ठाभ्यां नमः । हृदयाय नमः । ओं विचक्राय स्वाहा । तर्जनीभ्यां नमः । शिरसे स्वाहा । ओं सुचक्राय स्वाहा । मध्यमाभ्यां नमः । शिखायै वषट् । ओं धीचक्राय स्वाहा - अनामिकाभ्यां नमः । कवचाय हुम् । ओं ज्वालाचक्राय स्वाहा । कनिष्ठिकाभ्यां नमः । नेत्रत्रयाय वौषट् । ओं सुचक्राय स्वाहा । करतलकरपृष्ठाभ्यां नमः । अस्त्राय फट् । भूर्भुवः सुवरोमिति दिग्बन्धः ।

ध्यानम्—

शंखं शार्ङ्गं सुखेटं हलपरशुगदापाशमन्तर्दधाने
सव्ये वामेऽथ चक्रेऽप्यसिमुसल लसद्वज्रहस्तं त्रिशूलम् ।
ज्वालाकेशं च पाशं ज्वलदनलशिखा विद्युदङ्गण्डलस्थं
प्रत्यालीढं त्रिणेत्रं पुरगणमथनं भावये मन्त्रराजम् ।।

मूलमन्त्रं– ओं श्रीं ह्रीं क्लीं सहस्रार हुं फट् स्वाहा ।

ओं मस्तकं मे सहस्रारं पातु फालं सुदर्शनम् ।
भ्रूमध्ये चक्रराट् पातु नेत्रेऽग्न्यर्केन्दुलोचनः ।। १

कर्णौ वेदस्तवः पातु घ्राणं पातु विभीषणः ।
महादेवः कपोलं मे चक्षू रुद्रो वरप्रदः ।। २

दन्तान्पातु जगद्वन्द्यो रसनां मम सर्वदः ।
सर्वविद्यां नृपः पातु गिरं वागीश्वरोऽवतु ॥ ३

वीरसिंहो मुखं पातु चिबुकं भक्तवत्सलः ।
सर्वदा पृष्ठदेशो मे देवानामभय प्रदः ॥ ४

नाभिः षट्कोणगः पातु घण्टारावः कटिं तथा ।
ऊरू पातु महाशूरो जानुनी भीमविक्रमः ॥ ५

जंघे पातु महावेगो गुल्फावदितिरञ्जनः ।
पातु पादतलद्वन्द्वं विश्वभारो निरन्तरम् ॥ ६

सुदर्शननृसिंहो मे शरीरं पातु सर्वदा ।
पातु सर्वाङ्गकान्तिं मे कल्पान्ताग्निसमप्रभः ॥ ७

मम सर्वाङ्गरोमाणि ज्वालाकेशस्तु रक्षतु ।
अन्तर्बहिश्च मे पातु विश्वात्मा सर्वतोमुखः ॥ ८

रक्षाहीनं च यत्स्थानं प्रचण्डस्तत्र रक्षतु ।
सर्वतो दिक्षु मे पातु ज्वालासाहस्रसंस्तुतम् ॥ ९

इति सौदर्शनं दिव्यं कवचं सर्वकामदम् ।
सर्वपापोपशमनं सर्वव्याधिनिवारणम् ॥ १०

सर्वशत्रुक्षयकरं सर्वमङ्गलदायकम् ।
त्रिसन्ध्यं जपतां नॄणां सर्वदा सर्वकामदम् ॥ ११

प्रातरुत्थाय यो भक्त्या पठेदेतत्सदा नरः ।
तस्य कार्येषु सर्वेषु विघ्नः कोऽपि न जायते ॥ १२

यक्षराक्षसवेताल पिशाचाश्च विनायकः ।
शाकिनी डाकिनी माला कालिका चण्डिकादयः ॥ १३

भूतप्रेतपिशाचाश्च येऽन्ये दुष्टग्रहा अपि।
कवचस्य प्रभावेन दृष्टिमात्रेण तेऽखिलाः ।। १४

पलायन्ते यथा नागाः पक्षिराजस्य दर्शनात्।
अस्यायुतं पुरश्चर्या दशांशं तिलसर्पिषा ।। १५

हवनं तत्समं चैव तर्पणं गन्धवारिणा।
पुष्पाञ्जलिं दशांशेन मृष्टान्नैः सुघृतप्लुतैः ।। १६

चतुर्विंशद् द्विजा भोज्यास्ततः कार्याणि साधयेत्।
विन्यस्य जवनो धीरो युद्धार्थं योऽधिगच्छति ।। १७

क्षणाज्जित्वाऽखिलान् शत्रून् विजयी भवति ध्रुवम्।
मन्त्रितांबु त्रिवारं वै पिबेत्सप्तदिनावधि ।। १८

व्याधयः प्रशमं यान्ति सकलाः कुक्षिसंभवाः ।
मुखरोगाक्षिरोगाणां नाशनं परमं मतम् ।। १९

भीतानामभिषेकाच्च महाभयनिवारणम्।
सप्ताभिमन्त्रितानेन तुलसीमूलमृत्तिका ।। २०

लिंपेन्नश्यन्ति तद्रोगाः सप्त कृच्छ्रादयोऽखिलाः ।
ललाटे तिलकं नृणां मोहनं सर्ववश्यकृत् ।। २१

परेषां मन्त्रतन्त्रादि नाशनं परमं मतम्।
अग्निसर्पादिसर्वेषां विषाणां हरणं परम् ।। २२

सौवर्णे राजते वापि पत्रे भूर्जादिकेऽपि वा।
लिखित्वा पूजयेद्भक्त्या स श्रीमान्भवति ध्रुवम् ।। २३

बहुना किमिहोक्तेन यद्यद्वाञ्छति मानवः ।
सकलं प्राप्नुयादस्य कवचस्य प्रभावतः ।। २४

# सुदर्शनकवचम् - २

ओं अस्य श्रीसुदर्शनकवचमहामन्त्रस्य, नारायण ऋषिः, श्रीसुदर्शनो देवता, गायत्रीच्छन्दः, दुष्टं दारय इति कीलकम्, हन हन द्विष इति बीजम्, सर्वशत्रुक्षयार्थे सुदर्शनस्तोत्रपाठे विनियोगः ।। १

अथ न्यासः । ओं नारायणाय ऋषये नमः शिरसे स्वाहा, ओं गायत्रीच्छन्दसे नमः मुखे नेत्रत्रयाय वषट्, ओं दुष्टं दारय दारयेति कीलकाय नमः हृदये कवचाय हुं, ओं ह्रां ह्रीं ह्रुं हुँ द्विष इति बीजम् गुह्ये । शिखायै वौषट्, ओं सुदर्शन ज्वलत्पावकसंकाशेति कीलकाय सर्वाङ्गे अस्त्राय फट् इति । ऋष्यादि । पश्चान्मूलमन्त्रेण न्यासध्यानं कुर्यात् ।। २

अथ मूलमन्त्रः । ओं ह्रां ह्रीं नमो भगवते, भो भो सुदर्शन चक्र दुष्टं दारय दारय दुरितं हन हन पापं मथ मथ आरोग्यं कुरु कुरु हुँ हुँ फट् स्वाहा । अनेन मूलमन्त्रेण पुरश्चरणं कृत्वा तदा आयुधसान्निध्यं भवति भवति ।।

अथ शत्रुनाशनप्रयोगमन्त्रः । ओं ह्रां ह्रीं ह्रूं सुदर्शनचक्रराजन् दुष्टान् दह दह सर्वदुष्टान् भयं कुरु कुरु विदारय विदारय परमन्त्रान् ग्रासय ग्रासय भक्षय भक्षय द्रावय द्रावय हुँ फट् ।। ४

अथ मोहनमन्त्रः । ओं हुँ हन हन ह्रां ह्रां हन हन ओंकार हन हन ओं ह्रीं सुदर्शनचक्र सर्वजनवश्यं कुरु कुरु ठः ह्रीं ठः ठः स्वाहा ।। ५

अथ लक्ष्मी प्राप्तिप्रयोगमन्त्रः । ओं श्रीं ह्रीं क्लीं ह्रां ह्रां सुदर्शनचक्र मम गृहे अष्टसिद्धिं कुरु कुरु ऐं क्लीं स्वाहा ।। ६

अथ आकर्षणप्रयोगमन्त्रः । ओं ह्रां ह्रीं क्लीं क्लीं जंभय जंभय अमुकं आकर्षय आकर्षय मम वश्यं ज्रीं ज्रीं कुरु कुरु स्वाहा ।। ७

ओं ह्रां षोडशवारं पूरकं कृत्वा ओं ह्रां त्रिषष्टिवारं कुम्भकं कृत्वा ओं ह्रां द्वात्रिंशद्वारं रेचकं कुर्यात् ।। इति प्राणायामः

## श्रीसुदर्शनमालामन्त्रस्तोत्रम्

अस्य श्रीसुदर्शनमालामहामन्त्रस्य । अहिर्बुध्न्य ऋषिः । अनुष्टुप् छन्दः । सुदर्शन चक्ररूपी श्रीहरिर्देवता । आचक्राय स्वाहेति बीजम् । सुचक्राय स्वाहेति शक्तिः । ज्वालाचक्र स्वाहेति कीलकम् । श्री सुदर्शनप्रीत्यर्थे जपे विनियोगः । ओं आचक्राय स्वाहा । विचक्राय स्वाहा । सुचक्राय स्वाहा । धीचक्राय स्वाहा । ज्वालाचक्राय स्वाहा । सुचक्राय स्वाहेति करांगन्यासौ । ध्यानम्

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं
रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं वज्रदंष्ट्राट्टहासम् ।
शङ्खं चक्रं कराग्रैः पृथुतरमुसलं चाप पाशाङ्कुशादीन्
बिभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ।।

ओं श्रीं ह्रीं क्लीं सहस्रार हुं फट् स्वाहा । ओं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय पराय परमपुरुषाय परमात्मने, परमन्त्रपरयन्त्रपरतन्त्रौषधास्त्रशस्त्राणि संहर संहर । मृत्योर्मोचय मृत्योर्मोचय । शत्रून्नाशय नाशय । ओं नमो भगवते महासुदर्शनाय दीप्त्रे ज्वालापरीताय सर्वदिक्क्षोभटकराय ब्रह्मणे परंज्योतिषे हुं फट् स्वाहा ।।

## हयग्रीवकवचम् - १

अस्य श्रीहयग्रीवकवचमहामन्त्रस्य हयग्रव ऋषिः । अनुष्टुप् छन्दः । श्री हयग्रीवः परमात्मा देवता । ओं श्रीं वागीश्वराय नम इति बीजम् । ओं क्लीं विद्याधराय नम इति शक्तिः । ओं सौं वेदनिधये नम इति कीलकम् । ओं नमो हयग्रीवाय शुक्लवर्णाय विद्यामूर्तये ओंकारायाच्युताय ब्रह्मविद्याप्रदाय स्वाहा । मम हयग्रीवप्रसादसिद्ध्यर्थे जपे विनियोगः ।। ध्यानम्—

कलशाम्बुधिसङ्काशं कमलायतलोचनम् ।
कलानिधिकृतावासं कर्णिकान्तरवासिनम् ।। १

ज्ञानमुद्राक्षवलयशङ्खचक्र लसत्करम् ।
भूषाकिरण सन्दोह विराजितदिगन्तरम् ।। २

वक्त्राब्जनिर्गतोद्दामवाणीसन्तानशोभितम् ।
देवतासार्वभौमं तं ध्यायेदिष्टार्थसिद्धये ।। ३

ओं—हयग्रीवः शिरः पातु ललाटं चन्द्रमध्यगः ।
शास्त्रदृष्टिर्दृशौ पातु शब्दब्रह्मात्मकः श्रुती ।। १

घ्राणं गन्धात्मकः पातु वचनं यज्ञसंभवः ।
जिह्वां वागीश्वरः पातु मुकुन्दो दन्तसंहतीः ।। २

ओष्ठं ब्रह्मात्मकः पातु पातु नारायणोऽधरम् ।
शिवात्मा चिबुकं पातु कपोलौ कमलाप्रभुः ।। ३

विद्यात्मा पीठकं पातु कण्ठं नादात्मको मम ।
भुजौ चतुर्भुजः पातु करौ दैत्येन्द्रमर्दनः ।। ४

ज्ञानात्मा हृदयं पातु विश्वात्मा तु कुचद्वयम्।
मध्यमं पातु सर्वात्मा पातु पीताम्बरः कटिम्॥ ५

कुक्षिं कुक्षिस्थविश्वो मे बलिभङ्गो वलित्रयम्।
नाभिं मे पद्मनाभोऽव्याद् गुह्यं गुह्यार्थबोधकृत्॥ ६

ऊरू दामोदरः पातु जानुनी मधुसूदनः।
पातु जङ्घे महाविष्णुर्गुल्फौ पातु जनार्दनः॥ ७

पादौ त्रिविक्रमः पातु पातु पादाङ्गुळीर्हरिः।
सर्वाङ्गं सर्वगः पातु पातु रोमाणि केशवः॥ ८

धातून्नाडीगतः पातु भार्यां लक्ष्मीपतिर्मम।
पुत्रान् विश्वकुटुम्बी मे पातु बन्धून् सुरेश्वरः॥ ९

मित्रं मित्रात्मकः पातु वह्न्यात्मा शत्रुसंहतीः।
प्राणान् वाय्वात्मकः पातु क्षेत्रं विश्वम्भरात्मकः॥ १०

वरुणात्मा रसान् पातु व्योमात्मा हृद्गुहान्तरम्।
दिवारात्रं हृषीकेशः पातु सर्वं जगद्गुरुः॥ ११

विषमे सङ्कटे चैव पातु क्षेमङ्करो हरिः (मम)।
सच्चिदानन्दरूपो मे ज्ञानं रक्षतु सर्वदा॥ १२

प्राच्यां रक्षतु सर्वात्मा आग्नेय्यां ज्ञानदीपकः।
याम्यां बोधप्रदः पातु नैर्ऋत्यां चिद्घनप्रभः॥ १३

विद्यानिधिस्तु वारुण्यां वायव्यां चिन्मयोऽवतु।
कौबेर्यां वित्तदः पातु ऐशान्यां च जगद्गुरुः॥ १४

उर्ध्वं पातु जगत्स्वामी पात्वधस्तात् परात्परः।
रक्षाहीनं तु यत् स्थानं रक्षत्वखिलनायकः॥ १५

एवं न्यस्तशरीरोऽसौ साक्षाद्वागीश्वरो भवेत्।
आयुरारोग्यमैश्वर्यं सर्वशास्त्रप्रवक्तृताम्॥ १६

लभते नात्र सन्देहो हयग्रीवप्रसादतः।
इतीदं कीर्तितं दिव्यं कवचं देवपूजितम्॥ १७

(अथर्वण मन्त्रखण्डे)

## श्रीहयग्रीवकवचम् - २

पार्वत्युवाच—

देवदेव महादेव करुणाकर शङ्कर।
त्वया प्रसादशीलेन कथितानि रमापतेः॥ १

बहूनामवताराणां बहूनि कवचानि च।
इदानीं श्रोतुमिच्छामि हयास्यकवचं विभो॥ २

शिव उवाच—

देवि प्रियंवदे तुभ्यं रहस्यमपि मत्प्रिये।
कलशाम्बुधिपीयूषं हयास्यकवचं वदे॥ ३

महाकल्पान्तयामिन्यां सञ्चरंस्तु हरिः स्वयम्।
लीलया हयवक्त्राख्यरूपमास्थाय योऽहरत्॥ ४

पुत्रवात्सल्यतो मह्यं विरिञ्चिरुपदिष्टवान्।
हयास्यकवचस्यास्य ऋषिर्ब्रह्मा प्रकीर्तितः॥ ५

छन्दोऽनुष्टुप् तथा देवो हयग्रीव उदाहृतः।
ह्लौं बीजं तु समाख्यातं ह्लीं शक्तिः समुदाहृता॥
ओं कीलकं समाख्यातमुच्चैरुत्कीलकं तथा॥ ६

लक्ष्मीकराम्भोरुह हेमकुम्भ पीयूषपूरैरभिषिक्तशीर्षम् ।
व्याख्याक्षमालाम्बुजपुस्तकानि हस्तैर्वहन्तं हयतुण्डमीडे ॥

सुधासिक्तः शिरः पातु फालं पातु शशिप्रभः ।
दृशौ रक्षतु दैत्यारिः नासां वाग्जृंभवारिधिः ॥ ८

श्रोत्रं पातु स्थिरश्रोत्रः कपोलौ करुणानिधिः ।
मुखं पातु गिरां स्वामी जिह्वां पातु सुरारिहृत् ॥ ९

हनूं हनुमतस्सेव्यः कण्ठं वैकुण्ठनायकः ।
ग्रीवां पातु हयग्रीवो हृदयं कमलाकरः ॥ १०

उदरं विश्वभृत् पातु नाभिं पङ्कजलोचनः ।
मेढ्रं प्रजापतिः पातु ऊरू पातु गदाधरः ॥ ११

जानुनी विश्वभृत् पातु जङ्घे च जगतां पतिः ।
गुल्फौ पातु हयध्वंसी पादौ विज्ञानवारिधिः ॥ १२

प्राच्यां रक्षतु वागीशः दक्षिणस्यां वरायुधः ।
प्रतीच्यां विश्वभृत् पातु उदीच्यां शिववन्दितः ॥ १३

ऊर्ध्वं पातु हरिः साक्षात् अधः पातु गुणाकरः ।
अन्तरिक्षे हरिः पातु विश्वतः पातु विश्वसृट् ॥ १४

य एतत् कवचं धीमान् सन्नह्येन्निजविग्रहे ।
दुर्वादिराक्षसव्यूहैः स कदाचिन्न बाध्यते ॥ १५

पठेद् य एतत् कवचं त्रिसन्ध्यं भक्तिभावितः ।
मूढोऽपि गीष्पतिस्पर्धी जायते नात्र संशयः ॥ १६

*____*____*

# श्रीहयग्रीवपञ्जरम् - १

अस्य कल्पं प्रवक्ष्यामि हयग्रीवस्य पञ्जरम् ।
यस्य विज्ञानमात्रेण वाणी गंगेव निःसरेत् ।। १

शुद्धस्फटिकसंकाशं तुषाराचलसन्निभम् ।
श्वेतपर्वतसंकाशचन्द्रमण्डलमध्यगम् ।। २

चतुर्भुजमुदाराङ्गं पुण्डरीकायतेक्षणम् ।
शङ्खचक्रधरं देवं किरीटमकुटोज्ज्वलम् ।। ३

कौस्तुभोद्भासितोरस्कं वनमालाविराजितम् ।
पीताम्बरधरं देवं श्रीवत्सांकितवक्षसम् ।। ४

मुख्यहस्तद्वयेनैव ज्ञानमुद्राक्षपुस्तकम् ।
धारयन्तं हयग्रीवं ध्यायेदिष्टार्थसिद्धये ।। ५

ओंकाराद्गीथरूपाय ऋग्यजुस्साममूर्तये ।
नमोऽस्तु देवदेवाय वाञ्छितार्थप्रदायिने ।। ६

अज्ञानतिमिरं छिन्धि ज्ञानं चाशु प्रयच्छ मे ।
देहि मे देवदेवेश हयशीर्ष नमोऽस्तु ते ।। ७

भूतप्रेतपिशाचादीन् छिन्धि देव जनार्दन ।
ज्वरादीन् निखिलान् रोगान् नाशयाऽऽशु रमापते ।। ८

दारिद्र्यं सकलं छिन्धि कुरु सौभाग्यभाजनम् ।
शत्रून्नाशय मे देव हयशीर्ष नमोऽस्तु ते ।। ९

मेधां प्रज्ञां बलं विद्यां संपदं पुत्रपौत्रकम् ।
देहि मे देवदेवेश हयशीर्ष नमोऽस्तु ते ।। १०

कार्कोटकमुखान् सर्पान् विषादीन् विलयं नय।
अमृतं कुरु मे देव हयशीर्ष नमोऽस्तु ते ॥ ११

स्त्रीवश्यं जनवश्यं च राजवश्यं परात्परम्।
कुरु देवाङ्गनाबृन्दसेव्यमानपदांबुज ॥ १२

हंसाय परमेशाय चन्द्रमण्डलवासिने।
नमो हयोत्तमाङ्गाय वाञ्छितार्थप्रदायिने ॥ १३

ऋग्यजुस्सामरूपाय ऋताय महते नमः।
ऋक्षेश बिन्दुमध्यस्थराजीवासनभाजिने ॥ १४

वेदवेदान्तवेद्याय वेदाहरणकर्मणे।
सत्त्वासत्त्वमहामोहभेदिने ब्रह्मणे नमः ॥ १५

प्रज्ञानदायिने नित्यं भजतां भावितात्मनाम्।
प्रणवोद्गीथवपुषे प्रणातिं प्रतिपादये ॥ १६

मन्दारकुन्दस्फटिकमहनीयोरुवर्चसे।
मनीषाप्रददेवाय महाश्वशिरसे नमः ॥ १७

इति द्वादशमंत्रेण नमस्कुर्याज्जनार्दनम्।
प्रातःप्रसन्नवदनं पूर्वाचार्याभिवन्दितम् ॥ १८

*—*—*

## हयग्रीवपञ्जरम् - २

दुग्धाब्धीन्दुहराद्रिकुन्दवपुषं रक्ताम्बुजाक्षं हरिं
राकापूर्णशशाङ्कबिम्बविलसच्छुभ्राब्जपीठस्थितम्।
हेषावेदघनध्वनद्ध्वनिरवं बालार्करक्ताम्बरं
मुद्रापुस्तकशङ्खचक्रविलसद्बाहुं भजेऽश्वाननम् ॥ १

प्रणम्य शिरसा देवं नारायणमशेषगम्।
रमावक्षोजकस्तूरीपङ्कमुद्रितवक्षसम्।। २

सर्वशास्त्रार्थतत्त्वज्ञः पाराशर्यस्तपोधनः।
हिताय सर्वजगतां नारदं मुनिमब्रवीत्।। ३

नादविद्याविशेषज्ञं कर्पूरधवलाकृतिम्।
महतीनादसंतुष्टमानसं महितं परम्।। ४

हिरण्यगर्भसंभूतं हिरण्याक्षारिसेविनम्।
पुण्यराशिं पुराणज्ञं पावनीकृतदिक्तटम्।। ५

व्यास उवाच—

देवर्षे नारद श्रीमन् साक्षाद्ब्रह्माङ्गसम्भव।
भवानशेषविज्ञानपारगस्तपसां निधिः।। ६

वेदान्तपारगस्सर्वशास्त्रार्थप्रतिभोज्ज्वलः।
परब्रह्मणि निष्णातस्सच्चिदानन्दविग्रहः।। ७

जगद्धिताय जनितस्साक्षादिव चतुर्मुखः।
हन्यन्ते भवता दैत्याः दैत्यारिभुजविक्रमैः।। ८

लोकानुग्रहकर्ता त्वं त्रैलोक्यं तद्वदानघ।
मनुष्या ऋषयो देवाः त्वय्येव परिसत्तम।। ९

कर्ता त्वं लोककार्याणां परत्र परिनिष्ठितः।
पृच्छामि त्वामशेषज्ञ निदानं सर्वसंपदाम्।। १०

सर्वसंसारनिर्मुक्तं आपद्घ्नं शान्तमानसम्।
यत्सर्वलोकहितकृत् यत्प्रशंसन्ति योगिनः।। ११

यतश्चराचरं विश्वं धृतं येन महामुने।
स्पृहयन्त्युन्नतप्राप्तिं यस्मिन्ब्रह्मादिदेवताः ॥ १२

निर्माणावनसंहारा यतो विश्वस्य सत्तम।
यस्य प्रभावाद्ब्रह्माद्याः लभन्ते वाञ्छितं फलम् ॥ १३

दारिद्र्यनाशो जायेत यस्मिन् श्रुतिपथं गते।
विवक्षितार्थनिर्वाहो मुखान्निस्सरते च गीः ॥ १४

नृपाणां राज्यहीनानां येन राज्यं भविष्यति।
अपुत्रः पुत्रवान् येन वन्ध्या पुत्रवती भवेत् ॥ १५

शत्रूणामचिरान्नाशो ज्ञानं ज्ञानेप्सुनामपि।
चतुर्वर्गफलं यस्य जपाद्भवति सुव्रत ॥ १६

भूतप्रेतपिशाचाद्याः यक्षराक्षसपन्नगाः।
ज्वरादिवातरोगाश्च यस्य स्मरणमात्रतः॥ १७

मुच्यन्तेऽखिलशार्दूल यद्वाखिलजगद्धितम्।
तदेतदिति निश्चित्य ब्रूहि मे सकलं गुरो ॥ १८

इत्युक्तस्तेन मुनिना व्यासेनामिततेजसा।
बद्धाञ्जलिपुटो भूत्वा सादरं वैणिको मुनिः ॥ १९

नमस्कृत्य जगन्मूलं लक्ष्मीकान्तं परात्परम्।
नमोवाक्यैः पुरश्चक्रे मन्त्रेणानेन विष्णवे ॥ २०

ओंकारोद्गीथरूपाय ऋग्यजुस्साममूर्तये।
नमो हयोत्तमाङ्गाय वाञ्छितार्थं प्रयच्छ मे ॥ २१

अज्ञानतिमिरं छिन्धि ज्ञानमाशु प्रयच्छ मे।
देहि मे संपदं देव हयशीर्ष नमोस्तु ते ॥ २२

भूतप्रेतपिशाचादीन् छिन्धि देव जनार्दन।
ज्वरादीन्सकलान्रोगान् नाशयाशु रमापते।। २३

दारिद्र्यं सकलं छिन्धि कुरु सौभाग्यभाजनम्।
शत्रून्नाशय देवेश हयशीर्ष नमोस्तु ते।। २४

मेधां विद्यां बलं प्रज्ञां सम्पदं पुत्रपौत्रकान्।
देहि मे सकलं देव हयशीर्ष नमोऽस्तु ते।। २५

कर्कोटकमुखान् सर्पान् सविषान् विलयं नय।
अमृतं कुरु मां देव हयशीर्ष नमोस्तु ते।। २६

स्त्रीवश्यं जनवश्यं च राजवश्यं परात्परम्।
कुरु देवाङ्गनावृन्दसेव्यमानपदाम्बुज।। २७

हंसाय परमेशाय चन्द्रमण्डलवासिने।
नमो हयोत्तमाङ्गाय वाञ्छितार्थं प्रयच्छ मे।। २८

ऋग्यजुस्सामरूपाय ऋताय महसे नमः।
ऋक्षेशबिम्बमध्यस्थराजीवासनभाजिने।। २९

वेदवेदान्तवेद्याय वेदाहरणकर्मणे।
वादाहव महाबाहो भ्रंशिने ब्रह्मणे नमः।। ३०

प्रज्ञाप्रदायिने नित्य भजतां भावितात्मनाम्।
प्रणवोद्गीथवपुषे प्रणतिं प्रतिपादये।। ३१

मंदारकुंदस्फटिकमहनीयोरुवक्षसे।
मनीषाप्रददेवाय महाश्वशिरसे नमः।। ३२

इति द्वादशमन्त्रेण नमस्कृत्य जनार्दनम्।
प्राह प्रसन्नवदनः पाराशर्यमनिन्दितम्।। ३३

नारद उवाच ।

साधु साधु त्वया पृष्टः मुने सत्यवतीसुत ।
कृत्स्नाध्वरात्समुद्धत्य विलोक्य निखिलागमान् ।। ३४

संशोध्य सर्वशास्त्राणि समालोक्येतिहासकान् ।
पुराणमन्त्रशास्त्राणि मथित्वा दर्शनान्यपि ।। ३५

सर्वतस्सारमुद्धृत्य तव वक्ष्ये यथार्थतः ।
अवधाने मनः कृत्वा शृणु सत्यवतीसुत ।। ३६

अशेषलोकहितकृदज्ञानतिमिरापहम् ।
अणिमादिगुणोपेतं हयग्रीवस्य पञ्जरम् ।। ३७

अर्च्यं ब्रह्मादिभिर्देवैरनन्ताद्वैतकारणम् ।
उपास्यमानं सततं उमाजानिमुखैस्सुरैः ।। ३८

ब्रह्महत्यादिपापघ्नमपूर्वफलदायकम् ।
सारस्वतादिसंसृष्टकारणं कवितावहम् ।। ३९

संगीतविद्यानिलयं श्रुतिदं पुत्रदायकम् ।
किमुच्यते महाभाग प्रभावस्तस्य शाश्वतः ।। ४०

यस्य प्रभावाद्ब्रह्मापि ब्रह्मत्वमगमत्पुरा ।
शम्भुश्शम्भुत्वमापन्नः शक्रश्शक्रत्वमागतः ।। ४१

जप्त्वा यक्षेशतां प्राप्तः कुबेरः पञ्जरोत्तमम् ।
जप्त्वा बृहस्पतिस्सम्यग्घयग्रीवस्य पञ्जरम् ।। ४२

हयग्रीवप्रसादेन वाचस्पत्यमवाप्तवान् ।
प्राचीदिक्पालतां यातः श्रुत्वेदं पञ्जरं पुरा ।। ४३

अस्मादन्येऽपि दिक्पाला तत्तत्स्थानं गता ध्रुवम् ।
लब्ध्वोपदेशं गिरिराट्सैनापत्यं गतो गुहः ।। ४४

सर्वक्षत्रवधं चक्रे रामश्चास्य जपान्मुने ।
राजा बभूव सर्वेषां शशांकोऽस्य प्रभावतः ।। ४५

सूर्यस्तेजस्वितां प्राप्तो लब्ध्वेदं ब्रह्मणोऽन्तिकात् ।
शुक्रस्य कवितासिद्धिं प्रायच्छच्चन्द्रशेखरः ।। ४६

प्रह्लादोऽस्य जपादेव तीर्त्वा बाधामहाम्बुधिम् ।
भक्त्या परमया युक्तः कैवल्यं परमं ययौ ।। ४७

धर्मराज इति ख्यातिं यमोऽपि गतवान् ध्रुवम् ।
रामो ददाति सर्वेभ्यो जपात्सकलसंपदः ।। ४८

एतत्पञ्जरमाहात्म्यं अनुभूयोर्वशी चिरम् ।
ख्यातिं जगाम वेदेषु बुधपुत्रपुरूरवाः ।। ४९

लब्ध्वेदं पञ्जरप्राप्तिं मुक्तिं सम्मानतो जपात् ।
धर्मार्थकाममोक्षाणामिदमेव परायणम् ।। ५०

पुरा सर्वासु विद्यासु नष्टासु प्रलये मुने ।
नारायणो जगत्कर्ता रमाश्रितभुजान्तरः ।। ५१

निःस्वाध्यायवषट्कारं स्वधास्वाहाविवर्जितम् ।
विलोक्य भुवनं कृत्स्नं किमिति व्याकुलोऽभवत् ।। ५२

अन्वीक्ष्य वेदशास्त्राणि नापश्यत्किमपि प्रभुः ।
हयग्रीवतनुं प्राप्य सच्चित्सुखमयीं ततः ।। ५३

निष्कलङ्कशशिच्छायां निर्निद्रकमलेक्षणाम् ।
नित्यामचिन्त्यविभवां नीराजितपदां सुरैः ।। ५४

चन्द्रमण्डलमध्यस्थपुण्डरीकनिषेदुषीम्।
शङ्खचक्राक्षवलयपुस्तकोज्ज्वलबाहुकाम्॥ ५५

पूरयित्रीं जगत्कृत्स्नं प्रभया देहजातया।
ऋषिभिः प्राक्तनैर्ध्येयां ज्ञानविज्ञानपूरिताम्॥ ५६

मनोवाग्विषयातीतामागमान्तनिवासिनीम्।
शोकात्तीर्त्वा गुणोन्मुक्तामवस्थात्रयवर्जिताम्॥ ५७

सम्यग्वीरासनासीनस्साक्षाच्चिन्मात्रविग्रहः।
अध्यासीत्पञ्जरं स्वीयं वेदसारमचिन्तयन्॥ ५८

अष्टवारमिदं ब्रह्मन्नष्टाविंशतिसंख्यया।
आवर्तयन् ददर्शाग्रे प्रणवं पञ्जरोद्भवम्॥ ५९

गायत्री प्रणवाज्जज्ञे ततस्साङ्गादयो मुखाः।
स्मृतयश्च पुराणानि सेतिहासानि सत्तम॥ ६०

तस्मादशेषविद्यानां निदानमिदमिष्यते।
उपादिशद्गिरीशाय हयग्रीवस्य पञ्जरम्॥ ६१

अस्मादवासवानेतद्ब्रह्मा लोकपितामहः।
ब्रह्मा मुनीनां सर्वेषां गुह्यं चोपादिशत्स्वयम्॥ ६२

अहमिन्द्रादिदेवानां तत्तत्स्थान प्रसिद्धये।
उपदेशं तवाप्यद्य दास्यामि नियतव्रत॥ ६३

त्वया सर्वेषु लोकेषु ख्यातिमेतद्गमिष्यति।
शठायागुरुभक्ताय चलायानात्मवे दिने॥ ६४

कृतघ्नायाभिशसाय कुलघ्नायाकृतात्मने।
कथंचिदपि नो दद्याद्धयग्रीवस्य पञ्जरम्॥ ६५

अस्य स्मरणमात्रेण सर्वं सिद्ध्यति भूतले।
श्रीवाक्कामी विशेषेण धारयेत्पञ्जरोत्तमम्।। ६६

एकैकमन्त्रं प्रत्येकं पठ्यं मन्त्रोऽपि इष्यते।
तस्मात्सर्वप्रयत्नेन धार्यमेतच्छुभेप्सुभिः।। ६७

ऋषिरस्य हयग्रीवो देवता तु स एव हि।
प्रोक्तमानुष्टुभं छन्दं सर्वदेवैर्नियुज्यते।। ६८

क्षीराम्भोनिधिसंकाशं कमलायतलोचनम्।
कलानिधिकृतावासं कर्णिकापीठवासिनम्।। ६९

ज्ञानमुद्राक्षवलयशङ्खचक्रलसत्करम्।
भूषाकिरणसंदोहनीराजितदिगन्तरम्।। ७०

वक्त्राब्जनिर्गतोद्दामवाणीसंतानशोभितम्।
देवतासार्वभौमं तं ध्यायेदिष्टार्थसिद्धये।। ७१

हयग्रीवः शिरः पातु ललाटं चन्द्रमध्यगः।
शास्त्रदृष्टिर्दृशौ पातु मुखं ब्रह्मात्मकः श्रुतीः।। ७२

घ्राणं गंधात्मकः पातु वदनं यज्ञसंभवः।
जिह्वां वागीश्वरः पातु मुकुन्दो दन्तसंहतिम्।। ७३

ओष्ठं ब्रह्मात्मकः पातु पातु नारायणोऽधरम्।
शिवात्मा चिबुकं पातु कपोलौ कमलाप्रभुः।। ७४

बिम्बात्मा पिठरं पातु कर्णौ नादात्मको मम।
भुजौ चतुर्भुजः पातु करौ दैत्येन्द्रमर्दनः।। ७५

ज्ञानात्मा हृदयं पातु विश्वात्मा कुचयुग्मकम्।
मध्यमं पातु सर्वात्मा पातु पीताम्बरः कटिम्।। ७६

कुक्षिं रक्षतु विश्वात्मा बलिभङ्गो बलित्रयम् ।
नाभिं मे पद्मनाभोऽव्याद्गुह्यं गुह्यार्थबोधकः ।। ७७

ऊरू दामोदरः पातु जानुनी मधुसूदनः ।
पादौ त्रिविक्रमः पातु पातु पादाङ्गुलीर्हरिः ।। ७८

सर्वाङ्गं सर्वगः पातु पातु रोमाणि केशवः ।
धातूनादिहितः पातु भार्यां लक्ष्मीपतिर्मम ।। ७९

पुत्रान् विश्वकुटुम्बी मे पातु बन्धून् सुरेश्वरः ।
वित्तमिन्द्रात्मकः पातु वह्न्यात्मा शत्रुसंहतेः ।। ८०

प्राणान् वाय्वात्मकः पातु क्षेत्रं विश्वम्भरात्मकः ।
वरुणात्मा रसान् पातु व्योमात्मा हृद्गुहान्तरम् ।। ८१

दिवारात्रौ हृषीकेशः पातु सर्वं जगद्गुरुः ।
विषमे संकटे चैव पातु क्षेमङ्करो मम ।। ८२

सच्चिदानन्दरूपो मे ज्ञानं रक्षतु सर्वदा ।
प्राच्यां रक्षतु विश्वात्मा आग्नेय्यां ज्ञानदीपकः ।। ८३

याम्यां बोधप्रदः पातु नैर्ऋत्यां चिद्घनप्रभुः ।
विद्येशः पातु वारुण्यां वायव्यां चिन्मयो मम ।। ८४

कौबेर्यां वित्तदः पातु पात्वैशान्यां जगद्गुरुः ।
ऊर्ध्वं पातु जगत्स्वामी पात्वधस्तात् परात्परः ।। ८५

रक्षाहीनं तु मे स्थानं रक्षत्वखिलनायकः ।
इतीदं कीर्तयेद्यस्तु कवचं देवपूजितम् ।। ८६

भवेद्द्वादशमन्त्रेण पुरश्चर्या मुनीश्वर।
लक्षसंख्या भवेत्सोपि आद्यन्तं पञ्जरं न्यसेत्॥ ८७

किं वा द्वादशमन्त्रेण सर्वस्य जनयिष्यति।
ऊरुदघ्नजले स्थित्वा हयग्रीवस्य पञ्जरम्॥ ८८

जपेद्द्वादशमन्त्रेण मंडलान्तं दृढव्रतः।
सहस्रं वा तदर्धं वा त्रिशतं वा शतं तथा॥ ८९

सर्वज्ञत्वं लभेत्सद्यः हयग्रीव इवापरः।
सत्यं सत्यमहं वक्ष्ये नासाध्यं तस्य विद्यते॥ ९०

आनन्दसान्द्रमखिलात्मकमद्वितीयं-
विद्यानिधिं विविधशोभनहेतुभूतम्।
आराधयेद्धृदयपङ्कजमध्यसंस्थं
अश्वोत्तमाङ्ग मखिलैरभिवन्द्यमानम्॥ ९१

हेषा यस्य त्रयीघोषो मन्दुरा चन्द्रमण्डलम्।
घासो महासुरप्राणाः हयराजमुपास्महे॥ ९२

(श्रीनारदपुराणे)

## मारुतिस्तोत्रम्

श्री गणेशाय नमः। ओं नमो भगवते विचित्रवीरहनुमते प्रलयकालानलप्रभाप्रज्वलनाय। प्रतापवज्रदेहाय। अंजनी-गर्भसंभूताय। प्रकटविक्रमवीरदैत्यदानवयक्षरक्षोगणग्रहबं-धनाय। भूतग्रहबंधनाय। प्रेतग्रहबंधनाय। पिशाचग्रहबं-धनाय। शाकिनीडाकिनीग्रहबंधनाय। काकिनीकामिनी-

ग्रहबंधनाय । ब्रह्मग्रहबंधनाय । ब्रह्मराक्षसग्रहबंधनाय । चोरग्रहबंधनाय । मारीग्रहबंधनाय । एहि एहि । आगच्छ आगच्छ । आवेशाय आवेशाय । मम हृदये प्रवेशाय प्रवेशाय । स्फुर स्फुर । प्रस्फुर प्रस्फुर । सत्यं कथय । व्याघ्रमुखबन्धन । सर्पमुखबन्धन । राजमुखबन्धन । नारीमुखबन्धन । सभामुखबन्धन । शत्रुमुखबन्धन । सर्वमुखबन्धन । लंकाप्रासाद-भंजन । अमुकं मे वशमानय । क्लीं क्लीं क्लीं ह्रीं श्रीं श्रीं राजानं वशमानय । श्रीं ह्रीं क्लीं स्त्रिय आकर्षय आकर्षय शत्रून्मर्दय मर्दय मारय मारय चूर्णय चूर्णय खे खे श्रीरामचन्द्राज्ञया मम कार्यसिद्धिं कुरु कुरु ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट् स्वाहा विचित्रवीर हनूमन् मम सर्वशत्रून् भस्म कुरु कुरु । हन हन हुं फट् स्वाहा । एकादशशतवारं जपित्वा सर्वशत्रून् वशमानयति नान्यथा इति ।।

विभीषणकृतं

## हनुमद्वाडवानलस्तोत्रम्

ओं अस्य श्रीहनुमद्वाडवानलस्तोत्रमंत्रस्य । श्रीरामचन्द्र ऋषिः । श्रीवडवानलहनुमान् देवता । मम समस्तरोग-प्रशमनार्थं आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं समस्तपापक्षयार्थं सीतारामचन्द्रप्रीत्यर्थं च हनुमद्वाडवानलस्तोत्रजपमहं करिष्ये । ओं ह्रां ह्रीं ओं नमो भगवते श्रीमहाहनुमते प्रकटपराक्रम सकलदिङ्मण्डलयशोवितानधवलीकृत-जगत्त्रितय वज्रदेह रुद्रावतार लंकापुरीदहन अमलमंत्र उदधिबन्धन दशशिरःकृतांतक सीताश्वसन वायुपुत्र

अंजनीगर्भसंभूत श्रीरामलक्ष्मणानन्दकर कपिसैन्यप्राकार सुग्रीवसाह्य रणपर्वतोत्पाटन कुमारब्रह्मचारिन् गभीरनाद सर्वपापग्रहवारण सर्वज्वरोच्चाटन डाकिनीविध्वंसन ओं ह्रां ह्रीं ओं नमो भगवते महावीरवीराय सर्वदुःखनिवारणाय ग्रहमंडलसर्वभूतमंडलसर्वपिशाचमंडलोच्चाटन भूतज्वर-ऐकाहिकज्वरद्व्याहिकज्वरत्र्याहिकज्वरचातुर्थिकज्वर-संतापज्वरविषमज्वरमाहेश्वरवैष्णवज्वरान् छिंधि छिंधि यक्षब्रह्मराक्षसभूतप्रेतपिशाचान् उच्चाटय उच्चाटय ओं ह्रां श्रीं ओं नमो भगवते श्रीमहाहनुमते ओं ह्रां ह्रीं ह्रूं ह्रौं ह्रः आं हां हां हां हां औं सौं एहि एहि एहि ओं हं ओं हं ओं हं ओं नमो भगवते श्रीमहाहनुमते श्रवणचक्षुर्भूतानां शाकिनीडाकिनीनां विषमदुष्टानां सर्वविषं हर हर आकाशभुवनं भेदय भेदय छेदय छेदय मारय मारय शोषय शोषय मोहय मोहय ज्वालय ज्वालय प्रहारय प्रहारय सकलमायां भेदय भेदय ओं ह्रां ह्रीं ओं नमो भगवते महाहनुमते सर्वग्रहोच्चाटन परबलं क्षोभय क्षोभय सकलबंधनमोक्षणं कुरु कुरु शिरःशूलगुल्मशूल-सर्वशूलान्निर्मूलय निर्मूलय नागपाशानंतवासुकितक्षक-कर्कोटककालियान् यक्षकुलजलगतबिलगतरात्रिंचर-दिवाचरसर्वान्निर्विषं कुरु कुरु स्वाहा। राजभयचोरभयपर-मंत्रपरयंत्रपरतंत्रपरविद्याश्छेदय छेदय स्वमंत्रस्वयंत्र-स्वतंत्रस्वविद्याः प्रकटय प्रकटय सर्वारिष्टान्नाशय नाशय सर्वशत्रून्नाशय नाशय असाध्यं साधय साधय हुं फट् स्वाहा ॥

# हनुमल्लांगूलास्त्रस्तोत्रम्

हनुमन्नञ्जनीसूनो महाबलपराक्रम।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १

मर्कटाधिप मार्तण्डमण्डलग्रासकारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ २

अक्षक्षपण पिङ्गाक्ष दितिजासुक्षयंकर।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ३

रुद्रावतारसंसारदुःखभारापहारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ४

श्रीरामचरणाम्भोजमधुपायितमानस।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ५

वालिप्रमथनक्लान्तसुग्रीवोन्मोचनप्रभो।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ६

सीताविरहवारीशभग्नसीतेशतारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ७

रक्षोराजप्रतापाग्निदह्यमानजगद्वन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ८

ग्रस्ताशेषजगत्स्वास्थ्य राक्षसाम्भोधिमन्दर।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ९

पुच्छगुच्छस्फुरद्वीर जगद्दग्धारिपत्तन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १०

जगन्मनोदुरुल्लङ्घ्यपारावारविलङ्घन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ११

स्मृतमात्रसमस्तेष्टपूरक प्रणतप्रिय।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १२

रात्रिंचरतमोरात्रिकृन्तनैकविकर्तन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १३

जानक्या जानकीजानेः प्रेमपात्र परंतप।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १४

भीमादिकमहाभीमवीरावेशावतारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १५

वैदेहीविरहक्लान्तरामरोषैकविग्रह।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १६

वज्राङ्गनखदंष्ट्रेश वज्रिवज्रावगुण्ठन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १७

अखर्वगर्वगन्धर्वपर्वतोद्भेदनस्वर।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १८

लक्ष्मणप्राणसंत्राण त्राततीक्ष्णकरान्वय।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १९

रामादिविप्रयोगार्त भरताद्यार्तिनाशन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ २०

द्रोणाचलसमुत्क्षेपसमुत्क्षिप्तारिवैभव।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ २१

सीताशीर्वादसंपन्न समस्तावयवाक्षत।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ २२

इत्येवमश्वत्थतलोपविष्टः शत्रुंजयं नाम पठेत्स्वयं यः।
स शीघ्रमेवास्तसमस्तशत्रुः प्रमोदते मारुतजप्रसादात्॥ २३

# प्रातःस्मरणस्तोत्रम् - १

ग्राहग्रस्ते गजेंद्रे रुवति सरभसं तार्क्ष्यमारुह्य धावन्
व्याघूर्णन्माल्यभूषावसनपरिकरो मेघगंभीरघोषः ।
आबिभ्राणो रथांगं शरमसिमभयं शंखचापौ सखेटौ
हस्तैः कौमोदकीमप्यवतु हरिरसावंहसां संहतेर्नः ।। १

नक्राक्रान्ते करीन्द्रे मुकुलितनयने मूलमूलेऽतिखिन्ने
नाहं नाहं न चाहं न च भवति पुनस्तादृशो मादृशेषु ।
इत्येवं त्यक्तहस्ते सपदि सुरगणे भावशून्ये समस्ते
मूलं यत्प्रादुरासीत्स दिशतु भगवान् मंगलं सन्ततं नः ।। २

प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै
नारायणं गरुडवाहनमब्जनाभम् ।
ग्राहाभिभूतमदवारणमुक्तिहेतुं
चक्रायुधं तरुणवारिजपत्रनेत्रम् ।। ३

प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविंदयुगलं परमस्य पुंसः ।
नारायणस्य नरकार्णवतारणस्य
पारायणप्रवणविप्रपरायणस्य ।। ४

प्रातर्भजामि भजतामभयंकरं तं
प्राक्सर्वजन्मकृतपापभयापनुत्त्यै ।
यो ग्राहवक्त्रपतितांघ्रिगजेन्द्र-
घोरशोकप्रणाशनकरो धृतशंखचक्रः ।। ५

भगवत्पादाचार्यकृतं

## प्रातःस्मरणस्तोत्रम् - २

प्रातः स्मरामि हृदि संस्फुरदात्मतत्त्वं
सच्चित्सुखं परमहंसगतिं तुरीयम्।
यत्स्वप्नजागरसुषुप्तमवैति नित्यं
तद्ब्रह्म निष्कलमहं न च भूतसंघः ।। १

प्रातर्भजामि मनसो वचसामगम्यं
वाचो विभांति निखिला यदनुग्रहेण।
यं नेतिनेतिवचनैर्निगमा अवोचुः
तं देवदेवमजमच्युतमाहुरग्र्यम् ।। २

प्रातर्नमामि तमसः परमर्कवर्णं
पूर्णं सनातनपदं पुरुषोत्तमाख्यम्।
यस्मिन्निदं जगदशेषमशेषमूर्तौ
रज्जौ भुजंगम इव प्रतिभासितं वै ।। ३

श्लोकत्रयमिदं पुण्यं लोकत्रयविभूषणम्।
प्रातःकाले पठेद्यस्तु स गच्छेत्परमं पदम् ।। ४

ब्रह्मानन्दयतिकृतम्

## प्रातःस्मरणस्तोत्रम् - ३

प्रातः स्मरामि फणिराजतनौ शयानं
नागामरासुरनरादिजगन्निदानम्।
वेदैः सहागमगणैरुपगीयमानं
कांतारकेतनवतां परमं निधानम् ।। १

प्रातर्भजामि भवसागरवारिपारं
देवर्षिसिद्धनिवहैर्विहितोपहारम्।
संदृप्तदानवकदंबमदापहारं
सौंदर्यराशिजलराशिसुताविहारम्।। २

प्रातर्नमामि शरदंबरकांतिकांतं
पादारविंदमकरंदजुषां भवांतम्।
नानावतारहृतभूमिभरं कृतांतं
पाथोजकंबुरथपादकरं प्रशांतम्।। ३

श्लोकत्रयमिदं पुण्यं ब्रह्मानंदेन कीर्तितम्।
यः पठेत्प्रातरुत्थाय सर्वपापैः प्रमुच्यते।। ४

## श्रीशङ्करभगवत्पादकृतम्

# अच्युताष्टकम्- १

अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम्।
श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे।। १

अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितम्।
इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं नन्दजं सन्दधे।। २

विष्णवे जिष्णवे शङ्खिने चक्रिणे रुक्मिणीरागिणे जानकीजानये।
वल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः।। ३

कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे।
अच्युतानन्त हे माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक।। ४

राक्षसक्षोभितः सीतया शोभितो दंडकारण्यभूपुण्यताकारणः।
लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु
माम्।। ५

धेनुकारिष्टकोऽनिष्टकृद्द्वेषिणां केशिहा कंसहृद्वंशिकावादकः।
पूतनाकोपकः सूरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥ ६

विद्युदुद्द्योतवत्प्रस्फुरद्वाससं प्रावृडंभोदवत्प्रोल्लसद्विग्रहम्।
वन्यया मालया शोभितोरःस्थलं लोहिताङ्घ्रिद्वयं वारिजाक्षं भजे ॥

कुंचितैः कुंतलैर्भ्राजमानाननं रत्नमौलिं लसत्कुंडलं गंडयोः।
हारकेयूरकं कंकणप्रोज्ज्वलं किंकिणीमंजुलं श्यामलं तं भजे ॥ ८

अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम्।
वृत्ततः सुन्दरं कर्तृ विश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम् ॥ ९

*—*—*

श्रीशङ्करभगवत्पादकृतम्

## अच्युताष्टकम् - २

अच्युताच्युत हरे परमात्मन् राम कृष्ण पुरुषोत्तम विष्णो।
वासुदेव भगवन्ननिरुद्ध श्रीपते शमय दुःखमशेषम् ॥ १

विश्वमंगल विभो जगदीश नंदनंदन नृसिंह नरेंद्र।
मुक्तिदायक मुकुंद मुरारे श्रीपते शमय दुःखमशेषम् ॥ २

रामचंद्र रघुनायक देव दीननाथ दुरितक्षयकारिन्।
यादवेंद्र यदुभूषण यज्ञ श्रीपते शमय दुःखमशेषम् ॥ ३

देवकीतनय दुःखदवाग्ने राधिकारमण रम्यसुमूर्ते।
दुःखमोचन दयार्णवनाथ श्रीपते शमय दुःखमशेषम् ॥ ४

गोपिकावदनचंद्रचकोर नित्य निर्गुण निरंजन जिष्णो।
पूर्णरूप जय शंकर सर्व श्रीपते शमय दुःखमशेषम् ॥ ५

गोकुलेश गिरिधारण धीर यामुनाच्छतटखेलन वीर।
नारदादिमुनिवंदितपाद श्रीपते शमय दुःखमशेषम्।। ६

द्वारकाधिप दुरंतगुणाब्धे प्राणनाथ परिपूर्ण भवारे।
ज्ञानगम्य गुणसागर ब्रह्मन् श्रीपते शमय दुःखशेषम्।। ७

दुष्टनिर्दलन देव दयालो पद्मनाभ धरणीधरधारिन्।
रावणांतक रमेश मुरारे श्रीपते शमय दुःखशेषम्।। ८

अच्युताष्टकमिदं रमणीयं निर्मितं भवभयं विनिहंतुम्।
यः पठेद्विषयवृत्तिनिवृत्तिर्जन्मदुःखमखिलं स जहाति।। ९

*___*___*

श्रीधरवेङ्कटेशार्यकृतं

## अच्युताख्याष्टकम्

अभिलपननिसर्गादच्युताख्ये भजे त्वां
हरसि मदघबृन्दं त्वद्बुभुक्षावशात्त्वम्।
अघहृदिति तवाम्ब प्रत्युत ख्यातिदोऽहं
त्वयि मम वद का वा सङ्गतिर्दैन्यवाचाम्।। १

चिरातीता सान्दीपनितनुभुवः कालभवन-
प्रपत्तिस्तं पित्रोः पुनरगमयत् सन्निधिमिति।
यशः कृष्णस्येदं कथमहह न त्वां रसनया
यदि श्रीकृष्णाख्ये भजति स तदानीं मुनिसुतः।। २

हरेर्यच्चोरत्वं यदपि च तथा जारचरितं
तदेतत् सर्वांहस्ततिहतिकृते सङ्कथनतः।
इतीदं माहात्म्यं मधुमथन ते दीपितमिदं
वदन्त्याः कृष्णाख्ये तव हि विचरन्त्या विलसितम्।।

सभायां द्रौपद्याऽम्शुकसृतिभिया तद्रसनया
धृता तस्याश्चेलं प्रतनु तदवस्थं विदधती।
व्यतानीः शैलाभं वसनविसरं चाम्ब हरतां
इयान् गोविन्दाख्ये वद वसनराशिस्तव कुतः ॥ ४

अधिरसनमयि त्वामच्युताख्ये दधानं
वनजभवमुखानां वन्द्यमाहुर्महान्तः।
स तु विनमति मातश्वाश्वगोश्वादनादीन्
भवति ननु विचित्रा पद्धतिस्तावकानाम् ॥ ५

जननि मुरभिदाख्ये जाह्नवी निम्नगैका
समजनि पदपद्माच्चक्रिणस्त्वाश्रितानाम्।
परिणमति समस्ताः पादवार्बिन्दुरेको
जगति ननु तटिन्यो जाह्नवीसह्यजाद्याः ॥ ६

समवहितमपश्यन् सन्निधौ वैनतेयं
प्रसभविधुतपद्मापाणिरीशोऽच्युताख्ये।
समवितुमुपनीतस्सामजेन्द्रं त्वया द्राग्
वद जननि विना त्वां केन वा किं तदाऽभूत् ॥ ७

यदेष स्तौमि त्वां त्रियुगचरणत्रायिणि ततो
महिम्नः का हानिस्तव तु मम सम्पन्निरवधिः।
शुना लीढा कामं भवति सुरसिन्धुर्भगवती
तदेषा किंभूता स तु सपदि सन्तापरहितः ॥ ८

ब्रह्मानन्दकृतं

## अभिलाषाष्टकम्

कदा पक्षीन्द्रांसोपरिगतमजं कंजनयनं
रमासंश्लिष्टांगं गगनरुचमापीतवसनम्।
गदाशंखांभोजारिवरकरमालोक्य सुचिरं
गमिष्यत्येतन्मे ननु सफलतां नेत्रयुगलम्॥ १

कदा क्षीराब्ध्यंतः सुरतरुवनांतर्मणिमये
समासीनं पीठे जलधितनयालिंगिततनुम्।
स्तुतं देवैर्नित्यं मुनिवरकदंबैरभिनुतं
स्तवैः संस्तोष्यामि श्रुतिवचनगर्भैः सुरगुरुम्॥ २

कदा मामाभीतं भयजलधितस्तापसतनुं
गतारागं गंगातटगिरिगुहावाससहनम्।
लपंतं हे विष्णो सुरवर रमेशेति सततं
समभ्येत्योदारं कमलनयनो वक्ष्यति वचः॥ ३

कदा मे हृत्पद्मे भ्रमर इव पद्मे प्रतिवसन्
सदा ध्यानाभ्यासादनिशमुपहूतो विभुरसौ।
स्फुरज्ज्योतीरूपो रविरिव रमासेव्यचरणो
हरिष्यत्यज्ञानाज्जनिततिमिरं तूर्णमखिलम्॥ ४

कदा मे भोगाशानिबिडभवपाशादुपरतं
तपः शुद्धं बुद्धं गुरुवचनतोदैरचपलम्।
मनो मौनं कृत्वा हरिचरणयोश्चारु सुचिरं
स्थितिं स्थाणुप्रायां भवभयहरां यास्यति पराम्॥ ५

कदा मे संरुद्धाखिलकरणजालस्य परितो
जिताशेषप्राणानिलपरिकरस्य प्रजपतः ।
सदोंकारं चित्तं हरिपदसरोजे धृतवतः
समेष्यत्युल्लासं मुहुरखिलरोमावलिरियम् ।। ६

कदा प्रारब्धांते परिशिथिलतां गच्छति शनैः
शरीरे चाक्षौघेऽप्युपरतवति प्राणपवने ।
वदत्यूर्ध्वं शश्वन्मम वदनकंजे मुहुरहो
करिष्यत्यावासं हरिरति पदं पावनतमम् ।। ७

कदा हित्वा जीर्णां त्वचमिवभुजंगस्तनुमिमां
चतुर्बाहुश्चक्रांबुजदरकरः पीतवसनः ।
घनश्यामो दूतैर्गगनगतिनीतो नतिपरैः
गमिष्यामीशस्यांतिकमखिलदुःखांतकमिति ।। ८

## आर्तत्राणनारायणाष्टादशकम्

प्रह्लाद प्रभुरस्ति चेत् तव हरिः सर्वत्र मे दर्शय
स्तम्भे चैनमिति ब्रुवन्तमसुरं तत्राविरासीद्धरिः ।
वक्षस्तस्य विदारयन्निजनखैर्वात्सल्यमावेदयन्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ।। १

श्रीरामात्र विभीषणोऽयमधुना त्वार्तो भयादागतः
सुग्रीवानय पालयेऽहमधुना पौलस्त्यमेवागतम् ।
एवं योऽभयमस्य सर्वविदितं लङ्काधिपत्यं ददौ
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ।। २

नक्रग्रस्तपदं समुद्यतकरं ब्रह्मेश देवेश मां
पाहीति प्रचुरार्तरावकरिणं देवेश शक्तीश माम् ।

मा शोचेति ररक्ष नक्रवदनाच्चक्रश्रिया तत्क्षणात्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ।। ३

हा कृष्णाच्युत हा कृपाजलनिधे हा पाण्डवानां गते
क्वासि क्वासि सुयोधनादवमतां हा रक्ष मां द्रौपदीम् ।
इत्युक्तोऽक्षयवस्त्ररक्षिततनुं योऽरक्षदापद्गतां
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः ।।

यत्पादाब्जनखोदकं त्रिजगतां पापौघविध्वंसनं
यन्नामामृतपूरणं च पिबतां सन्तापसंहारकम् ।
पाषाणश्च यदङ्घ्रितो निजवधूरूपं मुनेराप्तवान्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः ।।

यन्नामश्रुतिमात्रतोऽपरिमितं संसारवारान्निधिं
त्यक्त्वा गच्छति दुर्जनोऽपि परमं विष्णोः पदं शाश्वतम् ।
तस्यैवाद्भुतकारणस्य जगतां नाथस्य दासोऽस्म्यहं
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ।। ६

पित्रा भ्रातरमुत्तमाङ्कगमितं भक्तोत्तमं यो ध्रुवं
दृष्ट्वा तत्सममारुरुक्षुमुदितं मात्रावमानं गतम् ।
योऽदात् तं शरणागतं तु तपसा हेमादिसिंहासनं
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ।। ७

नाथेति श्रुतयो न तत्वमतयो घोषस्थिता गोपिकाः
जारिण्यः कुलजातिधर्मविमुखा अध्यात्मभावं ययुः ।
भक्तिर्यस्य ददाति मुक्तिमतुलां जारस्य यः सद्गतिः
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ।। ८

क्षुत्तृष्णार्तसहस्रशिष्यसहितं दुर्वाससं क्षोभितं
द्रौपद्या भयभक्तियुक्तमनसा साकं स्वहस्तार्पितम् ।

भुक्त्वाऽतर्पयदात्मवृत्तिमखिलामावेदयन् यः पुमान्
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ९

येनारक्षि रघूत्तमेन जलधेस्तीरे दशास्यानुजः
त्वायातं शरणं रघूत्तम विभो रक्षातुरं मामिति ।
पौलस्त्येन निराकृतोऽथ सदसि भ्रात्रा च लङ्कापुरे
ह्यार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १०

येनावाहि महाहवे वसुमती संवर्तकाले महा-
लीलाक्रोडवपुर्धरेण हरिणा नारायणेन स्वयम् ।
यः पापिद्रुमसम्प्रवर्तमचिराद् हत्वा च योऽगात् प्रियः
आर्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ ११

योद्धासौ भुवनत्रये मधुपतिर्भर्ता नराणां कुले
राधाया अकरोद्रते रतिमनःपूर्तिं सुरेन्द्रानुजः ।
यो वा रक्षति दीनपाण्डुतनयान् नाथेति भीतिं गतान्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १२

यः सान्दीपनिदेशतश्च तनयं लोकान्तरात् सन्नतं
चानीय प्रतिपाद्य पुत्रमरणादुज्जृम्भमाणार्तये ।
सन्तोषं जनयन्नमेयमहिमा पुत्रार्थसम्पादनात्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः ॥ १३

यन्नामस्मरणादघौघसहितो विप्रः पुराऽजामिलः
प्राणान्मुक्तिमशेषितामनु च यः पापौघतापार्तियुक् ।
सद्यो भागवतोत्तमात्मनि मतिं प्रापाम्बरीषाभिधः
चार्तत्राणपरायणः स भगवान्नारायणो मे गतिः ॥ १४

योऽरक्षद्वसनादिनित्यरहितं विप्रं कुचैलाभिधं
दीनादीनचकोरपालनपरः श्रीशङ्खचक्रोज्ज्वलः ।

तज्जीर्णाम्बरमुष्टिमात्रपृथुकानादाय भुक्त्वा क्षणात्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः ।। १५

यत्कल्याणगुणाभिराममलं मन्त्राणि संशिक्षते
यच्छ्वासेति पतिप्रतिष्ठितमिदं विश्वं वदत्यागमः ।
यो योगीन्द्रमनःसरोरुहतमःप्रध्वंसविद्भानुमान्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः ।। १६

कालिन्दीहृदयाभिरामपुलिने पुण्ये जगन्मङ्गले
चन्द्राम्भोजवटे पुटे परिसरे धात्रा समाराधिते ।
श्रीरङ्गे भुजगेन्द्रभोगशयने शेते सदा यः पुमान्
आर्तत्राणपरायणः स भगवान् नारायणो मे गतिः ।। १७

वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणात्
औदार्यादघशोषणादगणितश्रेयः पदप्रापणाद् ।
सेव्यः श्रीपतिरेव सर्वजगतामेते हि तत् साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पांचाल्यहल्याध्रुवाः ।।

ब्रह्मानन्दविरचितम्

# कमलापत्यष्टकम्

भुजगतल्पगतं घनसुन्दरं गरुडवाहनमंबुजलोचनम् ।
नलिनचक्रगदाकरमव्ययं भजत रे मनुजाः कमलापतिम् ।। १

अलिकुलासितकोमलकुन्तलं विमलपीतदुकूलमनोहरम् ।
जलधिजाश्रितवामकलेवरं भजत रे मनुजाः कमलापतिम् ।। २

किमु जपैश्च तपोभिरुताध्वरैरपि किमुत्तमतीर्थनिषेवणैः ।
किमुत शास्त्रकदंबविलोकनैर्भजत रे मनुजाः कमलापतिम् ।। ३

मनुजदेहमिमं भुवि दुर्लभं समधिगम्य सुरैरपि वांछितम्।
विषयलंपटतामपहाय वै भजत रे मनुजाः कमलापतिम्॥ ४

न वनिता न सुतो न सहोदरो न हि पिता जननी न च बांधवः।
व्रजति साकमनेन जनेन वै भजत रे मनुजाः कमलापतिम्॥ ५

सकलमेव चलं सचराचरं जगदिदं सुतरां धनयौवनम्।
समवलोक्य विवेकदृशा द्रुतं भजत रे मनुजाः कमलापतिम्॥ ६

विविधरोगयुतं क्षणभंगुरं परवशं नवमार्गमलाकुलम्।
परिनिरीक्ष्य शरीरमिदं स्वकं भजत रे मनुजाः कमलापतिम्॥ ७

मुनिवरैरनिशं हृदि भावितं शिवविरिंचिमहेन्द्रनुतं सदा।
मरणजन्मजराभयमोचनं भजत रे मनुजाः कमलापतिम्॥ ८

हरिपदाष्टकमेतदनुत्तमं परमहंसजनेन समीरितम्।
पठति यस्तु समाहितचेतसा व्रजति विष्णुपदं स नरो ध्रुवम्॥ ९

जगन्नाथपण्डितकृता

## करुणालहरी

विषीदता नाथ विषानलोपमे विषादभूमौ भवसागरे विभो।
परं प्रतीकारमपश्यताधुना मयायमात्मा भवते निवेदितः॥ १

भवानलज्वालविलुप्तचेतनः शरण्य तेऽङ्घ्रिं शरणं भयादयाम्।
विभाव्य भूयोऽपि दयासुधाम्बुजे विधेहि मे नाथ यथा
यथेच्छसि॥ २

विहाय संसारमहामरुस्थलीमलीकदेहादिमिलन्मरीचिकाम्।
मनोमृगो मे करुणामृताम्बुधे विगाढुमीश त्वयि गाढमीहते॥ ३

त्वदङ्घ्रिफुल्लाम्बुजमध्यनिर्गलन्मरन्दनिःस्यन्दनितान्तलम्पटः ।
मनोमिलिन्दो मम मुक्तचापलस्त्वदन्यमीशान तृणाय मन्यते ।। ४

जगत्त्रयत्राणविधौ धृतव्रतं तवाङ्घ्रिराजीवमपास्य ये जनाः ।
शरण्यमन्यन्मृगयन्ति यान्ति ते नितान्तमीशान कृतान्तदेहलीम् ।।

रमामुखाम्भोजविकासनक्षमो जगत्त्रयोद्बोधविधानदीक्षितः ।
कदा मदज्ञानविभावरीं हरे हरिष्यति त्वन्नयनारुणोदयः ।। ६

सुरासुरस्वान्तचकोरचुम्बिता समस्तसंतापचयापनोदिनी ।
महानिशीथे मम मानसे कदा स्फुरिष्यति त्वन्मुखचन्द्रचन्द्रिका ।।

सुयौवनापाण्डुरगण्डमण्डलप्रतिस्फुरत्कुण्डलताण्डवाद्भुतम् ।
गदाग्रज त्वन्मुखफुल्लपङ्कजं कदा मदक्ष्णोरतिथीभविष्यति ।। ८

सुरापगातुङ्गतरङ्गचालितां सुरासुरानीकललाटलालिताम् ।
कदा दधे देव दयामृतोदधे भवत्पदाम्भोरुहधूलिधोरणीम् ।। ९

महाजवाश्छिन्नविवेकरश्मयो मदोद्धता देव मदक्षवाजिनः ।
हरे समासाद्य तवाङ्घ्रिमन्दुरामपास्तवेगा दधतां सुशीलताम् ।। १०

पुरातनानां वचसामगोचरं महेशितारं पुरुषोत्तमं पतिम् ।
अपास्य तं त्वां निरपत्रपा सती सती मतिर्मे कथमन्यमेष्यति ।।

न जाग्रता स्वप्नगतेन वा मया समीहितं ते करुणालवादृते ।
गिरं मदीयां यदि वेत्सि तात्त्विकीं तदा जगन्नायक मामुरीकुरु ।।

अयि दीनतरं दयानिधे दुरवस्थं सकलैः समुज्झितम् ।
अधुनापि न मां निभालयन् भजसे हा कथमश्मचित्तताम् ।। १३

सुमहन्ति जगन्ति बिभ्रतस्तव यो नाविरभून्मनागपि ।
स कथं परमाप्तदेहिनां परमाणोर्मम धारणे श्रमः ।। १४

नितरां विनयेन पृच्छते सुविचार्योत्तरमत्र यच्छ मे ।
करितो गिरितोऽप्यहं गुरुस्त्वरितो नोद्धरसे यदद्य माम् ।। १५

न धनं न च राज्यसंपदो नहि विद्यामिदमेकमर्थये।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम्।। १६

अयमत्यधमोऽपि निर्गुणो दयनीयो भवता दयानिधे।
वमतां फणिनां विषानलं किमु नानन्दयिता हि चन्दनः।। १७

क्षुधितस्य नहि त्रपास्ति मे प्रतिरथ्यं प्रतिगृह्णतः कणान्।
अकलङ्कं यशस्करं न ते भवदीयोऽपि यदन्यमृच्छति।। १८

नितरां नरकेऽपि सीदतः किमु हीनं गलितत्रपस्य मे।
भगवन्कुरु सूक्ष्ममीक्षणं परतस्त्वां जनता किमालपेत्।। १९

नरके निजकर्मकल्पिता भजतो मे महतीरपि व्यथाः।
इदमेकमसह्यमीक्षका यदनाथं निगदन्ति मां विभो।। २०

मृगदन्तिमुखान्मया सह प्रतिरुद्धान्भवजालबन्धने।
तव मामपहाय मुञ्चतः करुणा किं न भिनत्ति मानसम्।। २१

निरुपाधिजनार्तिहारिणं भगवंस्त्वामवगत्य तत्त्वतः।
कृतपुण्यचयावहेलनं कथमब्जेक्षण मामुपेक्षसे।। २२

सततं निगमेषु शृण्वता वरद त्वां पतितानुपावनम्।
पुरु पापमुपास्यतेऽनिशं त्वयि विश्वासधिया मया विभो।। २३

सुकृतं न कृतं पुरा कदाप्यथ सर्वं कृतमेव दुष्कृतम्।
अधुना गलितह्रिया मया भगवंस्त्वां प्रति किं निगद्यताम्।। २४

मदकामविमोहमत्सरा रिपवस्त्वत्पुर एव विह्वलम्।
धृतशार्ङ्गगदारिनन्दक प्रतिकर्षन्ति कथं न लज्जसे।। २५

अयि गर्तमुखे गतः शिशुः पथिकेनापि निवार्यते जवात्।
जनकेन पतन्भवार्णवे न निवार्यो भवता कथं विभो।। २६

सुकृतप्रिय माऽन्यथास्तु ते सुकृतिभ्यः सुखदस्य सुप्रथा।
अपि पापमबिभ्रतस्तु मां तव विश्वंभरनाम दुर्लभम्॥ २७

वचनैः परुषैरिह प्रभो यदि रोषं समुपागतोऽसि मे।
मुखरं कृतकोटिकल्मषं करुणाब्धे जगतोऽपसारय॥ २८

यदि वीक्ष्य ददासि मत्कृतिं न मयैव प्रतिगृह्यते तदा।
अथ चेन्निजमाशयं प्रभो परितुष्टः शिरसा वहामि तत्॥ २९

पतितोऽप्यतिदुर्गतोऽपि सन्नकृतज्ञो निखिलागसां पदम्।
भवदीय इतीरयंस्त्वया दयनीयस्त्रपयैव केवलम्॥ ३०

सुकृतप्रकृता जने त्वया कृतया किं कृपया कृपानिधे।
यदि मादृशि सा विधीयते तव कीर्तिर्विद कीदृशी तदा॥ ३१

अयि शैशवलालितः शिशुः प्रतिबुद्धो जनकेन ताड्यते।
न कदापि च लालितस्त्वया किमु ताड्यो भगवन्कुकर्मभिः॥ ३२

अहमेव हि दोषदूषितो भगवंस्त्वां समुपालभे मुधा।
रमणीविरहज्वरज्वलन्नमृतांशुं कुमतिर्विनिन्दति॥ ३३

करुणाकर दुर्दशाकुलं पतितालम्बन पापपञ्जरम्।
अमृताम्बुनिधे महाज्वरं नहि जह्या जगदीश जातु माम्॥ ३४

कटुजल्पनमल्पकस्य मे नहि ते कल्पयतु क्रुधं विभो।
कुपितातुरबालभाषितं किमु गृह्णन्ति मनाङ्महाशयाः॥ ३५

भुजगाहितकल्पितध्वजं स्फुरदाशाभुजगालिवेल्लितम्।
जटिलज्वरकुञ्जराङ्कुश ज्वरजुष्टं न जहीहि जातु माम्॥ ३६

न वदामि न दुष्कृतं मया कृतमित्युक्तिमिमां तु मे शृणु।
मम भीतिमनीनशद्विभो पतितोद्धारक नाम तावकम्॥ ३७

अपि शर्वपितामहादिभिर्भजनीयः पुरुषोत्तमो हि यः।
तमुपालभमानमुद्धतं धिगिमं मां धिगिमां धियं मम ॥ ३८

अथ सर्वमिदं मयोज्झितं भवतोऽन्यन्नहि किंचिदर्थये।
मम मानसगोचरीभवत्वरविन्दाक्ष तवाद्भुतं वपुः ॥ ३९

हरिनीलमयावनीतले वरवृन्दाविपिने विलासिनि।
मणिमण्डपमध्यविस्फुरद्विबुधक्ष्मारुहमूलमाश्रितम् ॥ ४०

शिखिपिच्छमहाभणिस्फुरन्मुकुटाकुञ्चितकान्तकुन्तलम्।
कमनीयतरालकावलिभ्रमणभ्राजिललाटसुन्दरम् ॥ ४१

शरदिन्दुसहोदराननं दलदम्भोजपलाशलोचनम्।
अरुणाधरकान्तिदन्तुरस्फुटदन्तांशुविकासिताम्बरम् ॥ ४२

दरपाण्डुरगण्डमण्डलप्रतिसर्पत्कमनीयकुण्डलम्।
मणिमौक्तिकमञ्जुमञ्जरीमहनीयद्युतिरञ्जितश्रुति ॥ ४३

पृथुवर्तुलमौक्तिकावलीसुषमावेल्लितकान्तकन्धरम्।
हरिनीलगिरिद्युतिद्रुहा कमलामन्दिरवक्षसाञ्चितम् ॥ ४४

चरणाब्जनखावलम्बिनीं भुजगाकारभुजान्तरागताम्।
निबिडाभ्रमिव क्षणप्रभां बृहदुत्फुल्लवनामलस्रजम् ॥ ४५

मणिकङ्कणकान्तिमांसलं दरफुल्लाम्बुजसुन्दरद्युति।
पतितोद्धरणे दृढव्रतं कमनीयं करयोर्युगं दधत् ॥ ४६

वररत्नमयाङ्गुलीयकावलिशोभामिलिताङ्गुलीगणैः।
मुहुराकुलितेन वेणुना वशयत्प्राणभृतां मनःश्रुतीः ॥ ४७

उदरद्युतिनिम्नगोच्छलल्लहरीरूपकरोमराजिकम्।
पशुपालविलासिनीलसन्नयनाकर्षणनाभिनिम्नितम् ॥ ४८

कनकद्रवगौरमम्बरं दधतोरुद्वितयेन सुन्दरम्।
उदयन्मणिनूपुरप्रभासरणिश्रेणिजटालजानुकम्॥ ४९

अरिगीर्णगजेन्द्रगोपने दधता जाङ्घिकतामलौकिकीम्।
त्रिजगन्महनीयमूर्तिना वरजङ्घायुगलेन शोभितम्॥ ५०

कुलिशाङ्कुशकम्बुसाम्बुजध्वचक्राद्यभिरामलक्ष्मणा।
अरुणारुणकोमलत्विषा कमनीयेन तलेन राजितम्॥ ५१

विधिशर्वमुखामरस्फुरन्मुकुटोन्निद्रमणिप्रभाकुलम्।
नखचन्द्रमयूखमूर्च्छिताखिलतापं पदयोर्युगं दधत्॥ ५२

सरतः सरणौ सतो बहिः स्वपतो वाऽऽलपतो गृहान्तरे।
वपुरीदृशमीश तावकं हृदयालम्बनमस्तु मे सदा॥ ५३

नवनीरदनीलिमद्युतिर्नमनीयो निगमैर्निरन्तरम्।
निरये निपतन्तमाशु मां नयनेनापि सनाथयेद्विभुः॥ ५४

प्रणिपत्य हरे भवन्तमद्धा विनिबद्धाञ्जलिरेकमेव याचे।
जनिरस्तु कुले कृषीवलानामपि गोविन्दपदारविन्दभावः॥ ५५

वाचा निर्मलया सुधामधुरया यां नाथ शिक्षामदाः
तां स्वप्नेऽपि न संस्मराम्यहमहंभावावृतो निस्त्रपः।
इत्यागःशतशालिनं पुनरपि स्वीयेषु मा बिभ्रतः
त्वत्तो नास्ति दयानिधिर्यदुपते मत्तो न मत्तः परः॥ ५६

पातालं व्रज याहि वा सुरपुरीमारोह मेरोः शिरः
पारावारपरम्परां तर तथाप्याशा न शान्ता तव।
आधिव्याधिजरापराहत यदि क्षेमं निजं वाञ्छसि
श्रीकृष्णेति रसायनं रसय रे शून्यैः किमन्यैः श्रमैः॥ ५७

वज्रं पापमहीभृतां भवगदोद्रेकस्य सिद्धौषधं
मिथ्याज्ञाननिशाविशालतमसस्तिग्मांशुबिम्बोदयः।

क्रूरक्लेशमहीरुहामुरुतरज्वालाजटालः शिखी
द्वारं निर्वृतिसद्मनो विजयते कृष्णेति वर्णद्वयम् ।। ५८

विशालविषयाटवीवलयलग्नदावानल
प्रसृत्वरशिखावलीविकलितं मदीयं मनः ।
अमन्दमिलदिन्दिरे निखिलमाधुरीमन्दिरे
मुकुन्दमुखचन्दिरे चिरमिदं चकोरायताम् ।। ५९

सुरस्रोतस्विन्याः पुलिनमधितिष्ठन्नयनयोः
विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान् ।
विधूतान्तर्ध्वान्तो मधुरमधुरायां चिति कदा
निमग्नः स्यां कस्यांचन नवनभस्याम्बुदरुचि ।। ६०

*___*___*

## जगन्नाथदण्डकम्

जय जय नारायण अपारभवसागरोत्तारपरायण सनकसनन्दनसनातनप्रभृतियोगिवरविचिन्त्यमानदिव्यतत्त्व स्वमायाविलसिताध्यासपरिणमिताशेषभूततत्त्व त्रितत्त्व त्रिदण्डधर त्रिणाचिकेत त्रिमधुत्रिसुपर्णोपगीयमानदिव्यज्ञान च्छन्दोमय स्वासनसुपर्णप्रिय भक्तप्रिय भक्तजनैकवत्सल स्वमायाजालव्यवहितात्मस्वरूप विश्वरूप विश्वप्रकाश विश्वतोमुख विश्वतोक्षि विश्वतःश्रवण विश्वतःपादशिरोग्रीव विश्वहस्तनासारसनात्वकेशलोमलिङ्ग सर्वलोकात्मक सर्वलोकसुखावह सर्वलोकोपकारक सर्वलोकनमस्कृत लीलाविलासितकोटि पद्मोद्भवरुद्रेन्द्रमरुदश्विसाध्य सिद्धगणप्रणताशेषसुरा सुरत्रिभुवनगुरो न कस्यापि ज्ञानगोचर नमस्ते नमस्ते ।

(श्रीस्कन्दपुराणे)

# जितंते स्तोत्रम्

## प्रथमभागः

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ।। १

ओं नमो हिरण्यगर्भाय प्रधानाध्यक्षरूपिणे।
ओं नमो वासुदेवाय शुद्धज्ञान स्वरूपिणे ।।

देवानां दानवानां च सामान्यमधिदैवतम्।
सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ।। २

एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा।
अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ।। ३

संसारसागरं घोरमनन्तक्लेशभाजनम्।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ।। ४

न ते रूपं न चाकारो नायुधानि न चास्पदम्।
तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ।। ५

नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित्।
नैव किञ्चिदसिद्धं ते न च सिद्धोऽसि कस्यचित् ।। ६

कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्।
योगानां परमां सिद्धिं परमं ते पदं विदुः ।। ७

अहं भीतोऽस्मि देवेश संसारेऽस्मिन्भयावहे।
पाहि मां पुंडरीकाक्ष न जाने शरणं परम् ।। ८

कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत।
शरीरे च गतौ चापि वर्तते मे महद्भयम् ।। ९

त्वत्पादकमलादन्यन्न मे जन्मान्तरेष्वपि।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम्॥ १०

विज्ञानं यदिदं प्राप्तं यदिदं स्थानमर्जितम्।
जन्मान्तरेऽपि मे देव मा भूत्तस्य परिक्षयः॥ ११

दुर्गतावपि जातायां त्वद्गतो मे मनोरथः।
यदि नाशं न विन्देत तावतास्मि कृती सदा॥ १२

न कामकलुषं चित्तं मम ते पादयोः स्थितम्।
कामये वैष्णवत्वं तु सर्वजन्मसु केवलम्॥ १३

सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत।
किंकरोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः॥ १४

इत्येवमनया स्तुत्या स्तुत्वा देवं दिने दिने।
किंकरोऽस्मीति चात्मानं देवायैवं निवेदयेत्॥ १५

यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम।
मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि॥ १६

अहङ्कारार्थकामेषु प्रीतिरद्यैव नश्यतु।
त्वां प्रपन्नस्य मे देव वर्धतां श्रीमति त्वयि॥ १७

क्वाहमत्यन्तदुर्बुद्धिः क्व चात्महितवीक्षणम्।
यद्धितं मम देवेश तदाज्ञापय माधव॥ १८

सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च।
सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे॥ १९

उपचारापदेशेन कृतानहरहर्मया।
अपचारानिमान्सर्वान् क्षमस्व पुरुषोत्तम॥ २०

द्वितीयभागः

जितं ते पुंडरीकाक्ष पूर्णषाड्गुण्यविग्रह।
परानन्द पर ब्रह्मन्नमस्ते परमात्मने।। १

नमस्ते पीतवसन नमः कटकधारिणे।
नमो नीलालकाबद्धवेणीसुंदरविग्रह।। २

स्फुरद्वलयकेयूरनूपुराङ्गदभूषणैः।
शोभनैर्भूषिताकार कल्याणगुणवारिधे।। ३

करुणापूर्णहृदय शङ्खचक्रगदाधर।
अमृतानन्दपूर्णाभ्यां लोचनाभ्यां विलोक्य।। ४

कृशं कृतघ्नं दुष्कर्मकारिणं पापभाजनम्।
अपराधसहस्राणामाकरं करुणाकर।। ५

कृपया मां केवलया गृहाण मधुराधिप।
विषयार्णवमग्नं मामुद्धर्तुं त्वमिहार्हसि।। ६

पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव हि।
विद्या धनं च काम्यं च नान्यत्किञ्चित्त्वया विना।। ७

यत्र कुत्र कुले वासो येषु केषु भवोऽस्तु मे।
तव दास्यैकभोगे स्यात्सदा सर्वत्र मे रतिः।। ८

मनसा कर्मणा वाचा शिरसा वा कथंचन।
त्वां विना नान्यमुद्दिश्य करिष्ये किञ्चिदप्यहम्।। ९

पाहि पाहि जगन्नाथ कृपया भक्तवत्सल।
अनाथोऽहमधन्योऽहमकृतार्थः कथंचन।। १०

नृशंसः पापकृत्क्रूरो वञ्चको निष्ठुरः सदा।
भवार्णवनिमग्नं मामनन्यं करुणोदधे।। ११

करुणापूर्णदृष्टिभ्यां दीनं मामवलोकय।
त्वदग्रे पतितं त्यक्तुं तावकं नार्हसि प्रभो।। १२

मया कृतानि पापानि त्रिविधानि पुनः पुनः।
त्वत्पादपंकजं प्राप्तुं नान्यस्त्वत्करुणां विना।। १३

साधनानि प्रसिद्धानि यागादीन्यब्जलोचन।
त्वदाज्ञया प्रयुक्तानि त्वामुद्दिश्य कृतानि वै।। १४

भक्त्यैकलभ्यः पुरुषोत्तमोऽसौ जगत्प्रसूतिस्थितिनाशहेतुः।
अकिंचनोऽनन्यगतिः शरण्य गृहाण मां क्लेशिनमम्बुजाक्ष।। १५

धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन।
त्वत्पादपङ्कजास्वादजीवितं दीयतां मम।। १६

कामये तावकत्वेन परिचर्यानुवर्तनम्।
नित्यकिंकरभावेन परिगृह्णीष्व मां विभो।। १७

लोकं वैकुण्ठनामानं दिव्यं षाड्गुण्यसंयुतम्।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम्।। १८

नित्यसिद्धैः समाकीर्णं तन्मयैः पाञ्चकालिकैः।
सभाप्रासादसंयुक्तं वनैश्चोपवनैर्युतम्।। १९

वापीकूपतटाकैश्च वृक्षखण्डैः सुमंडितम्।
अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम्।। २०

प्रकृष्टसत्त्वसंपन्नं कदा द्रक्ष्यामि चक्षुषा।
क्रीडन्तं रमया सार्धं लीलाभूमिषु केशवम्।। २१

मेघश्यामं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा।
उन्नसं चारुवदनं बिम्बोष्ठं शोभिताननम्।। २२

विशालवक्षसं श्रीशं कंबुग्रीवं जगद्गुरुम्।
आजानुबाहुपरिघमुन्नतांसं मधुद्विषम्।। २३

विशालनिम्ननाभिं तमापीनजघनं हरिम्।
करभोरुं श्रियः कान्तं कदा द्रक्ष्यामि चक्षुषा।। २४

शङ्खचक्रगदापद्मैरङ्कितं पादपङ्कजम्।
शरच्चन्द्रशताक्रान्तनखरजिविराजितम्।। २५

सुरासुरैर्वन्द्यमानमृषिभिर्वन्दितं सदा।
कदा वा देव मूर्धानं मामकं मंडयिष्यति।। २६

कदा गंभीरया वाचा श्रिया युक्तो जगत्पतिः।
चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यति।। २७

कदाऽहं राजराजेन गणनाथेन चोदितः।
चरेयं भगवत्पादपरिचर्यानुवृत्तिषु।। २८

शान्ताय च विशुद्धाय तेजसे परमात्मने।
नमो भगवते विष्णो वासुदेवामितद्युते।। २९

नमः सर्वगुणातीत षड्गुणायादिवेधसे।
सत्यज्ञानानन्तगुण ब्रह्मणे परमात्मने।। ३०

चतुः पञ्चनवव्यूहदशद्वादशमूर्तये।
नमस्ते वासुदेवाय ब्रह्मणे चतुरात्मने।। ३१

नमोऽनन्ताय विश्वाय विश्वातीताय चक्रिणे।
नमस्ते पञ्चकालज्ञ पञ्चकालपरायण।। ३२

पञ्चकालैकमनसां त्वमेव गतिरव्ययः।
परे व्योम्नि स्थितं देवं निरवद्यं निरञ्जनम्।। ३३

अप्रमेयमजं विष्णुमब्जनाभं सुरेश्वरम्।
वागतीतं परं शान्तं शरणं त्वां गतोऽस्म्यहम्।। ३४

धुर्यं द्वन्द्वातिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम्।
विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा।। ३५

मोक्षं सालोक्यसारूप्यं प्रार्थये न कदाचन।
इच्छाम्यहं महाबाहो सायुज्यं तव सुव्रत।। ३६

सकलावरणातीत किंकरोऽस्मि तवानघ।
पुनः पुनः किंकरोऽस्मि तवाहं पुरुषोत्तम।। ३७

आसनाद्यनुयागान्तमर्चनं यन्मया कृतम्।
भोगहीनं क्रियाहीनं मन्त्रहीनमभक्तिकम्।। ३८

तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु।
इति स्तोत्रेण देवेशं स्तुत्वा मधुनिघातिनम्।। ३९

यागावसानसमये देवदेवस्य चक्रिणः।
नित्यकिंकरभावेन स्वात्मानं विनिवेदयेत्।। ४०

तृतीयभागः

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज।। १

विज्ञापनमिदं देव शृणु त्वं पुरुषोत्तम।
नरनारायणाभ्यां च श्वेतद्वीपनिवासिभिः ।। २

नारदाद्यैर्मुनिगणैः सनकाद्यैश्च योगिभिः।
ब्रह्मेशाद्यैः सुरगणैः पंचकालपरायणैः ।। ३

पूज्यसे पुंडरीकाक्ष दिव्यमन्त्रैर्महर्षिभिः।
पाखंडधर्मसंकीर्णे भगवद्भक्तिवर्जिते ।। ४

कलौ जातोऽस्मि देवेश सर्वधर्मबहिष्कृते।
कथं त्वामसमाचारः पापप्रसवभूरहम् ।। ५

अर्चयामि दयासिन्धो पाहि मां शरणागतम्।
तापत्रयदवाग्नौ मां दह्यमानं सदा विभो ।। ६

त्राहि मां पुंडरीकाक्ष केवलं कृपया तव।
जन्ममृत्युजराव्याधिदुःखसंतप्तदेहिनम् ।। ७

पालयाशु दृशा देव तव कारुण्यगर्भया।
इन्द्रियाणि मया जेतुमशक्यं पुरुषोत्तम ।। ८

शरीरं मम देवेश व्याधिभिः परिपीडितम्।
मनो मे पुंडरीकाक्ष विषयानेव धावति ।। ९

वाणी मम हृषीकेश मिथ्यापारुष्यदूषिता।
एवं साधनहीनोऽहं किं करिष्यामि केशव ।। १०

रक्ष मां कृपया कृष्ण भवाब्धौ पतितं सदा।
अपराधशतं चैव सहस्रमयुतं तथा ।। ११

अर्बुदं चाप्यसंख्येयं करुणाब्धे क्षमस्व मे।
यच्चापराधं कृतवानज्ञानात्पुरुषोत्तम ।। १२

मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि।
अज्ञत्वादप्यशक्तत्वादालस्याद्दुष्टभावनात्॥ १३

कृतापराधं कृपणं क्षन्तुमर्हसि मां विभो।
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
तानि सर्वाणि मे देव क्षमस्व मधुसूदन॥ १४

यज्जन्मनः प्रभृति मोहवशं गतेन
नानापराधशतमाचरितं मया ते।
अन्तर्बहिश्च सकलं तव पश्यतो मे
क्षन्तुं त्वमर्हसि हरे करुणावशेन ॥ १५

चतुर्थभागः

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन।
नमस्ते वासुदेवाय शान्तानन्तचिदात्मने॥ १

अध्यक्षाय स्वतन्त्राय निरपेक्षाय शासते।
अच्युतायाविकाराय तेजसां निधये नमः॥ २

प्रधानपुरुषेशाय नमस्ते पुरुषोत्तम।
क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्तये॥ ३

त्रिभिर्ज्ञानबलैश्वर्यवीर्यशक्त्यन्तरात्मने।
त्रियुगाय नमस्तेऽस्तु नमस्ते चतुरात्मने॥ ४

चतुःपञ्चनवव्यूहदशद्वादशमूर्तये।
अनेकमूर्तये तुभ्यममूर्तायैकमूर्तये॥ ५

नारायण नमस्तेऽस्तु पुंडरीकायतेक्षण।
सुभ्रूललाट सुनस सुस्मिताधरपल्लव॥ ६

पीनवृत्तायतभुज श्रीवत्सकृतलक्षण।
तनुमध्य विशालाक्ष पद्मनाभ नमोऽस्तु ते॥ ७

विलासविक्रमाक्रान्तत्रैलोक्यचरणाम्बुज।
नमस्ते पीतवसन स्फुरन्मकरकुण्डल ॥ ८

स्फुरत्किरीटकेयूरहारकौस्तुभभूषण।
पञ्चायुध नमस्तेऽस्तु नमस्ते पाञ्चकालिक ॥ ९

पञ्चकालपरैकान्तियोगक्षेममहाप्रभो।
नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ॥ १०

नमस्ते ब्रह्मरुद्रादि लोकयात्रापरिच्छद।
जन्मप्रभृति दासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ॥ ११

त्वं च स्वामी गुरुश्चात्मा पिता च मम माधव।
अपि त्वां भगवन् ब्रह्मा शर्वः शक्रो महर्षयः ॥ १२

द्रष्टुं यष्टुमपि स्तोतुं न हि स्मर्तुमपीशते।
तापत्रयमहाग्राहभीषणे भवसागरे ॥ १३

मज्जतां नाथ नौरेषा प्रणतिस्त्वत्पदार्पिता।
अनाथाय जगन्नाथ शरण्य शरणार्थिने ॥ १४

प्रसीद सीदते मह्यं नमस्ते भक्तवत्सल।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चनम् ॥ १५

तत्क्षंतव्यं प्रपन्नानामपराधसहो ह्यसि।
अज्ञानाद्यदि वा ज्ञानादशुभं यत्कृतं मया ॥ १६

क्षंतव्यं तदशेषेण दास्येन च गृहाण माम्।
सर्वेषु देशकालेषु सर्वावस्थासु चाच्युत।
किंकरोऽस्मि हृषीकेश भूयो भूयोऽस्मि किंकरः ॥ १७

पञ्चमभागः

जितं ते पुडंरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ १

नमस्ते वासुदेवाय शान्तानन्ताजितात्मने।
अजिताय नमस्तुभ्यं षाड्गुण्यनिधये नमः ॥ २

महाविभूतिसंस्थाय नमस्ते पुरुषोत्तम।
सहस्रशिरसे तुभ्यं सहस्रचरणाय ते ॥ ३

सहस्रबाहवे तुभ्यं सहस्रनयनाय ते।
अमूर्ताय नमस्तुभ्यमेकमूर्ताय ते नमः ॥ ४

अनेकमूर्तये तुभ्यमक्षराय च ते नमः।
व्यापिने वेदवेद्याय नमस्ते परमात्मने ॥ ५

चिन्मात्ररूपिणे तुभ्यं नमस्त्रय्यंतमूर्तये।
अणिष्ठाय स्थविष्ठाय महिष्ठाय च ते नमः ॥ ६

नेदिष्ठाय यविष्ठाय सर्वान्तर्यामिने नमः।
वर्षिष्ठाय जविष्ठाय कनिष्ठाय च ते नमः ॥ ७

पञ्चात्मने नमस्तुभ्यं सर्वान्तर्यामिने नमः।
कल्पनाक्रोडरूपाय सृष्टिस्थित्यन्तहेतवे ॥ ८

नमस्ते गुणरूपाय गुणरूपादिवर्तिने।
व्यस्ताय च समस्ताय समस्तव्यस्तरूपिणे ॥ ९

आदिमध्यान्तशून्याय सत्त्वस्थाय नमो नमः।
प्रणवप्रतिपाद्याय नमः प्रणवरूपिणे ॥ १०

लोकयात्राप्रसिद्ध्यर्थं स्रष्टृब्रह्मादिरूपिणे।
नमस्तुभ्यं नृसिंहादिमूर्तिभेदाय विष्णवे ॥ ११

विपाकैः कर्मभिः क्षोभैरस्पृष्टवपुषे नमः।
नित्यसाधारणानेकलोकरक्षापरिच्छिदे ॥ १२

सच्चिदानन्दरूपाय वरेण्याय नमो नमः।
यजमानाय यज्ञाय यष्टव्याय नमो नमः ॥ १३

इज्याफल नमस्तुभ्यं नम इज्यादिशीलिने।
नमः परमहंसाय नमः सत्त्वगुणाय च।। १४

स्थिताय परमव्योम्नि भूयो भूयो नमो नमः।
संसारविषयावर्तसङ्कुले च महाभये।। १५

अपारे दुस्तरेऽगाधे पतितं कर्मभिः स्वकैः।
अनाथमतिगंभीरं दयया परया हरे।। १६

मामुद्धर दयासिन्धो सिन्धोरस्मात्सुदुस्तरात्।
मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम्।। १७

तत्सर्वं क्षम्यतां देव दीनं मामात्मसात्कुरु।
नाहं हितं न जानामि त्वां व्रजाम्येव केवलम्।। १८

बुद्ध्वैवं नय गोविन्द मुक्त्युपायेन वर्त्मना।
त्वमेव वेत्सि श्रेयो मे नेदमेतदितीति च।
बुद्धियोगं च मे देहि येन त्वामुपयाम्यहम्।। १९

षष्ठभागः

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज।। १

श्रीमद्द्वारवतीनाथ वर्धतां विजयी भवान्।
दिव्यं त्वदीयमैश्वर्यं निर्मर्यादविजृम्भितम्।। २

देवीभूषायुधैर्नित्यैर्मुक्तैर्मोक्षैकलक्षणैः।
सत्योत्तरैस्त्वदीयैश्च सङ्गस्थाभिरसस्तव।। ३

प्राकारगोपुरवरप्रासादमणिमण्डपाः।
शालिमुद्गतिलादीनां शाला शैलकुलोज्ज्वला।। ४

रत्नकाञ्चनकौशेयक्षौमक्रमुकशालिकाः।
शय्यागृहाणि पर्यङ्कवर्याः स्थूलासनानि च।। ५

कनत्कनकभृङ्गारपतद्ग्रहकलाचिकाः ।
छत्रचामरमुख्याश्च सन्तु नित्याः परिच्छदाः ।। ६
अस्तु निस्तुलमव्यग्रं नित्यमभ्यर्चनं तव ।
पक्षे पक्षे विजृंभंतां मासि मासि महोत्सवाः ।। ७
मणिकाञ्चनचित्राणि भूषणान्यंबराणि च ।
काश्मीरसारकस्तूरिकर्पूराद्यनुलेपनम् ।। ८
कोमलानि च दामानि कौसुमैः सौरभोद्गमैः ।
धूपाः कर्पूरदीपाश्च सन्तु नित्याः परिच्छदाः ।। ९
नृत्तगीतयुतं वाद्यं नित्यमत्र विवर्धताम् ।
श्रोत्रेषु नः सुधाधाराः कल्पन्तां काहलस्वनाः ।। १०
कन्दमूलफलोदग्रं काले काले चतुर्विधम् ।
सूपापूपघृतक्षीरशर्करासहितं हविः ।। ११
घनसारशिरोदग्रं क्रमुकाष्टदलान्वितम् ।
विमलानि च ताम्बूलदलानि स्वीकुरु प्रभो ।। १२
प्रीतिभीतियुतो भूयान्नित्यं परिजनस्तव ।
भक्तिमन्तो हि भुंजन्तु पौरा जानपदैः सह ।। १३
धरणीधनरत्नानि वितरन्तु चिरं तव ।
कैङ्कर्यमखिलं सर्वे कुर्वन्तु क्षोणिपालकाः ।। १४
प्रेमदिग्धदृशास्मेरं प्रेक्षमाणास्त्वदाननम् ।
महान्तः सन्ततं सन्तो मङ्गलानि प्रयुञ्जताम् ।
सामम्येवमवन्नित्यं पालयन् कुशली भवान् ।। १५

(पाञ्चरात्रे)

ब्रह्मानन्दकृतं

## दीनबंध्वष्टकम्

यस्मादिदं जगदुदेति चतुर्मुखाद्यं
यस्मिन्नवस्थितमशेषमशेषमूले ।
यन्नोपयाति विलयं च तमस्तमन्ते
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। १

चक्रं सहस्रकरचारु करारविन्दे
गुर्वी गदा दरवरश्च विभाति यस्य ।
पक्षीन्द्रपृष्ठपरिरोपितपादपद्मो
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। २

येनोद्धृता वसुमती सलिले निमग्ना
नग्ना च पांडववधूः स्थगिता दुकूलैः ।
संमोचितो जलचरस्य मुखाद्गजेन्द्रो
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। ३

यस्यार्द्रदृष्टिवशतस्तु सुराः समृद्धिं
कोपेक्षणेन दनुजा विलयं व्रजन्ति ।
भीताश्चरन्ति च यतोऽर्कयमानिलाद्या
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। ४

गायन्ति सामकुशला यमजं मखेषु
ध्यायन्ति धीरमतयो यतयो विविक्ते ।
पश्यन्ति योगिपुरुषाः पुरुषं शरीरे
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। ५

आकाररूपगुणयोगविवर्जितोऽपि
भक्तानुकंपननिमित्तगृहीतमूर्तिः ।
यः सर्वगोऽपि कृतशेषशरीरशय्यो
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। ६

यस्याङ्घ्रिपङ्कजमनिद्रमुनीन्द्रबृन्दैः
आराध्यते भवदवानलदाहशान्त्यै ।
सर्वापराधमविचिन्त्य ममाखिलात्मा
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। ७

यन्नामकीर्तनपरः श्वपचोऽपि नूनं
हित्वाऽखिलं कलिमलं भुवनं पुनाति ।
दग्ध्वा ममाघमखिलं करुणेक्षणेन
दृग्गोचरो भवतु मेऽद्य स दीनबंधुः ।। ८

दीनबन्ध्वष्टकं पुण्यं ब्रह्मानन्देन भाषितम् ।
यः पठेत्प्रयतो नित्यं तस्य विष्णुः प्रसीदति ।। ९

## द्वादशस्तोत्रम्

वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् ।
इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ।। १

नमामि निखिलाधीशकिरीटाघृष्टपीठवत् ।
हृत्तमःशमनेऽर्काभं श्रीपतेः पादपंकजम् ।। २

जांबूनदांबराधारं नितम्बं चिन्त्यमीशितुः ।
स्वर्णमञ्जीरसंवीतमारूढं जगदम्बया ।। ३

उदरं चिन्त्यमीशस्य तनुत्वेऽप्यखिलंभरम् ।
वलित्रयांकितं नित्यमुपगूढं श्रियैकया ।। ४

स्मरणीयमुरो विष्णोरिन्दिरावासमीशितुः ।
अनन्तमंतवदिव भुजयोरन्तरं गतम् ।। ५

शङ्खचक्रगदापद्मधराश्चिन्त्या हरेर्भुजाः ।
पीनवृत्ता जगद्रक्षाकेवलोद्योगिनोऽनिशम् ।। ६

सततं चिन्तयेत्कण्ठं भास्वत्कौस्तुभभासकम् ।
वैकुण्ठस्याखिला वेदा उद्गीर्यंतेऽनिशं यतः ।। ७

स्मरेत यामिनीनाथसहस्रामितकान्तिमत् ।
भवतापापनोदीड्यं श्रीपतेर्मुख पङ्कजम् ।। ८

पूर्णानिन्यसुखोद्भासिमन्दस्मितमधीशितुः ।
गोविन्दस्य सदा चिन्त्यं नित्यानन्दपदप्रदम् ।। ९

स्मरामि भवसन्तापहानिदामृतसागरम् ।
पूर्णानिन्दस्य रामस्य सानुरागावलोकनम् ।। १०

ध्यायेदजस्रमीशस्य पद्मजादिप्रतीक्षितम् ।
भ्रूभङ्गं पारमेष्ठ्यादिपददायि विमुक्तिदम् ।। ११

सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः ।
नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः ।। १२

इति प्रथमोऽध्यायः

सुजनोदधिसंवृद्धिपूर्णचन्द्रो गुणार्णवः ।
अमन्दानन्दसान्द्रो नः प्रीयतामिन्दिरापतिः ।। १

रामाचकोरीविधवे दुष्टदर्पोदवह्नये ।
सत्पान्थजनगेहाय नमो नारायणाय ते ।। २

चिदचिद्भेदमखिलं विधायाधाय भुञ्जते ।
अव्याकृतगृहस्थाय रमाप्रणयिने नमः ।। ३

अमन्दगुणसारोऽपि मन्दहासेन वीक्षितः ।
नित्यमिन्दिरयानन्दसान्द्रो यो नौमि तं हरिम् ।। ४

वशी वशो न कस्यापि योऽजितो विजिताखिलः ।
सर्वकर्ता न क्रियते तं नमामि रमापतिम् ।। ५

अगुणाय गुणोद्रेकस्वरूपायादिकारिणे ।
विदारितारिसङ्घाय वासुदेवाय ते नमः ।। ६

आदिदेवाय देवानां पतये सादितारये ।
अनाद्यज्ञानपाराय नमो वरवराय ते ।। ७

अजाय जनयित्रेऽस्य विजिताखिलदानव ।
अजादिपूज्यपादाब्ज नमस्ते गरुडध्वज ।। ८

इन्दिरामन्दसान्द्राग्र्यकटाक्षप्रेक्षितात्मने ।
अस्मदिष्टैककार्याय पूर्णाय हरये नमः ।। ९

इति द्वितीयोऽध्यायः

कुरु भुंक्ष्व च कर्म निजं नियतं हरिपादविनम्रधिया सततम् ।
हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः ।। १

न ततोऽस्त्यपरं जगतीड्यतमं परमात्परतः पुरुषोत्तमतः ।
तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे ।। २

यततोऽपि हरेः पदसंस्मरणे सकलं ह्यघमाशु लयं व्रजति ।
स्मरतस्तु विमुक्तिपदं परमं स्फुटमेष्यति तत् किमपाक्रियते ।। ३

शृणुतामलसत्यवचः परमं शपथेरितमुच्छ्रितबाहुयुगम् ।
न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ।। ४

यदि नाम परो न भवेत्स हरिः कथमस्य वशे जगदेतदभूत् ।
यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ।। ५

न च कर्मविभामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः ।
चिदचित्तनुसर्वमसौ तु हरिर्यमयेदिति वैदिकमस्ति वचः ।। ६

व्यवहारभिदापि गुरोर्जगतां न तु चित्तगता स हि चोद्यपरम् ।
बहवः पुरुषाः पुरुषप्रवरो हरिरित्यवदत्स्वयमेव हरिः ।। ७

चतुराननपूर्वविमुक्तगणा हरिमेत्य तु पूर्ववदेव सदा ।
नियतोच्चविनीचतयैव निजां स्थितिमापुरिति स्म परं वचनम् ।। ८

आनन्दतीर्थसन्नाम्ना पूर्णप्रज्ञाभिधायुजा ।
कृतं हर्यष्टकं भक्त्या पठतः प्रीयते हरिः ।। ९

इति तृतीयोऽध्यायः

निजपूर्णसुखामितबोधतनुः परशक्तिरनन्तगुणः परमः ।
अजरामरणः सकलार्तिहरः कमलापतिरीड्यतमोऽवतु नः ।। १

यदसुप्तिगतोऽपि हरिः सुखवान् सुखरूपिणमाहुरतो निगमाः ।
स्वमतिप्रभवं जगदस्य यतः परबोधतनुं च ततः स्वपतिम् ।। २

बहुचित्रजगद्बहुधाकरणात्परशक्तिरनन्तगुणः परमः ।
सुखरूपममुष्य पदं परमं स्मरतस्तु भविष्यति तत्सततम् ।। ३

स्मरणे हि परेशितुरस्य विभोर्मलिनानि मनांसि कुतः करणम् ।
विमलं हि पदं परमं स्वरतं तरुणार्कसवर्णमजस्य हरेः ।। ४

विमलैः श्रुतिशाणनिशाततमैः सुमनोसिभिराशु निहत्य दृढम् ।
बलिनं निजवैरिणमात्मतमोभिदमीशमनन्तमुपास्व हरिम् ।। ५

स हि विश्वसृजो विभुशंभुपुरन्दरसूर्यमुखानपरानमरान् ।
सृजतीड्यतमोऽवति हन्ति निजं पदमापयति प्रणतान्सुधिया ।। ६

परमोऽपि रमेशितुरस्य समो न हि कश्चिदभून्न भविष्यति च ।
क्वचिदद्यतनोऽपि न पूर्णसदागणितेड्यगुणानुभवैकतनोः ।। ७

इति देववरस्य हरेः स्तवनं कृतवान्मुनिरुत्तममादरतः ।
सुखतीर्थपदाभिहितः पठतस्तदिदं भवति ध्रुवमुच्चसुखम् ।। ८

इति चतुर्थोऽध्यायः

वासुदेवापरिमेयसुधामन् शुद्धसदोदित सुन्दरिकान्त ।
धराधरधारण वेधुरधर्तः सौधृतिदीधितिवेधृविधातः ।। १

अधिकबन्धं रन्धय बोधाच्छिन्धि पिधानं बन्धुरमद्धा ।
केशव केशवशासक वन्दे पाशधरार्चित शूरवरेश ।। २

नारायणामलकारण वन्दे कारणकारण पूर्ण वरेण्य ।
माधव माधवसाधक वन्दे बोधकबोधकशुद्धसमाधे ।। ३

गोविन्द गोविन्दपुरन्दर वन्दे स्कन्दसुनन्दनवन्दितपाद ।
विष्णो स्रजिष्णो ग्रसिष्णो विवन्दे कृष्ण सदुष्णवधिष्णो सुधृष्णो ।

मधुसूदन दानवसादन वन्दे दैवतमोदित वन्दितपाद ।
त्रिविक्रम निष्क्रमविक्रम वन्दे सुक्रमसङ्क्रमहुङ्कृतवक्र ।। ५

वामन वामनभामन वन्दे सामन सीमन शामन सानो ।
श्रीधर श्रीधर शन्धर वन्दे भूधरवार्धरकन्धरधारिन् ।। ६

हृषीकेश सुकेश परेश विवन्दे शरणेश कलेश बलेश सुखेश ।
पद्मनाभ शुभोद्भव वन्दे संभृतलोकभराभर भूरे ।। ७

दामोदर दूरतरान्तर वन्दे दारितपारगपार परस्मात् ।। ८

आनन्दतीर्थमुनींद्रकृता हरिगीतिरियं परमादरतः ।
परलोकविलोकनसूर्यनिभा हरिभक्तिविवर्धनशौंडतमा ।। ९

इति पञ्चमोऽध्यायः

मत्स्यकरूप लयोदविहारिन् वेदविनेतृचतुर्मुखवन्द्य ।
कूर्मस्वरूपकमन्दरधारिन् लोकविधारक देव वरेण्य ।। १

सूकररूपक दानवशत्रो भूमिविधारक यज्ञवराङ्ग ।
देव नृसिंह हिरण्यकशत्रो सर्वभयान्तक दैवतबन्धो ।। २

वामन वामनमाणववेष दैत्यवरान्तक कारणरूप ।
राम भृगूद्वह सूर्जितदीप्ते क्षत्रकुलान्तक शंभुवरेण्य ।। ३

राघव राघव राक्षसशत्रो मारुतिवल्लभ जानकीकान्त ।
देवकीनन्दन सुन्दररूप रुक्मिणीवल्लभ पाण्डवबन्धो ।। ४

देवकीनन्दन नन्दकुमार वृन्दावनाञ्चन गोकुलचन्द्र ।
कन्दफलाशन सुन्दररूप नन्दितगोकुल वन्दितपाद ।। ५

इन्द्रसुतावक नन्दकहस्त चन्दनचर्चित सुन्दरीनाथ ।
इन्दीवरोदरदलनयन मन्दरधारिन् गोविन्द वन्दे ।। ६

चन्द्रशतानन कुन्दसुहास नन्दितदेवतानन्द सुपूर्ण ।
दैत्यविमोहक नित्य सुखादे देव सुबोधक बुद्धस्वरूप ।। ७

दुष्टकुलान्तक कल्किस्वरूप धर्मविवर्धन मूलयुगादे ।
नारायणामलकारणमूर्ते पूर्णगुणार्णव नित्यविबोध ।। ८

सुखतीर्थमुनीन्द्रकृता हरिगाथा पापहरा शुभनित्य सुखार्था ।। ९

इति षष्ठोऽध्याय:

विश्वस्थितिप्रलयसर्गमहाविभूति
वृत्तिप्रकाशनियमावृतिबन्धमोक्षः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।। १

ब्रह्मेशशक्ररविधर्मशशाङ्कपूर्व
गीर्वाणसंततिरियं यदपाङ्गलेशम् ।
आश्रित्य विश्वविजयं विसृजत्यचिन्त्या
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।। २

धर्मार्थिकामसुमतिप्रचयाद्यशेष
सन्मङ्गलं विदधते यदपाङ्गलेशम्।
आश्रित्य तत्प्रणतसत्प्रणता अपीड्य
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ३

षड्वर्गनिग्रहनिरस्तसमस्तदोषा
ध्यायन्ति विष्णुमृषयो यदपाङ्गलेशम्।
आश्रित्य यानपि समेत्य न याति दुःखं
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ४

शेषाहिवैरिशिवशक्रमनुप्रधान
चित्रोरुकर्मरचनं यदपाङ्गलेशम्।
आश्रित्य विश्वमखिलं विदधाति धाता
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ५

शक्रोग्रदीधिति हिमाकरसूर्यसूनुः
पूर्वं निहत्य निखिलं यदपाङ्गलेशम्।
आश्रित्य नृत्यति शिवः प्रकटोरुशक्तिः
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ६

यत्पादपङ्कजमहासनतामवाप
शर्वादिवन्द्यचरणो यदपाङ्गलेशम्।
आश्रित्य नागपतिरन्यसुरैर्दुरापां
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ७

नागारिरुग्रबलपौरुष आप विष्णो
र्वाहत्वमुत्तमजवो यदपाङ्गलेशम्।
आश्रित्य शक्रमुखदेवगणैरचिन्त्यं
श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥ ८

आनन्दतीर्थमुनिसन्मुखपङ्कजोत्थं
साक्षाद्रमाहरिमनः प्रियमुत्तमार्थम्।
भक्त्या पठत्यजितमात्मनि सन्निधाय
यः स्तोत्रमेतदभियाति तयोरभीष्टम्॥ ९

इति सप्तमोऽध्यायः

वन्दिताशेषवन्द्योरुवृन्दारकं चन्दनाचर्चितोदारपीनांसकम्।
इन्दिराचञ्चलापाङ्गनीराजितं मन्दरोद्धारिवृत्तोद्भुजाभोगिनम्।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्॥ १

सृष्टिसंहारलीलाविलासाततं पुष्टषाड्गुण्य सद्विग्रहोल्लासिनम्।
दुष्टनिः शेषसंहारकर्मोद्यतं हृष्टपुष्टानुशिष्टप्रजासंश्रयम्॥
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्॥ २

उन्नतप्रार्थिताशेषसंसाधकं सन्नतालौकिकानन्ददश्रीपदम्।
भिन्नकर्माशयप्राणिसंप्रेरकं तन्न किं नेति विद्वत्सु मीमांसितम्।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्॥ ३

विप्रमुख्यैः सदा वेदवादोन्मुखैः सुप्रतापैः क्षितीशेश्वरैश्चार्चितम्।
अप्रतर्क्योरुसंविद्गुणं निर्मलं सप्रकाशाजरानन्दरूपं परम्।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्॥ ४

अत्ययो यस्य केनापि न क्वापि हि प्रत्ययो यद्गुणेषूत्तमानां परः।
सत्यसङ्कल्प एको वरेण्यो वशी मत्यनूनैः सदा वेदवादोदितः।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्॥ ५

पश्यतां दुःखसंतानिर्मूलनं दृश्यतां दृश्यतामित्यजेशार्चितम्।
नश्यतां दूरगं सर्वदाप्यात्मगं वश्यतां स्वेच्छया सज्जनेष्वागतम्।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्॥ ६

अग्रजं यः ससर्जाजमग्र्याकृतिं विग्रहो यस्य सर्वे गुणा एव हि।
उग्र आद्योऽपि यस्यात्मजाग्र्यात्मजः सद्गृहीतः सदा यः परं
दैवतम्।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्।। ७

अच्युतो यो गुणैर्नित्यमेवाखिलैः प्रच्युतोऽशेषदोषैः सदा पूर्तितः।
उच्यते सर्ववेदोरुवादैरजः स्वर्चितो ब्रह्मरुद्रेन्द्रपूर्वैः सदा।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्।। ८

धार्यते येन विश्वं सदाजादिकं वार्यते शेषदुःखं निजध्यायिनाम्।
पार्यते सर्वमन्यैर्न यत्पार्यते कार्यते चाखिलं सर्वभूतैः सदा।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्।। ९

सर्वपापानि यत्संस्मृतेः संक्षयं सर्वदा यान्ति भक्त्या
विशुद्धात्मनाम्।
शर्वगुर्वादिगीर्वाणसंस्थानदः कुर्वते कर्म यत्प्रीतये सज्जनाः।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्।। १०

अक्षयं कर्म यस्मिन्परे स्वर्पितं प्रक्षयं यान्ति दुःखानि यन्नामतः।
अक्षरो योऽजरः सर्वदैवामृतः कुक्षिगं यस्य विश्वं सदाजादिकम्।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्।। ११

नन्दितीर्थोरुसन्नमिनो नन्दिनः सन्दधानाः सदानन्ददेवे मतिम्।
मन्दहासारुणापाङ्गदत्तोन्नतिं नन्दिताशेषदेवादिवृन्दं सदा।
प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम्।। १२

इति अष्टमोऽध्यायः

अतिमततमोगिरिसमितिविभेदन पितामहभूतिद गुणगणनिलय।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण।। १

विधिभवमुखसुरसततसुवन्दित रमामनोवल्लभ भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। २

अगणितगुणगणमयशरीर हे विगलगुणेतर भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। ३

अपरिमितसुखनिधिविमलसुदेह हे विगतसुखेतर भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। ४

प्रचलितलयजलविहरण शाश्वतसुखमयमीन हे भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। ५

सुरदितिज सुबल विलुलित मन्दरधरपर कूर्म हे भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। ६

सगिरिवरधरातलवह सुसूकर परम विबोध हे भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। ७

अतिबलदितिसुतहृदयवि भेदन जय नृहरेऽमल भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। ८

बलिमुखदितिसुतविजयविनाशन जगदवनाजित भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। ९

अविजितकुनृपतिसमितिविखण्डन रमावर वीरप भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।। १०

खरतरनिशिचरदहन परामृत रघुवर मानद भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।।

सुललिततनुवर वरद महाबल यदुवर पार्थप भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।।

दितिसुतमोहन विमलविबोधन परगुणबुद्ध हे भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।।

कलिमलहुतवह सुभग महोत्सव शरणद कल्कीश हे भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।।

अखिलजनिविलय परसुखकारण परपुरुषोत्तम भव मम शरणम् ।
शुभतमकथाशयपरम सदोदित जगदेककारण राम रमारमण ।।

इति तव नुतिवर सततरतेर्भव सुशरणमुरुसुखतीर्थमुनेर्भगवन् ।।

इति नवमोऽध्यायः

अव नः श्रीपतिरप्रतिरधिकेशादिभवादे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १

सुरवंद्याधिप सद्धरभरिताशेषगुणालम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। २

सकलध्वान्तविनाशक परमानन्दसुधा हे ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ३

त्रिजगत्पोत सदार्चितचरणाशापतिधातो ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ४

त्रिगुणातीतविधारक परितो देहि सुभक्तिम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ५

शरणं कारणभावन भव मे तात सदाऽलम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ६

मरणप्राणद पालक जगदीशाऽव सुभक्तिम् ।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ७

तरुणादित्यसवर्णकचरणाब्जामलकीर्ते।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ८

सलिलप्रोत्थसरागकमणिवर्णोच्चनखादे।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ९

कजतूणीनिभपावन वरजङ्घामितशक्ते।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १०

इभहस्तप्रभ शोभनपरमोरःस्थलमाले।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। ११

असनोत्फुल्लसुपुष्पकसमवर्णावरणांते।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १२

शतमोदोद्भवसुन्दरवरपद्मोत्थितनाभे।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १३

जगदम्बामलसुन्दर गृहवक्षोवरयोगिन्।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १४

जगदागूहकपल्लवसमकुक्षे शरणादे।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १५

दितिजान्तप्रद चक्रदरगदायुग्वरबाहो।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १६

परमज्ञान महानिधिवदन श्रीरमणेन्दो।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १७

निखिलाघौघविनाशक परसौख्यप्रददृष्टे।
करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।। १८

परमानन्दसुतीर्थमुनिराजो हरिगाथाम्।
कृतवान्नित्यसुपूर्णैकपरमानन्दपदैषी ॥ १९

इति दशमोऽध्यायः

उदीर्णमजरं दिव्यममृतस्यंद्यधीशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ १

सर्वदेवपदोद्गीतमिन्दिरावासमुत्तमम्।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ २

सर्वदेवादिदेवस्य विदारितमहत्तमः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ३

उदारमादरान्नित्यमनिन्द्यं सुन्दरीपतेः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ४

इन्दीवरोदरनिभं सुपूर्णं वादिमोहदम्।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ५

दातृ सर्वामरैश्वर्यविमुक्त्यादेरहोवरम्।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ६

दूराद्दूरतरं यत्तु तदेवान्तिकमन्तिकात्।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ७

पूर्णसर्वगुणैकार्णमनाद्यन्तं सुरेशितुः ।
आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥ ८

आनन्दतीर्थमुनिना हरेरानन्दरूपिणः ।
कृतं स्तोत्रमिदं पुण्यं पठन्नानन्दतामियात् ॥ ९

इति एकादशोऽध्यायः

आनन्दमुकुन्द अरविन्दनयन।
आनन्दतीर्थपरानन्दवरद।। १

सुन्दरिमन्दिरगोविन्द वन्दे।
आनन्दतीर्थपरानन्दवरद।। २

चन्द्रसुरेन्द्रसुवन्दित वन्दे।
आनन्दतीर्थपरानन्दवरद।। ३

चन्द्रकमन्दिरनन्दक वन्दे।
आनन्दतीर्थपरानन्दवरद।। ४

वृन्दारकवृन्दसुवन्दित वन्दे।
आनन्दतीर्थपरानन्दवरद।। ५

मन्दारसूनसुचर्चित वन्दे।
आनन्दतीर्थपरानन्दवरद।। ६

इन्दिरानन्दक सुन्दर वन्दे।
आनन्दतीर्थपरानन्दवरद।। ७

मन्दिरस्यन्दस्यन्दक वन्दे।
आनन्दतीर्थपरानन्दवरद।। ८

आनन्दचन्द्रिकास्यन्दक वन्दे।
आनन्दतीर्थपरानन्दवरद।। ९

*——*——*

शङ्करभारतीयतिवरकृतं

# नारायणस्तोत्रम् - १

श्रीगणेशाय नमः

नारायण नारायण जय गोविन्द हरे।
नारायण नारायण जय गोपाल हरे॥

करुणापारावार वरुणालयगम्भीर।
नारायण नारायण जय गोपाल हरे॥ १

घननीरदसङ्काश कृतकलिकल्मषनाश।
नारायण नारायण जय गोपाल हरे॥ २

यमुनातीरविहार धृतकौस्तुभमणिहार।
नारायण नारायण जय गोपाल हरे॥ ३

पीताम्बरपरिधान सुरकल्याणनिधान।
नारायण नारायण जय गोपाल हरे॥ ४

मञ्जुलगुंजाभूष मायामानुषवेष।
नारायण नारायण जय गोपाल हरे॥ ५

राधाधरमधुरसिक रजनीकरकुलतिलक।
नारायण नारायण जय गोपाल हरे॥ ६

मुरलीगानविनोद वेदस्तुतभूपाद।
नारायण नारायण जय गोपाल हरे॥ ७

बर्हिनिबर्हापीड नटनाटकफणिक्रीड।
नारायण नारायण जय गोपाल हरे॥ ८

वारिजभूषाभरण राजीवरुक्मिणीरमण।
नारायण नारायण जय गोपाल हरे ॥ ९

जलरुहदलनिभनेत्र जगदारम्भकसूत्र।
नारायण नारायण जय गोपाल हरे ॥ १०

पातकरजनीसंहार करुणालय मामुद्धर।
नारायण नारायण जय गोपाल हरे ॥ ११

अघबकक्षय कंसारे केशव कृष्ण मामुद्धर।
नारायण नारायण जय गोपाल हरे ॥ १२

हाटकनिभपीताम्बर अभयं कुरु मे मावर।
नारायण नारायण जय गोपाल हरे ॥ १३

दशरथराजकुमार दानवमदसंहार।
नारायण नारायण जय गोपाल हरे ॥ १४

गोवर्धनगिरिरमण गोपीमानसहरण।
नारायण नारायण जय गोपाल हरे ॥ १५

सरयूतीरविहार सज्जनऋषिमन्दार।
नारायण नारायण जय गोपाल हरे ॥ १६

विश्वामित्रमखत्र विविधपरासुचरित्र।
नारायण नारायण जय गोपाल हरे ॥ १७

ध्वजवज्रांकुशपाद धरणीसुतसहमोद।
नारायण नारायण जय गोपाल हरे ॥ १८

जनकसुताप्रतिपाल जय जय संस्मृतिलील।
नारायण नारायण जय गोपाल हरे ॥ १९

दशरथवाग्धृतिभार दण्डकवनसञ्चार।
नारायण नारायण जय गोपाल हरे॥ २०

मुष्टिकचाणूरसंहार मुनिमानसविहार।
नारायण नारायण जय गोपाल हरे॥ २१

वालिविनिग्रहशौर्य वरसुग्रीवहितार्य।
नारायण नारायण जय गोपाल हरे॥ २२

मां मुरलीकर धीवर पालय पालय श्रीधर।
नारायण नारायण जय गोपाल हरे॥ २३

जलनिधिबन्धनधीर रावणकण्ठविदार।
नारायण नारायण जय गोपाल हरे॥ २४

ताटीमददलनाढ्य नटगुणविविधधनाढ्य।
नारायण नारायण जय गोपाल हरे॥ २५

गौतमपत्नीपूजन करुणाघनावलोकन।
नारायण नारायण जय गोपाल हरे॥ २६

संभ्रमसीताहार साकेतपुरविहार।
नारायण नारायण जय गोपाल हरे॥ २७

अचलोद्धृतिचञ्चत्कर भक्तानुग्रहतत्पर।
नारायण नारायण जय गोपाल हरे॥ २८

नैगमगानविनोद रक्षःसुतप्रह्लाद।
नारायण नारायण जय गोपाल हरे॥ २९

भारतियतिवरशङ्कर नानामृतमखिलान्तर।
नारायण नारायण जय गोपाल हरे॥ ३०

*——*——*

# नारायणस्तोत्रम् - २

नारायणाय सुरमण्डनमण्डनाय
नारायणाय सकलस्थितिकारणाय।
नारायणाय भवभीतिनिवारणाय
नारायणाय प्रभवाय नमो नमस्ते।। १

नारायणाय शतचन्द्रनिभाननाय
नारायणाय मणिकुण्डलधारणाय।
नारायणाय निजभक्तपरायणाय
नारायणाय सुभगाय नमो नमस्ते।। २

नारायणाय सुरलोकप्रपोषकाय
नारायणाय खलदुष्टविनाशकाय।
नारायणाय दितिपुत्रविमर्दनाय
नारायणाय सुलभाय नमो नमस्ते।। ३

नारायणाय रविमण्डलसंस्थिताय
नारायणाय परमार्थप्रदर्शनाय।
नारायणाय अतुलाय अतीन्द्रियाय
नारायणाय विरजाय नमो नमस्ते।। ४

नारायणाय रमणाय रमावराय
नारायणाय रसिकाय रसोत्सुकाय।
नारायणाय रजोवर्जितनिर्मलाय
नारायणाय वरदाय नमो नमस्ते।। ५

नारायणाय वरदाय सुरोत्तमाय
नारायणाय अखिलान्तरसंस्थिताय।

नारायणाय भयशोकविवर्जिताय
नारायणाय प्रबलाय नमो नमस्ते ।। ६

नारायणाय निगमाय निरञ्जनाय
नारायणाय च हराय नरोत्तमाय ।
नारायणाय कटिसूत्रविभूषणाय
नारायणाय हरये महते नमस्ते ।। ७

नारायणाय कटकाङ्गदभूषणाय
नारायणाय मणिकौस्तुभशोभनाय ।
नारायणाय तुलमौक्तिकभूषणाय
नारायणाय च यमाय नमो नमस्ते ।। ८

नारायणाय रविकोटिप्रतापनाय
नारायणाय शशिकोटिसुशीतलाय ।
नारायणाय यमकोटिदुरासदाय
नारायणाय करुणाय नमो नमस्ते ।। ९

नारायणाय मुकुटोज्ज्वलसोज्ज्वलाय
नारायणाय मणिनूपुरभूषणाय ।
नारायणाय ज्वलिताग्निशिखप्रभाय
नारायणाय हरये गुरवे नमस्ते ।। १०

नारायणाय दशकण्ठविमर्दनाय
नारायणाय विनतात्मजवाहनाय ।
नारायणाय मणिकौस्तुभभूषणाय
नारायणाय परमाय नमो नमस्ते ।। ११

नारायणाय विदुराय च माधवाय
नारायणाय कमठाय महीधराय ।

नारायणाय उरगाधिपमञ्चकाय
नारायणाय विरजापतये नमस्ते ।। १२

नारायणाय रविकोटिसमाम्बराय
नारायणाय च हराय मनोहराय ।
नारायणाय निजधर्मप्रतिष्ठिताय
नारायणाय च मखाय नमो नमस्ते ।। १३

नारायणाय भवरोगरसायनाय
नारायणाय शिवचापप्रतोटनाय ।
नारायणाय निजवानरजीवनाय
नारायणाय सुभुजाय नमो नमस्ते ।। १४

नारायणाय सुरथाय सुहृच्छ्रिताय
नारायणाय कुशलाय धुरन्धराय ।
नारायणाय गजपाशविमोक्षणाय
नारायणाय जनकाय नमो नमस्ते ।। १५

नारायणाय निजभृत्यप्रपोषकाय
नारायणाय शरणागतपञ्जराय ।
नारायणाय पुरुषाय पुरातनाय
नारायणाय सुपथाय नमो नमस्ते ।। १६

नारायणाय मणिस्वासनसंस्थिताय
नारायणाय शतवीर्यशताननाय ।
नारायणाय पवनाय च केशवाय
नारायणाय रविभाय नमो नमस्ते ।। १७

श्रियःपतिर्यज्ञपतिः प्रजापतिर्धियांपतिर्लोकपतिर्धरापतिः ।
पतिर्गतिश्चान्धकवृष्णिसात्त्वतां प्रसीदतां मे भगवान् सतांपतिः ।।

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या॥

अष्टोत्तराधिकशतानि सुकोमलानि
नामानि ये सुकृतिनः सततं स्मरन्ति।
तेऽनेकजन्मकृतपापचयाद्विमुक्ता
नारायणेऽव्यवहितां गतिमाप्नुवन्ति॥ २०

*___*___*

ब्रह्मानन्दकृतम्

## परमेश्वरस्तुतिसारस्तोत्रम्

त्वमेकः शुद्धोऽसि त्वयि निगमबाह्यामलमयं
प्रपञ्चं पश्यन्ति भ्रमपरवशाः पापनिरताः।
बहिस्तेभ्यः कृत्वा स्वपदशरणं मानय विभो
गजेन्द्रे दृष्टं ते शरणद वदान्यं स्वपददम्॥ १

न सृष्टेस्ते हानिर्यदि हि कृपयातोऽवसि च मां
त्वयानेके गुप्ता व्यसनमिति तेऽस्ति श्रुतिपथे।
अतो मामुद्धर्तुं घटय मयि दृष्टिं सुविमलां
न रिक्तां मे याञ्चां स्वजनरत कर्तुं भव हरे॥ २

कदाऽहं भोः स्वामिन्नियतमनसा त्वां हृदि भजन्
अभद्रे संसारे ह्यनवरतदुःखेऽतिविरसः।
लभेयं तां शान्तिं परममुनिभिर्या ह्यधिगता
दयां कृत्वा मे त्वं वितर परशान्तिं भवहर॥ ३

विधाता चेद्विश्वं सृजति सृजतां मे शुभकृतिं
विधुश्चेत्पाता माऽवतु जनिमृतेर्दुःखजलधेः।

हरः संहर्ता हरतु मम शोकं सजनकं
यथाऽहं मुक्तः स्यां किमपि तु तथा ते विदधताम्।। ४

अहं ब्रह्मानन्दस्त्वमपि च तदाख्यः सुविदितः
ततोऽहं भिन्नो नो कथमपि भवत्तः श्रुतिदृशा।
तथा चेदानीं त्वं त्वयि मम विभेदस्य जननीं
स्वमायां संवार्य प्रभव मम भेदं निरसितुम्।। ५

कदाऽहं हे स्वामिन् जनिमृतिमयं दुःखनिबिडं
भवं हित्वा सत्येऽनवरतसुखे स्वात्मवपुषि।
रमे तस्मिन्नित्यं निखिलमुनयो ब्रह्मरसिका
रमन्ते यस्मिंस्ते कृतसकलकृत्या यतिवराः।। ६

पठन्त्येके शास्त्रं निगममपरे तत्परतया
यजन्त्यन्ये त्वां वै ददति च पदार्थांस्तव हितान्।
अहं तु स्वामिंस्ते शरणमगमं संसृतिभयात्
यथा ते प्रीतिः स्याद्धितकर तथा त्वं कुरु विभो।। ७

अहं ज्योतिर्नित्यो गगनमिव तृप्तः सुखमयः
श्रुतिः सिद्धोऽद्वैतः कथमपि न भिन्नोऽस्मि विधुतः।
इति ज्ञाते तत्त्वे भवति च परः संसृतिलयात्
अतस्तत्त्वज्ञानं मयि विघटयेस्त्वं हि कृपया।। ८

अनादौ संसारे जनिमृतिमये दुःखितमनाः
मुमुक्षुः सन्कश्चिद्व्रजति हि गुरुं ज्ञानपरमम्।
ततो ज्ञात्वा यं वै तुदति न पुनः क्लेशनिवहैः
भजेऽहं तं देवं भवति च परो यस्य भजनात्।। ९

विवेको वैराग्यं न च शमदमाद्याः षडपरे
मुमुक्षा मे नास्ति प्रभवति कथं ज्ञानममलम्।

अतः संसाराब्धेस्तरणसरणिं मामुपदिशन्
स्वबुद्धिं श्रौतीं मे वितर भगवंस्त्वं हि कृपया ।। १०

कदाऽहं भो स्वामिन्निगममतिवेद्यं शिवमयं
चिदानन्दं नित्यं श्रुतिहृतपरिच्छेदनिवहम् ।
त्वमर्थाभिन्नं त्वामभिरम इहात्मन्यविरतं
मनीषामेवं मे सफलय वदान्य स्वकृपया ।। ११

यदर्थं सर्वं वै प्रियमसुधनादि प्रभवति
स्वयं नान्यार्थो हि प्रिय इति च वेदे प्रविदितम् ।
स आत्मा सर्वेषां जनिमृतिमतां वेदगदितः
ततोऽहं तं वेद्यं सततममलं यामि शरणम् ।। १२

मया त्यक्तं सर्वं कथमपि भवेत्स्वात्मनि मतिः
त्वदीया माया मां प्रति तु विपरीतं कृतवती ।
ततोऽहं किं कुर्यां नहि मम मतिः क्वापि चलति
दयां कृत्वा नाथ स्वपदशरणं देहि शिवदम् ।। १३

नगा दैत्याः कीशा भवजलधिपारं हि गमिताः
त्वया चान्ये स्वामिन् किमिति समयेऽस्मिन् शयितवान् ।
न हेलां त्वं कुर्यास्त्वयि निहितसर्वे मयि विभो
न हि त्वाऽहं हित्वा कमपि शरणं चान्यमगमम् ।। १४

अनन्ताद्या विज्ञा न गुणजलधेस्तेऽन्तमगमन्
अतः पारं यायात्तव गुणगुणानां कथमयम् ।
गृणन् यावद्धित्वा जनिमृतिहरं याति परमां
गतिं योगिप्राप्यामिति मनसि बुद्ध्वाऽहमनवम् ।। १५

*____*____*

ब्रह्मानन्दकृतं

# भगवच्छरणस्तोत्रम्

सच्चिदानन्दरूपाय भक्तानुग्रहकारिणे।
मायानिर्मितविश्वाय महेशाय नमो नमः ।। १

रोगा हरन्ति सततं प्रबलाः शरीरं
कामादयोऽप्यनुदितं प्रदहन्ति चित्तम्।
मृत्युश्च नृत्यति सदा कलयन्दिनानि
तस्मात्त्वमद्य शरणं मम दीनबंधो ।। २

देहो विनश्यति सदा परिणामशीलः
श्चित्तं च खिद्यति सदा विषयानुरागि।
बुद्धिः सदा हि रमते विषयेषु नान्तः
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ३

आयुर्विनश्यति यथाऽऽमघटस्थतोयं
विद्युत्प्रभेव चपला बत यौवनश्रीः ।
वृद्धा प्रधावति यथा मृगराजपत्नी
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ४

आयाद्व्ययो मम भवत्यधिको विनीते
कामादयो हि बलिनो विबलाः शमाद्याः ।
मृत्युर्यदा तुदति मां बत किं वदेयं
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ५

तप्तं तपो नहि कदापि मयेह तन्वा
वाण्या तथा नहि कदापि तपश्च तप्तम्।

मिथ्याभिभाषणपरेण न मानसं हि
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ६

स्तब्धं मनो मम सदा नहि याति सौम्यं
चक्षुश्च मे न तव पश्यति विश्वरूपम् ।
वाचा तथैव न वेदन्मम सौम्यवाणीं
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ७

सत्त्वं न मे मनसि याति रजस्तमोभ्यां
विद्धे तदा कथमहो शुभकर्मवार्ता ।
साक्षात्परंपरतया सुखसाधनं तत्
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ८

पूजा कृता नहि कदापि मया त्वदीया
मन्त्रं त्वदीयमपि मे न जपेद्रसज्ञा ।
चित्तं न मे स्मरति ते चरणौ ह्यवाप्य
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ९

यज्ञो न मेऽस्ति हुतिदानदयादियुक्तो
ज्ञानस्य साधनगणो न विवेकमुख्यः ।
ज्ञानं क साधनगणेन विना क मोक्षः
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १०

सत्संगतिर्हि विदिता तव भक्तिहेतुः
साऽप्यद्य नास्ति बत पण्डितमानिनो मे ।
तामन्तरेण नहि सा क च बोधवार्ता
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। ११

दृष्टिर्न भूतविषया समताभिधाना
वैषम्यमेव तदियं विषयीकरोति।
शान्तिः कुतो मम भवेत् समता न चेत्स्यात्
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १२

मैत्री समेषु न च मेऽस्ति कदापि नाथ
दीने तथा न करुणा मुदिता च पुण्ये।
पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १३

नेत्रादिकं मम बहिर्विषयेषु सक्तं
नान्तर्मुखं भवति तामविहाय तस्य।
कान्तर्मुखत्वमपहाय सुखस्य वार्ता
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १४

त्यक्तं गृहाद्यपि मया भवतापशान्त्यै
नासीदसौ हृतहृदो मम मायया ते।
सा चाधुना किमु विधास्यति नेति जाने
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १५

प्राप्ता धनं गृहकुटुम्बगजाश्वदारा
राज्यं यदैहिकमथेन्द्रपुरश्च नाथ।
सर्वं विनश्वरमिदं न फलाय कस्मै
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १६

प्राणान्निरुध्य विधिना न कृतो हि यागो
योगं विनाऽस्ति मनसः स्थिरता कुतो मे।

तां वै विना मम न चेतसि शान्तिवार्ता
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १७

ज्ञानं यथा मम भवेत्कृपया गुरूणां
सेवां तथा न विधिनाकरवं हि तेषाम् ।
सेवापि साधनतया विदितास्ति चित्ते
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १८

तीर्थादिसेवनमहाविधिना हि नाथ
नाकारि येन मनसो मम शोधनं स्यात् ।
शुद्धिं विना न मनसोऽवगमापवर्गौ
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। १९

वेदान्तशीलनमपि प्रमितिं करोति
ब्रह्मात्मनः प्रमितिसाधनसंयुतस्य ।
नैवास्ति साधनलवो मयि नाथ तस्यातः
तस्मात्त्वमद्य शरणं मम दीनबन्धो ।। २०

गोविन्द शङ्कर हरे गिरिजेश मेश
शंभो जनार्दन गिरीश मुकुन्द साम्ब ।
नान्या गतिर्मम कथञ्चन त्वां विहाय
तस्मात्प्रभो मम गतिः कृपया विधेया ।। २१

एतं स्तवं भगवदाश्रयणाभिधानं
ये मानवाः प्रतिदिनं प्रणताः पठन्ति ।
ते मानवा भवरतिं परिभूय शान्तिं
गच्छन्ति किञ्च परमात्मनि भक्तिमन्तः ।। २२

*——*——*

शुकदेवविरजितं

# मधुसूदनस्तोत्रम्

ओं मिति ज्ञानमात्रेश रोगाजीर्णेन निर्जितः ।
कालनिद्रां प्रपन्नोऽस्मि त्राहि मां मधुसूदन ।। १

न गतिर्विद्यते चान्या त्वमेव शरणं मम ।
पापपङ्के निमग्नोऽस्मि त्राहि मां मधुसूदन ।। २

मोहितो मोहजालेन पुत्रदारगृहादिषु ।
तृष्णया पीड्यमानोऽस्मि त्राहि मां मधुसूदन ।। ३

भक्तिहीनं च दीनं च दुःखशोकातुरं प्रभो ।
अनाश्रयमनाथं च त्राहि मां मधुसूदन ।। ४

गतागतेन श्रान्तोऽस्मि दीर्घसंसारवर्त्मसु ।
येन भूयो न गच्छामि त्राहि मां मधुसूदन ।। ५

बहवो हि मया दृष्टाः क्लेशाश्चैव पृथक् पृथक् ।
गर्भवासे महद्दुःखं त्राहि मां मधुसूदन ।। ६

तेन देव प्रपन्नोऽस्मि त्राणार्थं त्वत्परायणः ।
दुःखार्णवपरित्राणात् त्राहि मां मधुसूदन ।। ७

वाचा यत्र प्रतिज्ञातं कर्मणा नोपपादितम् ।
तत्पापार्जितमग्नोऽस्मि त्राहि मां मधुसूदन ।। ८

सुकृतं न कृतं किञ्चिद्दुष्कृतं च कृतं मया ।
घोरे भवे निमग्नोऽस्मि त्राहि मां मधुसूदन ।। ९

देहान्तरसहस्रेषु चान्योन्यं भ्रामितो ह्यहम् ।
तिर्यक्त्वं मानुषत्वं च त्राहि मां मधुसूदन ।। १०

वाचयामि यथोन्मत्तः प्रलपामि तवाग्रतः ।
जरामरणभीतोऽस्मि त्राहि मां मधुसूदन ।। ११

यत्र यत्र च यातोऽस्मि स्त्रीषु वा पुरुषेषु वा ।
तत्र तत्राचला भक्तिस्त्राहि मां मधुसूदन ।। १२

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
कदापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ।। १३

ऊर्ध्वपातालमर्त्येषु व्याप्तलोकजगत्त्रयम् ।
द्वादशाक्षरात्परं नास्ति वासुदेवेन भाषितम् ।। १४

द्वादशाक्षरं महामन्त्रं सर्वकामफलप्रदम् ।
गर्भवासनिवासेन शुकेन परिभाषितम् ।। १५

द्वादशाक्षरं निराहारो यः पठेद्धरिवासरे ।
स गच्छेद्वैष्णवं स्थानं यत्र योगेश्वरो हरिः ।। १६

(ओं नमो भगवते वासुदेवाय इति द्वादशाक्षरघटितमिदम् ।)

*___*___*

## श्रीमहाविष्णुस्तुतिः

ब्रह्मर्षय ऊचुः—

नमस्ते देवदेवानामादिभूत सनातन ।
पुरुषाय पुराणाय नमस्ते परमात्मने ।। १

जरामरणरोगादिविहीनायामलात्मने ।
ब्रह्मणां पतये तुभ्यं जगतां पतये नमः ।। २

लोकालोकस्वरूपाय लोकानां पतये नमः ।
शङ्खचक्रगदापद्मपाणये विष्णवे नमः ।। ३

नमो हिरण्यगर्भाय श्रीपते भूपते नमः ।
नमः स्वयंभुवे तुभ्यं सूत्रात्मादिस्वरूपिणे ।। ४

विराट्प्रजापतेः साक्षाज्जनकाय नमो नमः ।
विश्वतैजसरूपाय प्राज्ञरूपाय ते नमः ।। ५

जाग्रत्स्वप्नस्वरूपाय नमः सुप्त्यात्मने नमः ।
अवस्थासाक्षिणे तुभ्यमवस्थावर्जिताच्युत ।। ६

तुरीयाय विशुद्धाय तुर्यातीताय ते नमः ।
प्रथमाय समस्तस्य जगतः परमात्मने ।। ७

ओंकारैकस्वरूपाय शिवाय शिवद प्रभो ।
सर्वविज्ञानसंपन्न नमो विज्ञानदायिने ।। ८

जगतां योनये तुभ्यं वेधसे विश्वरूपिणे ।
नित्यशुद्धाय बुद्धाय मुक्ताय सुखरूपिणे ।। ९

नमो वाचामतीताय मनोऽगम्याय ते नमः ।
अप्रमेयाय शान्ताय स्वयंभानाय साक्षिणे ।। १०

नमः पुंसे पुराणाय श्रेयःप्राप्त्येकहेतवे ।
आकाशादिप्रपञ्चाय नमस्तद्रूप शङ्कर ।। ११

मायारूपाय मायायाः सत्ताहेतो जनार्दन ।
नमः प्रद्युम्नरूपाय नमः सङ्कर्षणात्मने ।। १२

नमोऽनिरुद्धरूपाय वासुदेवाय ते नमः ।
योगाय योगगम्याय योगिनामिष्टसिद्धिद ।। १३

नमस्ते मत्स्यरूपाय नमस्ते कूर्मरूपिणे ।
नमस्तुभ्यं वराहाय नारसिंहाय ते नमः ।। १४

नमो वामनरूपाय नमो रामत्रयात्मने ।
नमः कृष्णाय सर्वज्ञ नमस्ते कल्किरूपिणे ।। १५

कर्मिणां फलरूपाय कर्मरूपाय ते नमः।
कर्मकर्त्रे नमस्तुभ्यं नमस्ते कर्मसाक्षिणे॥ १६

नमो विज्ञप्तिरूपाय नमो वेदान्तरूपिणे।
गुणत्रयात्मने तुभ्यं नमो निर्गुणरूपिणे॥ १७

अद्भुतायामरेशाय शिवप्राप्त्येकहेतवे।
नमो नक्षत्ररूपाय नमस्ते सोमरूपिणे॥ १८

नमः सूर्यात्मने तुभ्यं नमो वज्रधराय ते।
नमस्ते पद्मनाभाय नमस्ते शार्ङ्गपाणये॥ १९

नमस्तुभ्यं विशालाक्ष नमः श्रीधर नायक।
नमः संसारतप्तानां तापनाशैकहेतवे॥ २०

श्रौतस्मार्तैकनिष्ठानामचिरादेव मुक्तिद।
अन्येषामपि सर्वेषां संसारैकप्रदाव्यय॥ २१

नमोऽसुरविमर्दाय नमो विद्याधरार्चित।
क्षीरोदशायिने तुभ्यं नमो वैकुण्ठवासिने।
नमो रागाभिभूतानां वैराग्यप्लवदायिने॥ २२

(सूत संहितायां)

*___*___*

ब्रह्मानन्दकृतं

## रमापत्यष्टकम्

जगदादिमनादिमजं पुरुषं शरदंबरतुल्यतनुं वितनुम्।
धृतकञ्जरथाङ्गगदं विगदं प्रणमामि रमाधिपतिं तमहम्॥ १

कमलाननकञ्जरतं विरतं हृदि योगिजनैः कलितं ललितम्।
कुजनैः सुजनैरलभं सुलभं प्रणमामि रमाधिपतिं तमहम्॥ २

मुनिवृन्दहृदिस्थपदं सुपदं निखिलाध्वरभागभुजं सुभुजम्।
हृतवासवमुख्यमदं विमदं प्रणमामि रमाधिपतिं तमहम्॥ ३

हृतदानवदृप्तबलं सुबलं स्वजनास्तसमस्तमलं विमलम्।
समपास्तगजेन्द्रदरं सुदरं प्रणमामि रमाधिपतिं तमहम्॥ ४

परिकल्पितसर्वकलं विकलं सकलागमगीतगुणं विगुणम्।
भवपाशनिराकरणं शरणं प्रणमामि रमाधिपतिं तमहम्॥ ५

मृतिजन्मजराशमनं कमनं शरणागतभीतिहरं दहरम्।
परितुष्टरमाहृदयं सुदयं प्रणमामि रमाधिपतिं तमहम्॥ ६

सकलावनिबिम्बधरं स्वधरं परिपूरितसर्वदिशं सुदृशम्।
गतशोकमशोककरं सुकरं प्रणमामि रमाधिपतिं तमहम्॥ ७

मथितार्णवराजरसं सरसं ग्रहिताखिललोकहृदं सुहृदम्।
प्रथिताद्भुतशक्तिगणं सुगणं प्रणमामि रमाधिपतिं तमहम्॥ ८

सुखराशिकरं भवबन्धहरं परमाष्टकमेतदनन्यमतिः।
पठतीह तु योऽनिशमेव नरो लभते खलु विष्णुपदं स परम्॥ ९

## रमापतिस्मरणम्

मुकुन्दमिन्दीवरपत्रनेत्रं नन्दात्मजं योगिमनोनिकेतम्।
वृन्दारकाभिष्टुतपादपद्मं पार्थस्य मित्रं मनसा स्मरामि॥ १

ब्रह्मेन्द्रगङ्गाधरवन्दिताय मुकुन्ददेवाय परात्पराय।
नमः समस्तासुरनाशकाय पक्षीशयानाय रमेश्वराय॥ २

आश्लिष्टराधाकुचकुड्मलाय गोपालकृष्णाय नमोऽस्तु तस्मै।
गोवर्धनं यो गिरिमुच्चशृङ्गं लोकोपकाराय किलोद्दधार॥ ३

कृपानिधे दीनशरण्य शौरे दैत्याटवीदाव रमेश देव।

त्वत्पादपङ्केरुहयुग्मसेवां नक्तन्दिवं प्राप्तुमहं समीहे ।। ४

तदा मम स्यादभिलाषसिद्धिस्तदैव जायेत ममातिमोदः ।
यदा यतीन्द्रेडितसच्चरित्रो मयि प्रसन्नो भगवान् मुरारिः ।। ५

कुशाग्रसूक्ष्मापि मतिर्गतीनां ज्ञातुं न शक्नोति तव स्वरूपम् ।
अहं कथं वा मुसलाग्रबुद्धिर्ज्ञातुं क्षमः स्यां खलु तं भवन्तम् ।। ६

नाहं नदीष्णो निखिलागमेषु न च प्रवीणः कविताकलायाम् ।
तस्मादशेषान् गदितुं गुणांस्ते शौरे न शक्तो बत मन्दभाग्यः ।। ७

*___*___*

# विष्णुस्तुतिः

कविसूक्तिभ्यः सङ्कलिता

नमस्त्रिभुवनोत्पत्तिस्थितिसंहारहेतवे ।
विष्णवेऽपारसंसारपारोत्तरणसेतवे ।। १

आदिमध्यान्तरहितं दशाहीनं पुरातनम् ।
अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ।। २

लक्ष्मीकपोलसंक्रान्तकान्तपत्रलतोज्ज्वलाः ।
दोर्द्रुमाः पान्तु वः शौरेर्घनच्छाया महाफलाः ।। ३

जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् ।
मध्येपयः पयोधेरपर इवाम्भोनिधिः कृष्णः ।। ४

अतिविपुलं कुचयुगलं रहसि करैरामृशन्मुहुर्लक्ष्म्याः ।
तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ।। ५

जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीजः ।
दामोदरो निजोदरगह्वरनिर्विष्टजगदण्डः ।। ६

श्रीकरपिहितं चक्षुः सुखयतु वः पुण्डरीकनयनस्य ।
जघनमिवेक्षितुमागतमब्जनिभं नाभिसुषिरेण ।। ७

श्यामं श्रीकुचकुङ्कमपिञ्जरितमुरो मुरद्विषो जयति ।
दिनमुखनभ इव कौस्तुभविभाकरो यद्विभूषयति ।। ८

प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः ।
पुरुषायितमभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुरमिव ।। ९

केलिचलाङ्गुलिलम्भितलक्ष्मीनाभिर्मुरद्विषश्चरणः ।
स जयति येन कृता श्रीरनुरूपा पद्मनाभस्य ।। १०

रोमावली मुरारेः श्रीवत्सनिवेशिताग्रभागा वः ।
उन्नालनाभिनलिनच्छायेवोत्तापमपहरतु ।। ११

कमलाकुचकनकाचलजलधरमाभीरसुन्दरीमदनम् ।
अधिततशेषफणावलि(सु)कमलवनभृङ्गमच्युतं वन्दे ।। १२

जीयादम्बुधितनयाधररसमास्वादयन्मुरारिरयम् ।
अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च ।। १३

श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति ।
नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ।।

वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य ।
श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव ।। १५

वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः ।
तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ।। १६

जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम्॥

पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य।
व्यक्तानुरागमिव खेलदनङ्गखेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः॥

श्रेयः सदा दिशतु सालसपक्ष्मपाते
निद्रायिते अपि दृशौ भृशमुन्नमय्य।
संवाह्यमानचरणाम्बुजजातहर्षो
लक्ष्मीमुखेक्षणपरः परमेश्वरो वः॥ १९

सकलभुवनबन्धोर्वैरमिन्दोः सरोजैः
अनुचितमिति मत्वा यः स्वपादारविन्दम्।
घटयितुमिव मायी योजयत्याननेन्दौ
वटदलपुटशायी मङ्गलं वः कृषीष्ट॥ २०

कचकुचचुबुकाग्रे पाणिषु व्यापृतेषु
प्रथमजलधिपुत्रीसङ्गमेऽनङ्गधाम्नि।
ग्रथितनिबिडनीवीबन्धनिर्मोचनार्थं
चतुरधिककराशः पातु वश्चक्रपाणिः॥ २१

विरमति महाकल्पे नाभीपथैकनिकेतनः
त्रिभुवनपुरःशिल्पी यस्य प्रतिक्षणमात्मभूः।
किमधिकरणं कीदृक्कस्य व्यवस्थितिरित्यसौ
उदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः॥ २२

लक्ष्मीपाणिद्वयविरचितं मूलमूर्धश्रुतीनां
व्यक्तं वन्दे चरणकमलद्वन्द्वमाद्यस्य पुंसः।
यत्रैकस्य व्यधित बलिना पाद्यतोयैर्वितीर्णैः
आर्द्रस्यैव प्रणतितरलः क्षालनं पद्मयोनिः॥ २३

अनादृतचमूपतिप्रहितहस्तमस्वीकृत
प्रणीतमणिपादुकं किमिति विस्मितान्तःपुरम्।
अवाहनपरिष्क्रियं पतगराजमारोहतः
करिप्रवरबृंहिते भगवतस्त्वरायै नमः ।। २४

दृक्पातः कमलासनेऽस्तु भवतो ज्ञानं मनाङ्मारुते
श्रीकण्ठोऽयमितः सुरानिति नतास्तार्क्ष्येण विज्ञापितः।
प्रेयस्याः क्व तदासनं क्व च रुतं कण्ठः क्व चेत्युल्लत्
लक्ष्म्यावासितमानसो विजयते सुप्तप्रबुद्धो हरिः ।। २५

निर्मग्नेन मयाम्भसि स्मरभरादालिः समालिङ्गिता
केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि।
इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वचः शार्ङ्गिणः
सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ।। २६

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ।। २७

येनात्थाप्य समूलमन्दरगिरिश्छत्रीकृतो गोकुले
राहुर्येन महाबलः सुररिपुः कार्यादशेषीकृतः।
कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया
सोऽयं पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ।। २८

मुग्धे मुञ्च विषादमत्र बलभित्कम्पो गुरुस्त्यज्यतां
सद्भावं भज पुण्डरीकनयने मान्यानिमान्मानय।
इत्थं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छलात्
अन्यत्र प्रतिषेधमात्मनि विधिं शृण्वन्हरिः पातु वः ।। २९

नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णन
प्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः।
सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः
सोत्प्रासप्रणयं सरोजवसतिं पश्यन्हरिः पातु वः॥ ३०

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने।
याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृता॥ ३१

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये।
लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः॥ ३२

चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः
श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः।
भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः॥ ३३

आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरी
धीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः।
लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथा-
दायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति॥ ३४

भ्राम्यन्मन्दरकन्दरोदरदरीव्यावर्तिभिर्वारिधेः
कल्लोलैरलमाकुलं कलयतो लक्ष्म्या मुखाम्भोरुहम्।
औत्सुक्यात्तरलाः स्मराद्विकसिता भीत्या समाकुञ्चिताः
क्रोधेन ज्वलिता मुदा मुकुलिताः शौरेर्दृशः पान्तु वः॥ ३५

पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे
संक्रान्तप्रतिबिम्बसंवलनया बिभ्रद्वपुर्विक्रियाम्।
पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः
कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः ॥ ३६

मन्थक्ष्माधरघूर्णितार्णवपयःपूरान्तरालोल्लसत्
लक्ष्मीकन्दलकोमलाङ्गदलनप्रादुर्भवत्संभ्रमाः।
हर्षोत्कण्टकितत्वचो मधुरिपोर्देवासुराकर्षण
व्यापारोपरमाय पान्तु जगतीमाबद्धवीप्सा गिरः ॥ ३७

चक्र ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय
भो भो नन्दक जीव पन्नगरिपो किं नाथ भिन्नो मया।
को दैत्यः कतमो हिरण्यकशिपुः सत्यं भवच्छ्यः शपे
केनास्त्रेण नखैरिति प्रवदतो विष्णोर्मुखं पातु वः ॥ ३८

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणां
आत्मव्यापारगुर्वी जनितजललवाजृम्भितैः साङ्गभङ्गैः।
नागाङ्कं भोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ ३९

श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलोलत्
लीलाब्जान्निःसरन्ती मधुरमधुझरी नाभिपद्मे मुरारेः।
अस्तोकं लोकमात्रा द्वियुगमुखशिशोराननेष्वर्प्यमाणं
शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥

किञ्चिन्निर्मुच्यमाने गगन इव मुखे शाठ्यनिद्रापयोदैः
न्यक्कुर्वाणे स्वभासा फणिपतिशिरसां रत्नदीपांशुजालम्।
पायास्तां वो मुरारेः शशितपनमये लोचने यद्विभासा
लक्ष्म्या हस्तस्थमर्धं विकसति कमलस्यार्धमभ्येति निद्राम् ॥

एकस्थं जीवितेशे त्वयि सकलजगत्सारमालोकयामः

श्यामे चक्षुस्तवास्मिन्वपुषि निविशते नाल्पपुण्यस्य पुंसः ।

कस्यान्यत्रामृतेऽस्मिन्नतिरतिविपुला दृष्टिरेवामृतं ते

दैत्यैरित्युच्यमानो मुनिभिरपि हरिः स्त्रैणरूपोऽवताद्वः ॥

यस्योद्यद्बाणबाहुद्रुमगहनवनच्छेदगोष्ठीकुठारं

चक्रं निष्क्रान्ततीव्रानलबहलकणाकीर्णधारं विचिन्त्य ।

जातग्रासावसायो दिवसकृतिलसन्मांसलांशुप्रवाहे

मुह्यत्यद्यापि राहुः स दहतु दुरितान्याशु दैत्यान्तको वः ॥

त्रिंशत्त्रिकोटिवसुरुद्रदिवाकरादि-

देवादिदेवगणसन्ततसेव्यमानम् ।

अंभोजसंभवचतुर्मुखगीयमानं

वन्दे शयानमिह भोगिनि शार्ङ्गपाणिम् ॥ ४४

लक्ष्मीर्यस्य परिग्रहः कमलभूः सूनुः गरुत्मान् रथः

पौत्रश्चन्द्रविभूषणः सुरगुरुः शेषश्च शय्यासनः ।

ब्रह्माण्डं वरमन्दिरं सुरगणा यस्य प्रभोः सेवकाः

स त्रैलोक्य कुटुम्बपालनपरः कुर्यात्सदा मङ्गलम् ॥ ४५

ध्रुवकृता

## विष्णुस्तुतिः

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां

सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना ।

अन्यांश्च हस्तचरणश्रवणत्वगादीन्

प्राणान् नमो भगवते पुरुषाय तुभ्यम् ॥ १

एकस्त्वमेव भगवन्निदमात्मशक्त्या
मायाख्ययोरुगुणया महदाद्यशेषम्।
सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु
नानेव दारुषु विभावसुवद्विभासि।। २

त्वद्दत्तया वयुनयेदमचष्ट विश्वं
सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः।
तस्यापवर्ग्यशरणं तव पादमूलं
विस्मर्यते कृतविदां कथमार्तबन्धो।। ३

नूनं विमुष्टमतयस्तव मायया ते
ये त्वां भवाप्ययविमोक्षणमन्यहेतोः।
अर्चन्ति कल्पकतरुं कुणपोपभोग्यं
इच्छन्ति यत्स्पर्शजं निरयेऽपि नृणाम्।। ४

या निर्वृतिस्तनुभृतां तव पादपद्म
ध्यानाद्भवार्जनकथाश्रवणेन वा स्यात्।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किं त्वंतकासिलुलितात् पततां विमानात्।। ५

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो
भूयादनन्त महताममलाशयानाम्।
येनाञ्जसोल्बणमुरुव्यसनं भवाब्धिं
नेष्ये भवद्गुणकथामृतपानमत्तः।। ६

ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं
ये चान्वदः सुतसुहृद्गृहवित्तदाराः।
ये त्वब्जनाभ भवदीयपदारविन्द
सौगंध्यलुब्धहृदयेषु कृतप्रसङ्गाः।। ७

तिर्यङ्गमद्विजसरीसृपदेवदैत्य
मर्त्यादिभिः परिचितं सदसद्विशेषम्।
रूपं स्थविष्ठमज ते महदाद्यनेकं
नातः परं परम वेद्मि न यत्र वादः ॥ ८

कल्पान्त एतदखिलं जठरेण गृह्णन्
शेते पुमान् स्वदृगनन्तसखस्तदङ्के।
यन्नाभिसिंधुरुहकाञ्चनलोकपद्म
गर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ ९

त्वं नित्यमुक्तपरिशुद्धविशुद्ध आत्मा
कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः।
यद्बुद्ध्यवस्थितिमखण्डितया स्वदृष्ट्या
द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥ १०

यस्मिन् विरुद्धगतयो ह्यनिशं पतन्ति
विद्यादयो विविधशक्तय आनुपूर्व्यात्।
तद्ब्रह्म विश्वभवमेकमनन्तमाद्यं
आनन्दमात्रमविकारमहं प्रपद्ये ॥ ११

सत्याशिषो हि भगवंस्तव पादपद्मं
आशीस्तथाऽनुभजतः पुरुषार्थमूर्तेः।
अप्येवमार्य भगवान् परिपाति दीनान्
वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १२

——श्रीमद्भागवततः

*___*___*

मुचुकुन्दकृता

## विष्णुस्तुतिः

विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक्।
सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित् पुरुषश्च वञ्चितः ॥ १

लब्धा जनो दुर्लभमत्र मानुषं कथञ्चिदव्यङ्गमयत्नतोऽनघ।
पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥ २

ममैष कालोऽजित निष्फलो गतो राज्यश्रियोन्नद्धमदस्य भूपते।
मर्त्यात्मबुद्धेः सुतदारकोशभूष्वासज्जमानस्य दुरन्तचिन्तया ॥ ३

कलेवरेऽस्मिन् घटकुड्यसन्निभे निरूढमानो नरदेव इत्यहम्।
वृतो रथेभाश्वपदात्यनीकपैर्गां पर्यटंस्त्वागणयन् सुदुर्मदः ॥ ४

प्रमत्तमुच्चैरिति कृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम्।
त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥

पुरा रथैर्हेमपरिष्कृतैश्चरन् मतङ्गजैर्वा नरदेवसंज्ञितः।
स एव कालेन दुरत्ययेन ते कलेवरो विट्कृमिभस्मसंज्ञितः ॥ ६

निर्जित्य दिक्चक्रमभूतविग्रहो वरासनस्थः समराजवन्दितः।
गृहेषु मैथुन्यसुखेषु योषितां क्रीडामृगः पूरुष ईश नीयते ॥ ७

करोति कर्माणि तपःसु निष्ठितो निवृत्तभोगस्तदपेक्षया ददत्।
पुनश्च भूयेयमहं स्वराडिति प्रवृद्धतर्षो न सुखाय कल्पते ॥ ८

भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः।
सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥ ९

मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया।
यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥

न कामयेऽन्यं तव पादसेवनादकिञ्चनप्रार्थ्यतमाद्वरं विभो।
आराध्य कस्त्वां ह्यपवर्गदं हरे वृणीत आर्यो वरमात्मबन्धनम्॥

तस्माद्विसृज्याशिष ईश सर्वतो रजस्तमःसत्त्वगुणानुबन्धनाः।
निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम्॥ १२

चिरमिह वृजिनार्तस्तप्यमानोऽनुतापैः
अवितृषषडमित्रो लब्धशान्तिः कथञ्चित्।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्
अभयममृतमशोकं पाहि माऽऽपन्नमीश॥ १३

—श्रीमद्भागवततः

*—*—*

शिवकृता

## विष्णुस्तुतिः

शिव उवाच

जितं त आत्मविद्धुर्य स्वस्तये स्वस्तिरस्तु मे।
भवता राधसा राद्धे सर्वस्मा आत्मने नमः॥ १

नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने।
वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे॥ २

सङ्कर्षणाय सूक्ष्माय दुरन्तायान्तकाय च।
नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने॥ ३

नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने।
नमः परमहंसाय पूर्णाय निभृतात्मने॥ ४

स्वर्गापवर्गद्धाराय नित्यं शुचिपदे नमः।
नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ।। ५

नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे।
तृप्तिदाय च जीवानां नमः सर्वरसात्मने ।। ६

सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे।
नमस्त्रैलोक्यपालाय सहओजोबलाय च ।। ७

अर्थलिङ्गाय नभसे नमोऽऽन्तर्बहिरात्मने।
नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ।। ८

प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे।
नमो धर्मविपाकाय मृत्यवे दुःखदाय च ।। ९

नमस्त आशिषामीश मनवे कारणात्मने।
नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे।
पुरुषाय पुराणाय साङ्ख्ययोगेश्वराय च ।। १०

शक्तित्रयसमेताय मीढुषेऽहङ्कृतात्मने।
चेतआकूतिरूपाय मनोवाचो विभूतये ।। ११

दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम्।
रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम्।। १२

स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसङ्ग्रहम्।
चार्वायतचतुर्बाहुं सुजातरुचिराननम्।। १३

पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम्।
सुद्विजं सुकपोलास्यं समकर्णविभूषणम्।। १४

प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम्।

लसत्पङ्कजकिञ्जल्कदुकूलं मृष्टकुण्डलम् ।। १५

स्फुरत्किरीटवलयहारनूपुरमेखलम् ।
शङ्खचक्रगदापद्ममालामण्युत्तमर्धिमत् ।। १६

सिंहस्कन्धत्विषो बिभ्रत्सौभाग्यग्रीवकौस्तुभम् ।
श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् ।। १७

पूररेचकसंविग्नवलिवल्गुदलोदरम् ।
प्रतिसङ्क्रामयद्विश्वं नाभ्यावर्तगभीरया ।। १८

श्यामश्रोण्याधिरोचिष्णु दुकूलस्वर्णमेखलम् ।
समचार्वङ्घ्रिजङ्घोरुनिम्नजानुसुदर्शनम् ।। १९

पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्नोऽन्तरघं विधुन्वता ।
प्रदर्शय स्वीयमपास्तसाध्वसं पदं गुरो मार्गगुरुस्तमोजुषाम् ।।२०

एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ।
यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ।। २१

भवान् भक्तिमता लभ्यो दुर्लभः सर्वदेहिनाम् ।
स्वराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः ।। २२

तं दुराराध्यमाराध्यं सतामपि दुरापया ।
एकान्तभक्त्या को वाञ्छेत् पादमूलं विना बहिः ।। २३

यत्र निर्विष्टमरणं कृतान्तो नाभिमन्यते ।
विश्वं विध्वंसयन् वीर्यशौर्यविस्फूर्जितभ्रुवा ।। २४

क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ।। २५

अथानघाङ्घ्रेस्तव कीर्तितीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम्।
भूतेष्वनुक्रोशसुसत्त्वशालिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव॥

न यस्य चित्तं बहिरर्थविभ्रमं तमोगुहायां च विशुद्धमाविशत्।
यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम्॥ २७

यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत्।
तत्त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम्॥ २८

यो माययेदं पुरुरूपयाऽसृजद्बिभर्ति भूयः क्षपयत्यविक्रियः।
यद्भेदबुद्धिः सदिवात्मदुःस्थया तमात्मतन्त्रं भगवन् प्रतीमहि॥

क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु जयन्ति सिद्धये।
भूतेन्द्रियान्तःकरणोपलक्षितं वेदे च तन्त्रे च त एव कोविदाः॥

त्वमेक आद्यः पुरुषः सुप्तशक्तिस्तया रजःसत्त्वतमो विभिद्यते।
महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः॥ ३१

सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन।
अथो विदुस्तं पुरुषं सन्तमन्तर्भुंक्ते हृषीकैर्मधु सारघं यः॥ ३२

स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु कालयानः।
भूतानि भूतैरनुमेयतत्त्वो घनावलीर्वायुरिवाविषह्य॥ ३३

प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम्।
त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः॥

कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽवमानव्ययमानकेतनः।
विशङ्कयास्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश॥ ३५

अथ त्वमसि नो ब्रह्मन् परमात्मन् विपश्चिताम्।
विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः॥ ३६

इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः ।
स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ।। ३७

तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ।
पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ।। ३८

इदमाह पुरास्माकं भगवान् विश्वसृक्पतिः ।
भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम् ।। ३९

ते वयं नोदिताः सर्वे प्रजासर्गे प्रजेश्वराः ।
अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः ।। ४०

य इमं श्रद्धया युक्तो मद्गीतं भगवत्स्तवम् ।
अधीयानो दुराराध्यं हरिमाराधयत्यसौ ।। ४१

विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरम् ।
मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ।। ४२

इदं यः कल्य उत्थाय प्राञ्जलिः श्रद्धयान्वितः ।
शृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ।। ४३

## विष्णुस्तुतिः

नताःस्म विष्णुं जगदादिभूतं सुरासुरेन्द्रं जगतां प्रपालकम् ।
यन्नाभिपद्मात्किल पद्मयोनिर्बभूव तं वै शरणं गताःस्मः ।। १

नमो नमो मत्स्यवपुर्धराय नमोऽस्तु ते कच्छपरूपधारिणे ।
नमः प्रकुर्युश्च नृसिंहरूपिणे तथा पुनर्वामनरूपिणे नमः ।। २

नमोऽस्तु ते क्षत्रविनाशनाय रामाय रामाय दशास्यनाशिने ।
प्रलम्बहन्त्रे शितिवाससे नमो नमोऽस्तु बुद्धाय च दैत्यमोहिने ।।

म्लेच्छान्तकायापि च कल्किनाम्ने नमः पुनः क्रोडवपुर्धराय ।
जगद्धितार्थं च युगे युगे भवान् बिभर्ति रूपं त्वसुराभवाय ।। ४

निषूदितोऽयं ह्यधुना किल त्वया दैत्यो हिरण्याक्ष इति प्रगल्भः ।
यश्चेन्द्रमुख्यान् किल लोकपालान् संहेलया चैव तिरश्चकार ।। ५

स वै त्वया देवहितार्थमेव निपातितो देववर प्रसीद ।
त्वमस्य विश्वस्य विसर्गकर्ता ब्राह्मेण रूपेण च देवदेव ।। ६

पाता त्वमेवास्य युगे युगे च रूपाणि धत्से सुमनोहराणि ।
त्वमेव कालाग्निहरश्च भूत्वा विश्वं क्षयं नेष्यसि चान्तकाले ।। ७

अतो भवानेव च विश्वकारणं न तेऽपरं जीवमजीवमीश ।
यत्किञ्च भूतं च भविष्यरूपं प्रवर्तमानं च तथैव रूपम् ।। ८

ब्रह्मैव सर्वं च चराचराख्यं न भाति विश्वं त्वदृते च किञ्चित् ।
अस्तीति नास्तीति च भेदनिष्ठं त्वय्येव भातं सदसत्स्वरूपम् ।। ९

ततो भवन्तं कतमोऽपि देव न ज्ञातुमर्हत्यविपक्वबुद्धिः ।
ऋते भवत्पादपरायणं जनं तेनागताः स्मः शरणं शरण्यम् ।। १०

हरे मुरारे जगदेकनाथ गोविन्द दामोदर माधवेति ।
लक्ष्मीपते ! केशव केशिशत्रो ! नारायणानन्त ! विभो प्रसीद ।।

तवावतारं किमहं ब्रवीमि त्वया विना नास्ति भुवीह कोऽपि ।
किं वा गुणव्याप्तसमस्तलोकं किं वा दयां मित्रपरैकतुल्याम् ।। १२

पूजां तवाल्पामपि वेद्मि नाहं द्रव्यं कदापि न ददामि तुभ्यम् ।
तथापि चाग्रे मम मूर्तिमांस्त्वं दृष्टोऽसि मे केशव एक पूज्यः ।।

दत्तस्त्वयाऽयं मम भक्तिवृक्षो धर्मार्थकामत्रय एव सोऽयम् ।
त्वद्दर्शनाम्भोमयवृष्टिसिक्तः प्रभोऽद्य कैवल्यफलं दधार ।। १४

*——*——*

कर्दमकृता

# श्रीविष्णुस्तुतिः

जुष्टं बताद्याऽखिलसत्त्वराशेः सांसिध्यमक्ष्णोस्तव दर्शनान्नः।
यद्दर्शनं जन्मभिरीड्य सद्भिराशासते योगिनो रूढयोगाः॥ १

ये मायया ते हतमेधसस्त्वत्पादारविन्दं भवसिन्धुपोतम्।
उपासते कामलवाय तेषां रासीश कामान् निरयेऽपि ये स्युः॥ २

तथा स चाहं परिवोढुकामः समानशीलां गृहमेधधेनुम्।
उपेयिवान् मूलमशेषमूलं दुराशयः कामदुघाङ्घ्रिपस्य॥ ३

प्रजापतेस्ते वचसाधीश तन्त्या लोकः किलायं कामहतोऽनुबद्धः।
अहं च लोकानुगतो वहामि बलिं च शुक्लानिमिषाय तुभ्यम्॥ ४

लोकांश्च लोकानुगतान् पशूंश्च हित्वा श्रितास्ते चरणातपत्रम्।
परस्परं त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः॥ ५

न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं षष्टिपर्व।
षण्नेम्यनन्तच्छदि यत्त्रिणाभि करालस्रोतो जगदाच्छिद्य धावत्॥

एकः स्वयं सन् जगतः सिसृक्षया द्वितीययात्मन्नधियोगमायया।
सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिर्भगवन् स्वशक्तिभिः॥

नैतद्बताधीश पदं तवेप्सितं यन्मायया नस्तनुषे भूतसूक्ष्मम्।
अनुग्रहायास्त्वपि यर्हि मायया लसत्तुलस्या तनुवा विलक्षितः॥ ८

तं त्वानुभूत्योपरतक्रियार्थं स्वमायया वर्तितलोकतन्त्रम्।
नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसि कामवर्षम्॥ ९

*___*___*

गजेन्द्रकृता

## श्रीविष्णुस्तुतिः

नमो भगवते तस्मै यत एतच्चिदात्मकम्।
पुरुषायादिबीजाय परेशायाभिधीमहि॥ १

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम्।
योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवम्॥ २

यः स्वयात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितम्।
अविद्धदृक् साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात् परः॥

कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु।
तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः॥ ४

न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम्।
यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु॥ ५

दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः।
चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः॥ ६

न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा।
तथापि लोकाप्ययसंभवाय यः स्वमायया तान्यनुकालमृच्छति॥

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे॥ ८

नम आत्मप्रदीपाय साक्षिणे परमात्मने।
नमो गिरां विदूराय मनसश्चेतसामपि॥ ९

सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे॥ १०

नमः शान्ताय घोराय मूढाय गुणधर्मिणे।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ ११

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १२

सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे।
असता छाययोक्ताय सदाभासाय ते नमः ॥ १३

नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय।
सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥ १४

गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय।
नैष्कर्म्यभावेन विवर्जितागमस्वयंप्रकाशाय नमस्करोमि ॥ १५

मादृक्प्रपन्नपशुपाशविमोक्षणाय
मुक्ताय भूरिकरुणाय नमोऽलयाय।
स्वांशेन सर्वतनुभृन्मनसि प्रतीत
प्रत्यग्दृशे भगवते बृहते नमस्ते ॥ १६

आत्मात्मजाप्तगृहवित्तजनेषु सक्तैः
दुष्प्रापणाय गुणसङ्गविवर्जिताय।
मुक्तात्मभिः स्वहृदये परिभाविताय
ज्ञानात्मने भगवते नम ईश्वराय ॥ १७

यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति।
किं त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥

एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः।
अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्ति आनन्दसमुद्रमग्नाः ॥ १९

तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम्।

अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥ २०

यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २१

यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो
निर्यान्ति संयान्त्यसकृत् स्वरोचिषः ।
तथा यतोऽयं गुणसंप्रवाहो
बुद्धिर्मनः खानि शरीरसर्गाः ॥ २२

स वै न देवासुरमर्त्यतिर्यङ्
न स्त्री न षण्ढो न पुमान्न जन्तुः ।
नायं गुणः कर्म न सन्न चासन्
निषेधशेषो जयतादशेषः ॥ २३

जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम् ॥

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २५

योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं तं नमोऽस्म्यहम् ॥ २६

नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये कदिन्द्रियाणामनवाप्यवर्त्मने ॥ २७

नायं वेद स्वमात्मानं यच्छक्त्याहंधिया हतम् ।
तं दुरत्ययमाहात्म्यं भगवन्तमितोऽस्म्यहम् ॥ २८

—श्रीमद्भागवततः

ब्रह्मकृता

# श्री विष्णुस्तुतिः

ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां
न ज्ञायते भगवतो गतिरित्यवद्यम्।
नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं
मायागुणव्यतिकराद्यदुरुर्विभासि॥ १

रूपं यदेतदवबोधरसोदयेन
शश्वन्निवृत्ततमसः सदनुग्रहाय।
आदौ गृहीतमवतारशतैकबीजं
यन्नाभिपद्मभवनादहमाविरासम्॥ २

नातः परं परम यद्भवतः स्वरूपं
आनन्दमात्रमविकल्पमविद्धवर्चः।
पश्यामि विश्वसृजमेकमविश्वमात्मन्
भूतेन्द्रियात्मकमदस्त उपाश्रितोऽस्मि॥ ३

तद्वा इदं भुवनमङ्गल मङ्गलाय
ध्याने स्म नो दर्शितं त उपासकानाम्।
तस्मै नमो भगवतेऽनुविधेम तुभ्यं
योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैः॥ ४

ये तु त्वदीयचरणाम्बुजकोशगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम्।
भक्त्या गृहीतचरणः परया च तेषां
नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम्॥ ५

तावद्भयं द्रविणगेहसुहृन्निमित्तं
शोकः स्पृहा परिभवो विपुलश्च लोभः ।
तावन्ममेत्यसदवग्रह आर्तिमूलं
यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥ ६

दैवेन ते हतधियो भवतः प्रसङ्गात्
सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये ।
कुर्वन्ति कामसुखलेशलवाय दीनाः
लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥ ७

क्षुत्तृट्त्रिधातुभिरिमा मुहुरर्द्यमानाः
शीतोष्णवातवर्षैरितरेतराच्च ।
कामाग्निनाऽच्युत रुषा च सुदुर्भरेण
संपश्यतो मन उरुक्रम सीदते मे ॥ ८

यावत्पृथक्त्वमिदमात्मन इन्द्रियार्थ-
मायाबलं भगवतो जन ईश पश्येत् ।
तावन्न संसृतिरसौ प्रतिसंक्रमेत
व्यर्थापि दुःखनिवहं वहती क्रियार्था ॥ ९

अह्न्यापृतार्तकरणा निशि निःशयाना
नानामनोरथधिया क्षणभग्ननिद्राः ।
दैवाहतार्थरचना ऋषयोऽपि देव
युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥ १०

त्वं भावयोगपरिभावितहृत्सरोजः
आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् ।
यद्यद्धिया त उरुगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥ ११

नातिप्रसीदति तथोपचितोपचारैः
आराधितः सुरगणैर्हृदि बद्धकामैः ।
यत्सर्वभूतदययाऽ सदलभ्ययैको
नानाजनेष्ववहितः सुहृदन्तरात्मा ।। १२

पुंसामतो विविधकर्मभिरध्वराद्यैः
दानेन चोग्रतपसा व्रतचर्यया च ।
आराधनं भगवतस्तव सत्क्रियार्थो
धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्र ।। १३

शश्वत्स्वरूपमहसैव निपीतभेद
मोहाय बोधधिषणाय नमः परस्मै ।
विश्वोद्भवस्थितिलयेषु निमित्तलीला-
रासाय ते नम इदं चकृमेश्वराय ।। १४

यस्यावतारगुणकर्मविडम्बनानि
नामानि येऽसुविगमे विवशा गृणन्ति ।
तेनैकजन्मशमलं सहसैव हित्वा
संयान्त्यपावृतमृतं तमजं प्रपद्ये ।। १५

यो वा अहं च गिरिशश्च विभुः स्वयं च
स्थित्युद्भवप्रलयहेतव आत्ममूलम् ।
भित्त्वा त्रिपाद्ववृध एक उरुप्ररोहः
तस्मै नमो भगवते भुवनद्रुमाय ।। १६

लोको विकर्मनिरतः कुशले प्रमत्तः
कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।

यस्तावदस्य बलवानिह जीविताशां
सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ।। १७

यस्माद्बिभेम्यहमपि द्विपरार्धधिष्ण्य-
मध्यासितः सकललोकनमस्कृतं यत् ।
तेपे तपो बहुसवोऽवरुरुत्समानः
तस्मै नमो भगवतेऽधिमखाय तुभ्यम् ।। १८

तिर्यङ्मनुष्यविबुधादिषु जीवयोनि-
ष्वात्मेच्छयात्मकृतसेतुपरीप्सया यः ।
रेमे निरस्तरतिरप्यवरुद्धदेहः
तस्मै नमो भगवते पुरुषोत्तमाय ।। १९

योऽविद्ययाऽनुपहतोऽपि दशार्धवृत्त्या
निद्रामुवाह जठरीकृतलोकयात्रः ।
अन्तर्जलेऽहिकशिपुस्पर्शानुकूलां
भीमोर्मिमालिनि जनस्य सुखं विवृण्वन् ।। २०

यन्नाभिपद्मभवनादहमासमीड्य
लोकत्रयोपकरणो यदनुग्रहेण ।
तस्मै नमस्त उदरस्थभवाय योग-
निद्रावसानविकसन्नलिनेक्षणाय ।। २१

सोऽयं समस्तजगतां सुहृदेक आत्मा
सत्त्वेन यन्मृडयते भगवान्भगेन ।
तेनैव मे दृशमनुस्पृशताद्यथाहं
स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ।। २२

एष प्रपन्नवरदो रमयात्मशक्त्या
यद्यत् करिष्यति गृहीतगुणावतारः ।
तस्मिन् स्वविक्रममिदं सृजतोऽपि चेतो
युञ्जीत कर्मशमलं च यथा विजह्याम् ।। २३

नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो
विज्ञानशक्तिरहमासमनन्तशक्तेः ।
रूपं विचित्रमिदमस्य विवृण्वतो मे
मा रीरिषीष्ट निगमस्य गिरां विसर्गः ।। २४

सोऽसावदभ्रकरुणो भगवान् विवृद्ध
प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।
उत्थाय विश्वविजयाय च नो विषादं
माध्व्या गिराऽपनयतात् पुरुषः पुराणः ।। २५

——श्रीमद्भागवततः

वृत्रकृता

## श्रीविष्णुस्तुतिः

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक्कर्म करोतु कायः ।। १

न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ।। २

अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ।। ३

ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ।। ४

——श्रीमद्भागवततः

# विष्णुपूजास्तोत्रम्

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥ १

आराधयामि मणिसंन्निभमात्मविष्णुं
मायापुरे हृदयपङ्कजसन्निविष्टम्।
श्रद्धानदीविमलचित्तजलाभिषिक्तं
नित्यं समाधिकुसुमैरपुनर्भवाय॥ २

ज्योतिश्शान्तं सर्वलोकान्तरस्थमोङ्काराख्यं योगिहृद्ध्यानगम्यम्।
साङ्गं शक्तिं सायुधं भक्तसेव्यं सर्वाकारं विष्णुमावाहयामि॥ ३

कल्पद्रुमूले मणिवेदिमध्ये सिंहासने स्वर्णमयं सरत्नम्।
विचित्रवस्त्रावृतमच्युत प्रभो गृहाण लक्ष्मीधरणीसमन्वित॥ ४

पादोदकं ते परिकल्पयामि पुण्यं सरित्सागरतोयनीतम्।
पाद्यं प्रदास्ये सुमनस्समेतं गृहाण लक्ष्मीधरणीसमन्वित॥ ५

ब्रह्मेन्द्ररुद्राग्निमुनीन्द्रसेव्यपादारविन्दाम्बुदसन्निभाङ्ग।
अर्घ्यं गृहाणाश्रितपारिजात श्रिया सहाम्भोजदलायताक्ष॥ ६

तीर्थोदकं गाङ्गमिदं हि विष्णो त्रिविक्रमानन्त मया निवेदितम्।
दध्याज्ययुक्तं मधुपर्कसंज्ञं गृहाण देवेश यथाक्रमेण॥ ७

आकल्पसंशोभितदिव्यगात्र राकेन्दुनीकाशमुखारविन्द।
दत्त मया चाचमनं गृहाण श्रीकेशवानन्त धरारिदारिन्॥ ८

तीर्थोदकैः काञ्चनकुम्भसंस्थैस्सुवासितैर्देव सुमन्त्रपूतैः ।
मयार्पितं स्नानमिदं गृहाण पादाब्जनिष्ठ्यूतनदीप्रवाह ।। ९

मन्दाकिनी जह्नुसुतार्य गौतमी वेण्यादितीर्थेषु च पुण्यवत्सु ।
आनीतमम्भो घनसारयुक्तं श्रीखण्डमिश्रं कुसुमादिसंश्रितम् ।। १०

कामधेनोस्समुद्भूतं देवर्षिपितृतृप्तिदम् ।
पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम् ।। ११

चन्द्रमण्डलसङ्काशं सर्वदेवप्रियं दधि ।
स्नानार्थं ते मया दत्तं प्रीत्यर्थं प्रतिगृह्यताम् ।। १२

आज्यं सुराणामाहारमाज्यं यज्ञे प्रतिष्ठितम् ।
आज्यं पवित्रं परमं स्नानार्थं प्रतिगृह्यताम् ।। १३

सर्वौषधिसमुत्पन्नं पीयूषममृतं मधु ।
स्नानार्थं ते प्रयच्छामि गृहाण परमेश्वर ।। १४

इक्षुदण्डसमुद्भूत दिव्यशर्करया हरिम् ।
स्नपयामि सदा भक्त्या प्रीतो भव सुरेश्वर ।। १५

स्वर्णाञ्चलं चित्रतरं सुशोभितं कौशेययुग्मं परिकल्पितं मया ।
दामोदर प्रावरणं गृहाण मायाबलप्रावृत दिव्यरूप ।। १६

सुवर्णतंतूद्भवयज्ञसूत्रं मुक्ताफलस्यूतमनेकरत्नम् ।
गृहाण तद्भक्तिप्रियमुत्तरीयं स्वकर्मसूत्रान्तरिणे नमोस्तु ।। १७

कस्तूरिकाकर्दमचन्दनानि काश्मीरसंयोजितगन्धसारैः ।
विलेपनं स्वीकुरु देवदेव श्रीदेविवक्षोजविलेपनाङ्ग ।। १८

श्रीगन्धं चन्दनोन्मिश्रं कर्पूरेण सुसंयुतम् ।
विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ।। १९

सेवन्तिकावकुलचम्पकपाटलाब्जैः
पुन्नागजातिकरवीररसालपुष्पैः ।
बिल्वप्रवालतुलसीदलमल्लिकाभिः
त्वां पूजयामि जगदीश्वर मे प्रसीद ।। २१

आरामपुष्पाणि मनोहराणि जलाशयस्थानि सुपल्लवानि ।
सुवर्णपुष्पाणि मयार्पितानि त्वं गृह्यतां देववर प्रसीद ।। २२

केयूरकटके चैव हस्ते चित्राङ्गुलीयकम् ।
माणिक्योल्लासि मकुटं कुण्डले हारशोभितम् ।। २३

नाभौ नायकरत्नं च नूपुरे पादपद्मयोः ।
अङ्गुलीमुद्रिकाश्चैव गृहाण पुरुषोत्तम ।। २४

श्रीखण्डलाक्षासितकाष्ठदिव्यकर्पूरकालागुरुकर्दमानि ।
स्वचोरकाचन्दनदेवदारुमांसीनखं शैलजपूतिकाश्च ।। २५

कालागुरुप्रचुरगुग्गुलुगन्धधूपैर्नानाविधैस्सुरभितैः खलु धूप्यमानैः ।
त्वां धूपयामि रघुपुङ्गव वासुदेव लक्ष्मीपते मयि दयां कुरु लोकनाथ ।।

सूर्येन्दुकोटिप्रभ वासुदेव दीपावलिं गोघृतवर्तियुक्ताम् ।
गृहाण लोकत्रयपूजिताङ्घ्रे धर्मप्रदीपान्कुरु दीप्यमानान् ।। २७

स्वामिन् लक्ष्मीश देवेश भक्तलोक दयानिधे ।
ज्ञानतोऽज्ञानतो वापि भक्त्या शक्त्या समर्पितम् ।। २८

मयोपनीतं नैवेद्यं पञ्चभक्ष्यसुभोजनम् ।
मक्षिका मशकाः केशाः पृथु बीजानि वल्कलाः ।। २९

पाषाणमस्थिकं सर्वं कृमिकीटपिपीलिकाः ।
एतान्सर्वान्परित्यज्य शुचिपाकानि यानि वै ।। ३०

तानि सर्वाणि गृह्णीष्व मया दत्तानि माधव ।
कदलीपनसाम्राणां सुपक्वानि फलानि च ।। ३१

अन्नं चतुर्विधं सूपं सद्यस्तप्तघृतं दधि ।
मया समर्पितं सर्वं सङ्गृहाण श्रिया सह ।। ३२

सौवर्णस्थालिमध्ये मणिगणखचिते गोघृताक्तान् सुपक्वान्
भक्ष्यान्भोज्यांश्च लेह्यानपरिमितमहाचोष्यमन्नं निधाय ।
नानाशाकैरुपेतं दधिमधुसुगुडक्षीरपानीययुक्तं
ताम्बूलं चापि विष्णो प्रतिदिनमहं मानसे कल्पयामि ।। ३३

सुपूगखण्डैश्च सुशुभ्रपर्णैसुशङ्खचूर्णैर्घनसारमिश्रैः ।
मयार्पितं देव दयासमुद्र ताम्बूलमेतत्प्रमुदा गृहाण ।। ३४

नीराजनं स्वीकुरु देवदेव नीलोत्पलश्रीकर नीरजाक्ष ।
गृहाण देवासुरमौलिरत्नमरीचिनीराजितपादपद्म ।। ३५

पुष्पाञ्जलिं स्वीकुरु पुष्कराक्ष प्रसन्नकल्पद्रुमपारिजात ।
इन्द्रादिवृन्दारकवन्द्यपाद नमोस्तु ते देववर प्रसीद ।। ३६

यादि कानि च पापानि जन्मान्तरकृतानि च ।
तानि तानि प्रणश्यन्ति प्रदक्षिणपदेपदे ।। ३७

पापोऽहं पापकर्माहं पापात्मा पापसंभवः ।
त्राहि मां कृपया देव शरणागतवत्सल ।। ३८

अन्यथा शरणं नास्ति त्वमेव शरणं मम।
तस्मात्कारुण्यभावेन रक्ष रक्ष जनार्दन ।। ३९

नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ।। ४०

आवाहनं न जानामि न जानामि विसर्जनम्।
पूजां चैव न जानामि क्षमस्व परमेश्वर ।। ४१

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ।। ४२

मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन।
यत्पूजितं मया देव परिपूर्णं तदस्तु ते ।। ४३

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वर ।। ४४

मत्समो नास्ति पापिष्ठः त्वत्समो नास्ति पापहा।
इति संचिन्त्य देवेश यथेच्छसि तथा कुरु ।। ४५

भूमौ स्खलितपदानां भूमिरेवावलम्बनम्।
त्वयि जातापराधानां त्वमेव शरणं मम ।। ४६

गतं पापं गतं दुःखं गतं दारिद्र्यमेव च।
आगता सुखसंपत्तिः पुण्याच्च तव दर्शनात् ।। ४७

रूपं देहि जयं देहि यशो देहि द्विषो जहि।
पुत्रान् देहि धनं देहि सर्वान्कामांश्च देहि मे ।। ४८

*___*___*

श्रीशङ्करभगवत्पादकृतं

# विष्णुभुजङ्गप्रयातस्तोत्रम्

चिदशं विभुं निर्मलं निर्विकल्पं निरीहं निराकारमोङ्कारगम्यम्।
गुणातीतमव्यक्तमेकं तुरीयं परं ब्रह्म यं वेद तस्मै नमस्ते ॥ १

विशुद्धं शिवं शान्तमाद्यंतशून्यं जगज्जीवनं ज्योतिरानन्दरूपम्।
अदिग्देशकालव्यवच्छेदनीयं त्रयी वक्ति यं वेद तस्मै नमस्ते ॥ २

महायोगपीठे परिभ्राजमाने धरण्यादितत्त्वात्मके शक्तियुक्ते।
गुणाहस्करे वह्निबिम्बार्कमध्ये समासीनमोङ्कर्णिकेऽष्टाक्षराब्जे ॥

समानोदितानेकसूर्येंदुकोटिप्रभापूरतुल्यद्युतिं दुर्निरीक्षम्।
न शीतं न चोष्णं सुवर्णावदातप्रसन्नं सदानन्दसंवित्स्वरूपम् ॥ ४

सुनासापुटं सुन्दरभ्रूललाटं किरीटोचिताकुञ्चितस्निग्धकेशम्।
स्फुरत्पुण्डरीकाभिरामायताक्षं समुत्फुल्लरत्नप्रसूनावतंसम् ॥ ५

लसत्कुण्डलामृष्टगण्डस्थलान्तं जपारागचोराधरं चारुहासम्।
अलिव्याकुलामोदिमन्दारमालं महोरःस्फुरत्कौस्तुभोदारहारम् ॥

सुरत्नाङ्गदैरन्वितं बाहुदण्डैश्चतुर्भिश्चलत्कङ्कणालङ्कृताग्रैः।
उदारोदरालङ्कृतं पीतवस्त्रं पदद्वंद्वनिर्धूतपद्माभिरामम् ॥ ७

स्वभक्तेषु सन्दर्शिताकारमेवं सदा भावयन्सन्निरुद्धेन्द्रियाश्वः।
दुरापं नरो याति संसारपारं परस्मै परेभ्योऽपि तस्मै नमस्ते ॥ ८

श्रिया शातकुम्भद्युतिस्निग्धकान्त्या धरण्या च दूर्वादलश्यामलाङ्ग्या।
कलत्रद्वयेनामुना तोषिताय त्रिलोकीगृहस्थाय विष्णो नमस्ते ॥ ९

शरीरं कलत्रं सुतं बन्धुवर्गं वयस्यं धनं सद्म भृत्यं भुवं च।
समस्तं परित्यज्य हा कष्टमेको गमिष्यामि दुःखेन दूरं किलाहम् ॥

जरेयं पिशाचीव हा जीवतो मे वसामत्ति रक्तं च बलं च।
अहो देव सीदामि दीनानुकंपिन् किमद्यपि हन्त त्वयोदासितव्यम् ॥

कफव्याहतोष्णोल्बणश्वासवेगव्यथाविस्फुरत्सर्वमर्मास्थिबन्धम् ।
विचिन्त्याहमन्त्यामसङ्ख्यामवस्थां बिभेमि प्रभो किं करोमि प्रसीद ॥

लपन्नच्युतानन्त गोविन्द विष्णो मुरारे हरे नाथ नारायणेति ।
यथाऽनुस्मरिष्यामि भक्त्या भवन्तं तथा मे दयाशील देव प्रसीद ॥

भुजङ्गप्रयातं पठेद्यस्तु भक्त्या समाधाय चित्ते भवन्तं मुरारे ।
स मोहं विहायाशु युष्मत्प्रसादात्समाश्रित्य योगं व्रजत्यच्युतं त्वाम् ॥

*—*—*

ब्रह्मानन्दकृतं

## विष्णुमहिम्नः स्तोत्रम्

महिम्नस्ते पारं विधिहरफणीन्द्रप्रभृतयो
विदुर्नाद्याप्यज्ञश्चलमतिरहं नाथ नु कथम् ।
विजानीयामद्धा नलिननयनात्मीवचसो
विशुद्ध्यै वक्ष्यामीषदपि तु तथापि स्वमतितः ॥ १

यदाहुर्ब्रह्मैके पुरुषमितरे कर्म च परेऽ
परे बुद्धं चान्ये शिवमपि च धातारमपरे ।
तथा शक्तिं केचिद्गणपतिमुतार्कं च सुधियो
मतीनां वै भेदात्त्वमसि तदशेषं मम मतिः ॥ २

शिवः पादांभस्ते शिरसि धृतवानादरयुतं
तथा शक्तिश्चासौ तव तनुजतेजोमयतनुः ।
दिनेशं चैवामुं तव नयनमूचुस्तु निगमाः
त्वदन्यः को ध्येयो जगति किल देवो वद विभो ॥ ३

क्वचिन्मत्स्यः कूर्मः क्वचिदपि वराहो नरहरिः
क्वचित्खर्वो रामो दशरथसुतो नन्दतनयः ।

कचिद्बुद्धः कल्किर्विहरसि कुभारापहतये
 स्वतन्त्रोऽजो नित्यो विभुरपि तवाक्रीडनमिदम् ।। ४

हताम्नायेनोक्तं स्तवनवरमाकर्ण्य विधिना
 द्रुतं मात्स्यं धृत्वा वपुरजरशङ्खासुरमथो ।
क्षयं नीत्वा मृत्योर्निगमगणमुद्धृत्य जलधेः
 अशेषं संगुप्तं जगदपि च वेदैकशरणम् ।। ५

निमज्जन्तं वार्धौ नगवरमुपालोक्य सहसा
 हितार्थं देवानां कमठवपुषाऽऽविश्य गहनम् ।
पयोराशिं पृष्ठे तमजित सलीलं धृतवतो
 जगद्धातुस्तेऽभूत्किमु सुलभभाराय गिरिकः ।। ६

हिरण्याक्षः क्षोणीमविशदसुरो नक्रनिलयं
 समादायामर्त्यैः कमलजमुखैरम्बरगतैः ।
स्तुतेनानन्तात्मन्नचिरमवभाति स्म विधृता
 त्वया दंष्ट्राग्रेऽसाववनिरखिला कन्दुक इव ।। ७

हरिः कास्तीत्युक्ते दनुजपतिनाऽऽपूर्य निखिलं
 जगन्नादैः स्तंभान्नरहरिशरीरेण करजैः ।
समुत्पत्याशूरावसुरवरमादारितवतः
 तवाख्याता भूमन् किमु जगति नो सर्वगतता ।। ८

विलोक्याजं द्वार्गं कपटलघुकायं सुररिपुः
 निषिद्धोऽपि प्रादादसुरगुरुणात्मीयमखिलम् ।
प्रसन्नस्तद्भक्त्या त्यजसि किल नाद्यापि भवनं
 बलेर्भक्ताधीन्यं तव विदितमेवामरपते ।। ९

समाधावासक्तं नृपतितनयैर्वीक्ष्य पितरं
 हतं बाणै रोषाद्गुरुतरमुपादाय परशुम् ।

विना क्षत्रं विष्णो क्षितितलमशेषं कृतवतोऽ
सकृत्किं भूभारोद्धरणपटुता ते न विदिता ॥ १०

समाराध्योमेशं त्रिभुवनमिदं वासवमुखं
वशे चक्रे चक्रिन्नगणयदनीशं जगदिदम् ।
गतोऽसौ लङ्केशस्त्वचिरमथ ते बाणविषयं
न केनाप्तं त्वत्तः फलमविनयस्यासुररिपो ॥ ११

क्वचिद्दिव्यं शौर्यं क्वचिदपि रणे कापुरुषता
क्वचिद्गीताज्ञानं क्वचिदपि परस्त्रीविहरणम् ।
क्वचिन्मृत्स्नाशित्वं क्वचिदपि च वैकुण्ठविभवः
चरित्रं ते नूनं शरणद विमोहाय कुधियाम् ॥ १२

न हिंस्यादित्येतद्ध्रुवमवितथं वाक्यमबुधैः
अथाग्नीषोमीयं पशुमिति तु विप्रैर्निगदितम् ।
तवैतन्नास्थानेऽसुरगणविमोहाय गदतः
समृद्धिर्नीचानां नयकर हि दुःखाय जगतः ॥ १३

विभागे वर्णानां निगमनिचये चावनितले
विलुप्ते संजातो द्विजवरगृहे शंभलपुरे ।
समारुह्याश्वं लसदसिकरो म्लेच्छनिकरान्
निहंताऽस्युन्मत्तान्किल कलियुगांते युगपते ॥ १४

गभीरे कासारे जलचरवराकृष्टचरणो
रणेऽशक्तो मज्जन्नभयद जलेऽचिन्तयदसौ ।
यदा नागेन्द्रस्त्वां सपदि पदपाशादपगतो
गतः स्वर्गं स्थानं भवति विपदां ते किमु जनः ॥ १५

सुतैः पृष्टो वेधाः प्रतिवचनदानेऽप्रभुरसौ
अथात्मन्यात्मानं शरणमगमत्त्वां त्रिजगताम् ।

ततस्तेऽस्तातङ्का ययुरथ मुदं हंसवपुषा
त्वया ते सार्वज्ञ्यं प्रथितममरेशेह किमु नो ॥ १६

समाविद्धो मातुर्वचनविशिखैराशु विपिनं
तपश्चक्रे गत्वा तव परमतोषाय परमम् ।
ध्रुवो लेभे दिव्यं पदमचलमल्पेऽपि वयसि
किमस्त्यस्मिँल्लोके त्वयि वरद तुष्टे दुरधिगम् ॥ १७

वृकाद्भीतस्तूर्णं स्वजनभयभित्त्वां पशुपतिः
भ्रमँल्लोकान्सर्वान् शरणमुपयातोऽथ दनुजः ।
स्वयं भस्मीभूतस्तव वचनभङ्गोद्गतमती
रमेशाहो माया तव दुरनुमेयाऽखिलजनैः ॥ १८

हृतं दैत्यैर्दृष्ट्वाऽमृतघटमजय्यैस्तु नयतः
कटाक्षैः संमोहं युवतिवरवेषेण दितिजान् ।
समग्रं पीयूषं सुभग सुरपूगाय ददतः
समस्यापि प्रायस्तव खलु हि भृत्येष्वभिरतिः ॥ १९

समाकृष्टा दुष्टैर्द्रुपदतनयाऽलब्धशरणा
सभायां सर्वात्मंस्तव शरणमुच्चैरुपगता ।
समक्षं सर्वेषामभवदचिरं चीरनिचयः
स्मृतेस्ते साफल्यं नयनविषयं नो किमु सताम् ॥ २०

वदंत्येके स्थानं तव वरद वैकुण्ठमपरे
गवां लोकं लोकं फणिनिलयपातालमितरे ।
तथान्ये क्षीरोदं हृदयनलिनं चापि तु सतां
न मन्ये तत्स्थानं त्वहमिह च यत्रासि न विभो ॥ २१

शिवोऽहं रुद्राणामहममरराजो दिविषदां
मुनीनां व्यासोऽहं सुरवर समुद्रोऽस्मि सरसाम् ।

कुबेरो यक्षाणामिति तव वचो मन्दमतये
न जाने तज्जातं जगति ननु यन्नासि भगवन् ।। २२

शिरो नाको नेत्रे शशिदिनकरावम्बरमुरो
दिशः श्रोत्रे वाणी निगमनिकरस्ते कटिरिला।
अकूपारो बस्तिश्चरणमपि पातालमिति वै
स्वरूपं तेऽज्ञात्वा नृतनुमवजानन्ति कुधियः ।। २३

शरीरं वैकुण्ठं हृदयनलिनं वाससदनं
मनोवृत्तिस्ताक्ष्यो मतिरियमथो सागरसुता।
विहारस्तेऽवस्थात्रितयमसवः पार्षदगणो
न पश्यत्यज्ञा त्वामिह बहिरहो याति जनता ।। २४

सुघोरं कान्तारं विशति च तडागं सुगहनं
तथोत्तुङ्गं शृङ्गं सपदि च समारोहति गिरेः ।
प्रसूनार्थं चेतोम्बुजममलमेकं त्वयि विभो
समर्प्याज्ञस्तूर्णं बत न च सुखं विन्दति जनः ।। २५

कृतैकान्तावासा विगतनिखिलाशाः शमपराः
जितश्वासोच्छ्वासास्त्रुटितभवपाशाः सुयमिनः ।
परं ज्योतिः पश्यंत्यनघ यदि पश्यन्तु मम तु
श्रियाश्लिष्टं भूयान्नयनविषयं ते किल वपुः ।। २६

कदा गङ्गोत्तुंगामलतरतरङ्गाच्छपुलिने
वसन्नाशापाशादखिलखलदाशादपगतः ।
अये लक्ष्मीकान्ताम्बुजनयन तातामरपते
प्रसीदेत्याजल्पन्नमरवर नेष्यामि समयम् ।। २७

कदा शृङ्गैः स्फीते मुनिगणपरीते हिमनगे
द्रुमावीते शीते सुरमधुरगीते प्रतिवसन् ।

कचिद्ध्यानासक्तो विषयसुविरक्तो भवहरं
स्मरंस्ते पादाब्जं जनिहर समेष्यामि विलयम्॥ २८

सुधापानं ज्ञानं न च विपुलदानं न निगमो
न यागो नो योगो न च निखिलभोगोपरमणम्।
जपो नो नो तीर्थं व्रतमिह न चोग्रं त्वयि तपो
विना भक्तिं तेऽलं भवभयविनाशाय मधुहन्॥ २९

नमः सर्वेष्टाय श्रुतिशिखरदृष्टाय च नमो
नमोऽसंश्लिष्टाय त्रिभुवननिविष्टाय च नमः।
नमो विस्पष्टाय प्रणवपरिमृष्टाय च नमो
नमस्ते सर्वात्मन्पुनरपि पुनस्ते मम नमः॥ ३०

कणान्कश्चिद्वृष्टेर्गणननिपुणस्तूर्णमवनेः
तथाऽशेषान्पांसूनमित कलयेच्चापि तु जनः।
नभः पिण्डीकुर्यादशिरमपि चेच्चर्मवदिदं
तथापीशासौ ते कलयितुमलं नाखिलगुणान्॥ ३१

क माहात्म्यं सीमोज्झितमविषयं वेदवचसां
विभो ते मे चेतः क च विविधतापाहतमिदम्।
मयेदं यत्किञ्चिद्गदितमथ बाल्येन तु गुरो
गृहाणैतच्छुद्धार्पितमिह न हेयं हि महताम्॥ ३२

इति हरिस्तवनं सुमनोहरं परमहंसजनेन समीरितम्।
सुगमसुन्दरसारपदास्पदं तदिदमस्तु हरेरनिशं मुदे॥ ३३

गदारथाङ्गाम्बुजकम्बुधारिणो रमासमाश्लिष्टतनोस्तनोतु नः।
बिलेशयाधीशशरीरशायिनः शिवं स्तवोऽजस्रमयं परं हरेः॥ ३४

पठेदिमं यस्तु नरः परं स्तवं समाहितोघौघघनप्रभञ्जनम्।
स विन्दतेऽत्राखिलभोगसंपदो महीयते विष्णुपदे ततो ध्रुवम्॥

पद्माकृतः

## विष्णुस्तवराजः

योगेन सिद्धविबुधैः परिभाव्यमानं
लक्ष्म्यालयं तुलसिकाचितभक्तभृङ्गम्।
प्रोत्तुङ्गरक्तनखराङ्गुलिपत्रचित्रं
गङ्गारसं हरिपदाम्बुजमाश्रयेऽहम्।। १

गुंफन्मणिप्रचयघट्टितराजहंस
सिञ्जत्सुनूपुरयुतं पदपद्मवृन्दम्।
पीताम्बराञ्चलविलोलचलत्पताकं
स्वर्णत्रिवक्रवलयं च हरेः स्मरामि।। २

जङ्घे सुपर्णगलनीलमणिप्रवृद्धे
शोभास्पदारुणमणिद्युतिचञ्चुमध्ये।
आरक्तपादतललम्बनशोभमाने
लोकेक्षणोत्सवकरे च हरेः स्मरामि।। ३

ते जानुनी मखपतेर्भुजमूलसङ्ग-
रङ्गोत्सवावृततडिद्वसने विचित्रे।
चञ्चत्पतत्रिमुखनिर्गतसामगीत-
विस्तारितात्मयशसी च हरेः स्मरामि।। ४

विष्णोः कटिं विधिकृतान्तमनोजभूमिं
जीवाण्डकोशगणसङ्गदुकूलमध्याम्।
नानागुणप्रकृतिपीतविचित्रवस्त्रां
ध्याये निबद्धवसनां खगपृष्ठसंस्थाम्।। ५

शान्तोदरं भगवतस्त्रिवलिप्रकाशं
आवर्तनाभिविकसद्विधिजन्मपद्मम्।
नाडीनदीगणरसोत्थसितान्त्रसिन्धुं
ध्यायेऽण्डकोशनिलयं तनुलोमरेखम्॥ ६

वक्षःपयोधितनयाकुचकुङ्कुमेन
हारेण कौस्तुभमणिप्रभया विभातम्।
श्रीवत्सलक्ष्म हरिचन्दनजप्रसूनं
आलोचितं भगवतः सुभगं स्मरामि॥ ७

बाहू सुवेषसदनौ वलयाङ्गदादि
शोभास्पदौ दुरितदैत्यविनाशदक्षौ।
तौ दक्षिणौ भगवतश्च गदासुनाभ
तेजोर्जितौ सुललितौ मनसा स्मरामि॥ ८

वामौ भुजौ मुररिपोर्धृतपद्मशङ्खौ
श्यामौ करीन्द्रकरवन्मणिभूषणाढ्यौ।
रक्ताङ्गुलिप्रचयचुम्बितजानुमध्यौ
पद्मालयाप्रियकरौ रुचिरौ स्मरामि॥ ९

कण्ठं मृणालममलं मुखपङ्कजस्य
लेखात्रयेण वनमालिकया निवीतम्।
किंवा विमुक्तिवशमन्त्रकसत्फलस्य
वृन्तं चिरं भगवतः सुभगं स्मरामि॥ १०

वक्त्राम्बुजं दशनहासविकासरम्यं
रक्ताधरोष्ठवरकोमलवाक्सुधाढ्यम्।
सन्मानसोद्भवचलेक्षणपत्रचित्रं
लोकाभिराममलं च हरेः स्मरामि॥ ११

सूरात्मजावसथगंधमिदं सुनासं
भ्रूपल्लवं स्थितिलयोदयकर्मदक्षम्।
कामोत्सवं च कमलाहृदयप्रकाशं
संचिंतयामि हरिवक्त्रविलासदक्षम्।। १२

कर्णौ लसन्मकरकुण्डलगंधलोलौ
नानादिशां च नभसश्च विकासगेहम्।
लोलालकप्रचयचुंबनकुञ्चिताग्रौ
लग्नौ हरेर्मणिकिरीटतटे स्मरामि।। १३

भालं विचित्रतिलकं प्रियचारुगंध
गोरोचनारचनया ललनाक्षिसख्यम्।
ब्रह्मैकधाम मणिकान्तकिरीटजुष्टं
ध्याये मनोनयनहारकमीश्वरस्य।। १४

श्रीवासुदेवचिकुरं कुटिलं निबद्धं
नानासुगंधिकुसुमैः स्वजनादरेण।
दीर्घं रमाहृदयगाशमनं धुनन्तं
ध्यायेऽम्बुवाहरुचिरं हृदयाब्जमध्ये।। १५

मेघाकारं सोमसूर्यप्रकाशं सुभ्रून्नासं शक्रचापैकमानम्।
लोकातीतं पुण्डरीकायताक्षं विद्युच्चैलं चाश्रयेऽहं त्वपूर्वम्।। १६

दीनं हीनं सेवया दैवगत्या पापैस्तापैः पूरितं मे शरीरम्।
लोभाक्रान्तं शोकमोहादिविद्धं कृपादृष्ट्या पाहि मां वासुदेव।।

ये भक्त्याद्यां ध्यायमानां मनोज्ञां
व्यक्तिं विष्णोः षोडशश्लोकपुष्पैः।

स्तुत्वा नत्वा पूजयित्वा विधिज्ञाः
शुद्धा मुक्ताः ब्रह्मसौख्यं प्रयान्ति ॥ १८

पद्मेरितमिदं पुण्यं शिवेन परिभाषितम् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं परम् ॥ १९

पठन्ति ये महाभागास्ते मुच्यन्तेंऽम्हसोऽखिलात् ।
धर्मार्थकाममोक्षाणां परत्रेह फलप्रदम् ॥ २०

(श्रीकल्किपुराणेऽनुभागवते)

रघूत्तमकृतं

## विष्णवष्टकम्

पुरः सृष्टाविष्टः पुरुष इति तत्प्रेक्षणमुखः
सहस्राक्षो भुक्त्वा फलमनुशयी शास्ति तमुत ।
स्वयं शुद्धं शान्तं निरवधिसुखं नित्यमचलं
नमामि श्रीविष्णुं जलधितनयासेवितपदम् ॥ १

अनन्तं सत्सत्यं भवभयहरं ब्रह्म परमं
सदा भातं नित्यं जगदिदमितः कल्पितपरम् ।
मुहुर्ज्ञानं यस्मिन् रजतमिव शुक्तौ भ्रमहरं
नमामि श्रीविष्णुं जलधितनयासेवितपदम् ॥ २

मतौ यत्सद्रूपं मृगयति बुधोऽतन्निरसनात्
न रज्जौ सर्पोऽपि मुकुरजठरे नास्ति वदनम् ।
अतोऽपार्थं सर्वं न हि भवति यस्मिंश्च तमहं
नमामि श्रीविष्णुं जलधितनयासेवितपदम् ॥ ३

भ्रमद्धीविक्षिप्तेन्द्रियपथमनुष्यैर्हृदि विभुं
न यं वै वेद स्वेन्द्रियमपि वसन्तं निजमुखम्।
सदा सेव्यं भक्तैर्मुनिमनसि दीप्तं मुनिनुतं
नमामि श्रीविष्णुं जलधितनयासेवितपदम्॥ ४

बुधा यत्तद्रूपं न हि तु नैर्गुण्यममलं
यथा ये व्यक्तं ते सततमकलङ्कं श्रुतिनुतम्।
यदाहुः सर्वत्रास्खलितगुणसत्ताकमतुलं
नमामि श्रीविष्णुं जलधितनयासेवितपदम्॥ ५

लयादौ यस्मिन्यद्विलयमपि उद्यत्प्रभवति
तथा जीवोपेतं गुरुकरुणया बोधजनने।
गतं चात्यन्तान्तं व्रजति सहसा सिन्धुनदवत्
नमामि श्रीविष्णुं जलधितनयासेवितपदम्॥ ६

जडं सङ्घातं यन्निमिषलवलेशेन चपलं
यथा स्वं स्वं कार्यं प्रथयति महामोहजनकम्।
मनोवाग्जीवानां न निविशति यं निर्भयपदं
नमामि श्रीविष्णुं जलधितनयासेवितपदम्॥ ७

गुणाख्याने यस्मिन्प्रभवति न वेदोऽपि नितरां
निषिध्यद्वाक्यार्थैश्चकितचकितं योऽस्य वचनम्।
स्वरूपं यद्गत्वा प्रभुरपि च तूष्णीं भवति तं
नमामि श्रीविष्णुं जलधितनयासेवितपदम्॥ ८

विष्ण्वष्टकं यः पठति प्रभाते नरोऽप्यखण्डं सुखमश्नुते च।
यन्नित्यबोधाय सुबुद्धिनोक्तं रघूत्तमाख्येन विचार्य सम्यक्॥ ९

श्रीरामानुजाचार्यकृतं

# वैकुण्ठगद्यम्

यामुनार्यसुधाम्बोधिमवगाह्य यथामति ।
आदाय भक्तियोगाख्यं रत्नं सन्दर्शयाम्यहम् ॥

स्वाधीन त्रिविध चेतनाचेतन स्वरूप स्थिति प्रवृत्तिभेदं क्लेशकर्माद्यशेषदोषासंस्पृष्टं स्वाभाविकानवधिकातिशय ज्ञानबलैश्वर्य वीर्य शक्तितेजःप्रभृत्यसङ्ख्येयक कल्याणगुणगणौघमहार्णवं परमपुरुषं भगवन्तं नारायणम् स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च परिगृह्य ऐकान्तिकात्यन्तिकतत्पदांबुजद्वय परिचर्यैकमनोरथः तत्प्राप्तये च तत्पादाम्बुजद्वयप्रपत्तेरन्यन्न मे कल्पकोटिसहस्रेणापि साधनमस्तीति मन्वानः तस्यैव भगवतो नारायणस्याखिलसत्व दयैकसागरस्य अनालोचितगुणगणाखण्डजनानुकूलमर्यादाशीलवतः स्वाभाविकानवधिकातिशयगुणवत्तया देवतिर्यङ्मनुष्याद्यखिलजन हृदयानन्दनस्य आश्रितवात्सल्यैकजलधेः भक्तजनसंश्लेषैकभोगस्य नित्यज्ञानक्रियैश्वर्य भोगसामग्रीसमृद्धस्य महाविभूतेः श्रीमच्चरणारविन्दयुगलं अनन्यात्मसञ्जीवनेन तद्गतसर्वभावेन शरणमनुव्रजेत् ॥

ततश्च प्रत्यहमात्मोज्जीवनायैवमनुस्मरेत् ॥

चतुर्दश भुवनात्मकमण्डं दशगुणितोत्तरश्चावरणसप्तकम् समस्तकार्यकारणमतीत्य परमव्योमशब्दाभिधेये ब्रह्मादीनां वाङ्मनसागोचरे श्रीमति वैकुण्ठे दिव्य लोके सनक विधिशिवादिभिरचिन्त्यस्वभावैश्वर्यैनित्यसिद्धैरनन्तैः भगवदानुकूल्यैकभोगैः दिव्यपुरुषैर्महात्मभिरापूरिते तेषामपि इयत्परिमाणमियदैश्वर्यं ईदृशस्वभावमिति परिच्छेत्तुमयोग्ये दिव्यावरणशतसहस्रावृते

दिव्यकल्पतरूपशोभिते दिव्योद्यानशतसहस्रकोटिभिरावृते अतिप्रमाणे दिव्यायतने कस्मिंश्चित् विचित्रदिव्यरत्नमय दिव्यास्थान मण्डपे दिव्यरत्नस्तम्भशतसहस्रकोटिभिरुपशोभिते दिव्यनानारत्न कृतस्थलविचित्रिते दिव्यालङ्कारालङ्कृते परितः पतितैः पतमानैः पादपस्थैश्च नानागन्धवर्णैः दिव्यपुष्पैश्शोभमानदिव्यपुष्पो-पवनैरुपशोभिते सङ्कीर्णपारिजातादिकल्प द्रुमोपशोभितैरसङ्कीर्णैश्च कैश्चिदन्तस्थपुष्परत्नादिनिर्मितदिव्यलीलामण्टप शतसहस्रोप-शोभितैः सर्वदाऽनुभूयमानैरप्यपूर्ववदाश्चर्यमावहद्भिः क्रीडाशैल शतसहस्रैरलङ्कृते कैश्चिन्नारायणदिव्यलीलाऽसाधारणैः कैश्चित्पद्म-वनालया दिव्यलीलासाधारणैः कैश्चिच्छुक शारिकामयूरकोकिला-दिभिः कोमलकूजितैराकुलैः दिव्योद्यान शतसहस्रकोटिभिरावृते मणिमुक्ताप्रवाळकृतसोपानैः दिव्यामलामृतरसोदकैः दिव्याण्ड-जवरैरतिरमणीयदर्शनैः अतिमनोहरमधुरस्वरैराकुलैः अन्तस्थ-मुक्तामय दिव्यक्रीडास्थानोपशोभितैः दिव्यसौगन्धिकवापीशत-सहस्रैः दिव्यराजहंसावली विराजितैरावृते निरस्तातिशयनानन्दै-करसतया चानन्त्याच्च प्रविष्टानुन्मादयद्भिः क्रीडोद्देशैर्विराजिते तत्र तत्र कृतदिव्यपुष्पपर्यङ्कोपशोभिते नानापुष्पासवास्वादमत्त भृङ्गावलीभिरुद्गीयमानदिव्यगान्धर्वेणापूरिते चन्दनागरुकर्पूर दिव्यपुष्पावगाहि मन्दानिलासेव्यमाने मध्ये पुष्पसञ्चयविचित्रिते महति दिव्ययोगपर्यङ्के अनन्तभोगिनि श्रीमद्वैकुण्ठैश्वर्यादि दिव्यलोकमात्मकान्त्या विश्वमाप्याययन्त्या शेष शेषाशनादि सर्वं परिजनं भगवतस्तत्तदवस्थोचित परिचर्यायामाज्ञापयन्त्या शीलरूप गुणाविलासादिभिरात्मानुरूपया श्रिया सहासीनं प्रत्यग्रोन्मीलित सरसिज सदृशनयनयुगळं स्वच्छनीलजीमूतसङ्काशं अत्युज्ज्वलपी-तवाससं स्वया प्रभयाऽतिनिर्मलयाऽतिशीतलयाऽतिकोमलया

स्वच्छमाणिक्याभया कृत्स्नं जगद्भासयन्तं अचिन्त्य दिव्याद्भुत नित्ययौवन स्वभावलावण्यमयामृतसागरम् अतिसौकुमार्या दीषत्प्रस्विन्नवदालक्ष्यमाणललाटफलकदिव्यालकावलीविराजितम् प्रबुद्धमुग्धाम्बुज चारुलोचनं सविभ्रमभ्रूलतमुज्वलाधरं शुचिस्मितं कोमलगण्डं उन्नसं उदग्रपीनांसविलम्बि कुण्डलालकावलीबन्धुरकम्बुकन्धरं प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिः चतुर्भिराजानु विलम्बिभिर्भुजैर्विराजितं अतिकोमलदिव्यरेखालङ्कृताताम्रकरतलं दिव्याङ्गुलीयकविराजितं अतिकोमलदिव्यनखावली विराजितातिरक्ताङ्गुलीभिरलङ्कृतं तत्क्षणोन्मीलितपुण्डरीकसदृश चरणयुगळं अतिमनोहर किरीट मकुटचूडावतंस मकरकुण्डल ग्रैवेयकहार केयूर कटक श्रीवत्स कौस्तुभ मुक्तादामोदरबन्धन पीताम्बर काञ्चीगुणनू पुरादिभि रत्यन्तसुखस्पर्शैः दिव्यगन्धैर्भूषणैर्भूषितम् श्रीमत्या वैजयन्त्या बनमालया विराजितं शङ्खचक्र गदासिशार्ङ्गादि दिव्यायुधैस्सेव्यमानं स्वसङ्कल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादिके श्रीमति विष्वक्सेने न्यस्तसमस्तात्मैश्वर्यं वैनतेयादिभिः स्वभावतो निरस्तसमस्त सांसारिकस्वभावैः भगवत्परिचर्याकरणयोग्यैः भगवत्परिचर्यैक भोगैर्नित्यसिद्धैरनन्तैर्यथायोगं सेव्यमानं आत्मभोगेनानुसंहित परादिकाल दिव्यामलकोमलावलोकनेन विश्वमाह्लादयन्तं ईषदुन्मीलित मुखाम्बुजोदर विनिर्गतेन दिव्याननारविन्दशोभाजननेन दिव्यगाम्भीर्यौदार्य सौन्दर्य माधुर्याद्यनवधिकगुणगण विभूषितेन अतिमनोहर दिव्यभावगर्भेण दिव्यलीलालापामृतेन अखिलजनहृदयान्तराण्यापूरयन्तं भगवन्तं नारायणं ध्यान-योगेन दृष्ट्वा ततो भगवतो नित्यस्वाम्यं आत्मनो नित्यदास्यञ्च यथावस्थितमनुसन्धाय कदाऽहं भगवन्तं नारायणं मम कुलनाथं

मम कुलदैवतं मम कुलधनं मम भोग्यं मम मातरं मम पितमरं मम सर्वं सक्षात्करवाणि चक्षुषा ।।

कदाहं भगवत्पादाम्बुजद्वयं शिरसा सङ्ग्रहिष्यामि ।।

कदाहं भगवत्पादाम्बुजद्वय परिचर्याशया निरस्तसमस्तेतर भोगाशोपहतसमस्त सांसारिकस्वभावः तत्पादाम्बुजद्वयं प्रवेक्ष्यामि ।।

कदाहं भगवत्पादाम्बुजद्वय परिचर्याकरणयोग्यः तत्पादौ परिचरिष्यामि ।।

कदा मां भगवान् स्वकीयया अतिशीतलया दृशाऽवलोक्य स्निग्धगम्भीरमधुरया गिरा परिचर्यायामाज्ञापयिष्यतीति भगवत्परिचर्यायिा माशां वर्धयित्वा तयैवाशया तत्प्रसादोपंबृहितया भगवन्तमुपेत्य दूरादेव भगवन्तं शेषभोगे श्रिया सहासीनं वैनतेयादिभि स्सेव्यमानं "समस्तपरिवाराय श्रीमते नारायणाय नमः" इति प्रणम्योत्थायोत्थाय पुनःपुनः प्रणम्यात्यन्तसाध्वस विनयावनतो भूत्वा भगवत्पारिषदगणनायकैर्द्वारपालैः कृपया स्नेहगर्भया दृशाऽवलोकितः सम्यगभिवन्दितैस्तैस्तैरेवानुमतो भगवन्तमुपेत्य श्रीमता मूलमन्त्रेण मामैकान्तिकात्यन्तिकपरिचर्या-करणाय परिगृह्णीष्वेति याचमानः प्रणम्यात्मानं भगवते निवेदयेत् ।।

ततो भगवतः स्वयमेवात्मसञ्जीवनेन मर्यादाशील-वताऽतिप्रेमान्वितेनावलोकनेनावलोक्य सर्वदेश सर्वकाल सर्वावस्थोचितात्यन्त शेषभावाय स्वीकृतोऽनुज्ञातश्च अत्यन्त साध्वसविनयावनतः किङ्कुर्वाणः कृताञ्जलिपुटो भगवन्त मुपासीत ।।

ततश्च अनुभूयमान भावविशेषः निरतिशय प्रीत्याऽन्यत्किंचित्कर्तुं द्रष्टुमशक्तः पुनरपि शेषभावमेव याचमानो भगवन्तमेवाविच्छिन्न-स्रोतोरूपेणावलोकयन्नासीत ॥

ततो भगवता स्वयमेवात्मसञ्जीवनेनावलोकनेनावलोक्य सस्मितमाहूय समस्त क्लेशापहं निरतिशयसुखावहमात्मीय श्रीमत्पादार-विन्दयुगळं शिरसिकृतं ध्यात्वा अमृत सागरान्तर्निमग्नसर्वावयवः सुखमासीत ॥

लक्ष्मीपतेर्यतिपतेश्च दयैकधाम्नो योऽसौ पुरा समजनिष्ट जगद्धितार्थम् ।
प्राप्यं प्रकाशयतु नः परमं रहस्यं संवाद एष शरणागतिमन्त्रसारः ॥

श्रीवत्सचिह्नमिश्रकृतः

# श्रीवैकुण्ठस्तवः

श्रीवत्सचिह्न मिश्रेभ्यो नमउक्तिमधीमहे ।
यदुक्तयस्त्रयीकण्ठे यान्ति मङ्गळसूत्रताम् ॥

*___*___*

यो नित्य मच्युत पदाम्बुज युग्मरुक्म
व्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः
रामानुजस्य चरणौ शरणं प्रपद्ये ॥ १

त्रैविद्यवृद्धजनमूर्ध विभूषणं यत्
सम्पच्च सात्विकजनस्य यदेव नित्यम् ।
यद्वा शरण्यमशरण्यजनस्य पुण्यं
तत्संश्रयेम वकुळाभरणाङ्घ्रियुग्मम् ॥ २

भक्तिप्रभाव भवदद्भुतभावबन्ध
सन्धुक्षित प्रणयसार रसौघपूर्णः ।
वेदार्थ रत्ननिधि रच्युत दिव्यधामा
जीयात्पराङ्कुशपयोधिरसीमभूमा ।। ३

यन्मङ्गळाय महते जगतामुशन्ति
त्रैविष्टपान्यपि पदानि यदाश्रयाणि ।
वन्दामहे सरसिजेक्षणमद्वितीयं
वेदान्तवेद्यमनिदम्प्रथमं महस्तत् ।। ४

पीताम्बरं वरदशीतलदृष्टिपात
माजानुलम्बिभुज मायतकर्णपाशम् ।
तन्मेघमेचक मुदग्रविशालवक्षो
लक्ष्मीधरं किमपि वस्तु ममाविरस्तु ।। ५

यत्तत्वमक्षरमदृश्यमगोत्रवर्णं
अग्राह्य मव्यय मनीदृश मद्वितीयम् ।
ईशान मस्य जगतो यदणोरणीयः
तद्वैष्णवं पद मुदात्त मुदाहरामः ।। ६

आम्नायमूर्धनि च मूर्धनि चोर्ध्व पुंसां
यद्धाम वैष्णव मभीक्ष्णतरं चकास्ति ।
तन्मादृशामपि च गोचरमेति वाचो
मन्ये तदीयमिदमाश्रितवत्सलत्वम् ।। ७

जानन्नपीह किल मामनपत्रपिष्णुः
विष्णोः पदप्रणयिनीं गिरमाद्रियेऽहम् ।
न श्वावलीढमपि तीर्थमतीर्थमाहुः
नोदन्यतापि च शुना किल लज्जितव्यम् ।। ८

देवस्य दैत्यमथनस्य गुणेष्वियत्ता
सङ्ख्या च वाङ्मनसगोचरमत्यभूताम्।
अप्येवमण्वपि च तत्र ममार्तिशान्त्यै
कीटस्य तृष्यत उदन्वति विप्रुषोऽलम्॥ ९

प्रेमार्द्रविह्वलगिरः पुरुषाः पुराणाः
त्वां तुष्टुवुर्मधुरिपो मधुरैर्वचोभिः।
वाचो विडंबितमिदं मम नीचवाचः
क्षान्तिस्तु ते सविषया मम दुर्वचोभिः॥ १०

आज्ञा तवात्रभवती विदिता त्रयी सा
तां हि प्रमाणमभिजग्मुरतीन्द्रियेऽर्थे।
आभासभूयमभियान्त्यपराणि दोषैः
एषा तु दोषरहिता महिता पुराणी॥ ११

अन्तर्हितो निधिरसि त्वमशेषपुंसां
लभ्योऽसि पुण्यपुरुषैरितरैर्दुरापः।
तत्र त्रयीं सुकृतिनः कृतिनोऽधिजग्मुः
बाह्येषु बाह्यचरितैरितरैर्निपेते॥ १२

चित्रं विधेर्विलसितं त्विदमाविरस्ति
दुष्टात्मनामयमहो किल दुर्विपाकः।
यत्केचिदत्रभवतीं श्रुतिमाश्रयन्तोऽ-
प्यर्थे कुदृष्टिविनिविष्टधियो विनष्टाः॥ १३

बाह्याः कुदृष्टय इति द्वितयेऽप्यपारं
घोरं तमस्समुपयान्ति नहीक्षसे तान्।
जग्धस्य काननमृगैर्मृगतृष्णिकेप्सोः
कासारसत्वनिहतस्य च को विशेषः॥ १४

न्यायस्मृति प्रभृतिभिर्भवता निसृष्टैः
वेदोपबृंहणविधावुचितैरुपायैः ।
श्रुत्यर्थ मर्थ मिव भानुकरै र्विभेजुः
त्वद्भक्तिभावित विकल्मष शेमुषीकाः ॥ १५

ये तु त्वदङ्घ्रिसरसीरुह भक्तिहीनाः
तेषा ममीभि रपि नैव यथार्थबोधः ।
पित्तघ्नमञ्जनमनाप्नुषि जातु नेत्रे
नैव प्रभाभिरपि शङ्खसितत्वबुद्धिः ॥ १६

वेदार्थधी स्त्वयि तु भक्तित एव लभ्या
यावान् हि यश्च भगवन्नसि तत्त्वतस्त्वम् ।
ज्ञातुं तथा भुवनभावन वेदवेद्यं
द्रष्टुं प्रवेष्टुमपि भक्तित एव शक्यः ॥ १७

तत्वार्थ तत्पर परश्शत वेदवाक्यैः
सामर्थ्यतः स्मृतिभिरप्यथ तादृशीभिः ।
त्वामेव तत्त्वपर सात्विक सत्पुराणैः
देवज्ञधीभिरपि निश्चिनुमः परेशम् ॥ १८

अन्यत्र तु क्वचन केचिदिहेशशब्दात्
लोकप्रसिद्धिमुपगम्य तमीश माहुः ।
तैश्च प्रसिद्धविभवस्य समूलतायै
ग्राह्या त्रयी त्वयि तु साऽच्युत सम्मुखीना ॥ १९

यः खल्वणोरणुतरो महतो महीयान्
आत्मा जनस्य जनको जगतश्च योऽभूत् ।
वेदात्मक प्रणवकारणवर्णवाच्यं
तं त्वां वयन्तु परमेश्वरमामनामः ॥ २०

आत्मेश्वरोऽसि न परोऽस्ति तवेश्वरोऽन्यो
विश्वस्य चासि पतिरस्य परायणं च।
नारायणाच्युत परस्त्वमिहैक एव
ब्रह्मादयोऽपि भवदीक्षण लब्धसत्ताः ।। २१

नित्यस्समाभ्यधिकवर्जित ऊर्जितश्रीः
नित्येऽक्षरे दिवि वसन्पुरुषः पुराणः।
सत्वप्रवर्तनकरो जगतोऽस्य मूलं
नान्यस्त्वदस्ति धरणीधर वेदवेद्यः ।। २२

यं भूतभव्यभवदीशमनीशमाहुः
अन्तस्समुद्रनिलयं यमनन्तरूपम्।
यस्य त्रिलोकजननी महिषी च लक्ष्मीः
साक्षात्स एव पुरुषोऽसि सहस्रमूर्धा ।। २३

सर्वं श्रुतिष्वनुगतं स्थिरमप्रकम्प्यं
नारायणाह्वयधरं त्वमिवानवद्यम्।
सूक्तं तु पौरुषमशेषजगत्पवित्रं
त्वामुत्तमं पुरुषमीशमुदाजहार ।। २४

आनन्द मैश्वर मवाङ्मनसाऽवगाह्यं
आम्नासिषुश्शतगुणोत्तरित क्रमेण।
सोऽयं तवैव नृषु हि त्वमिहान्तरात्मा
त्वं पुण्डरीकनयनः पुरुषश्च पौष्णः ।। २५

यन्मूलकारणमबुध्यत सृष्टिवाक्यैः
ब्रह्मेति वा सदिति वाऽऽत्मगिराऽथवा तत्।
नारायणस्त्विवति महोपनिषद्ब्रवीति
सौबालिकीप्रभृतयो प्यनुजग्मु रेनाम् ।। २६

ज्योतिः परं परमतत्व मथो परात्मा
ब्रह्मेति च श्रुतिषु यत्परवस्त्वधीतम्।
नारायणस्तदिति तद्विशिनष्टि काचि
द्विष्णोः पदं परम मित्यपरा गृणाति ।। २७

सन्तीदृशाश्श्रुतिशिरस्सु परस्सहस्रा
वाचस्तव प्रथयितुं परमेशितृत्वम्।
किंचेह न व्यजगणः कृमिधातृभेदं
क्रामन् जगन्ति निगिरन् पुन रुद्गिरंश्च ।। २८

रूपश्रिया परमया परमेण धाम्ना
चित्रैश्च कैश्चिदुचितैः भवतश्चरित्रैः ।
चिह्नै रनिह्नवपरै रपरैश्च कैश्चित्
निश्चिन्वते त्वयि विपश्चित ईशितृत्वम्।। २९

यस्याः कटाक्षण मनुक्षण मीश्वराणां
ऐश्वर्यहेतु रिति सार्वजनीनसिद्धम्।
तं श्रीरिति त्वदुपसंश्रयणा न्निराहु-
स्त्वां च श्रियश्श्रिय मुदाहु रुदारवाचः ।। ३०

माया त्वया गुणमयी किल या निसृष्टा
सा ते विभो किमिव नर्म न निर्मिमीते ।
कौतस्कुताः स्थिरकुतर्कवशेन केचित्
सत्यां श्रुतौ च बधिरास्त्वयि तन्महिम्ना ।। ३१

यत्स्थावर क्रिमिपतङ्ग मतङ्गजादि-
ष्वन्येषु जन्तुषु सदेव विजायमानः ।
त्वन्नित्यनिर्मल निरञ्जन निर्विकार
कल्याणसद्गुणनिधे स इतीरितस्तैः ।। ३२

त्वद्दृष्टिजुष्टमिदमाविरभूदशेषं
नोचेत्कटाक्षयसि नैव भवेत्प्रवृत्तिः ।
स्थातुं च वाञ्छति जगत्तव दृष्टिपातं
तेन श्रुतौ जगदिषे हि जगत्त्वमेव ॥ ३३

एवं भगो इह भवत्परतन्त्र एव
शब्दोऽपि रूपवदमुष्य चराचरस्य ।
ऐश्वर्य मीदृश मिदं श्रुतिषूदितं ते
पापीयसामयमहो त्वयि मोहहेतुः ॥ ३४

ये त्वत्कटाक्षलवलक्ष्यमिव क्षणं तै-
रैश्वर्य मीदृश मलभ्य मलम्भि पुम्भिः ।
यत्केऽपि संजगदिरे परमेशितृत्वं
तेषामपि श्रुतिषु तन्महिमप्रसङ्गात् ॥ ३५

नित्येषु वस्तुषु भवन्निरपेक्षमेव
तत्तत्स्वरूपमिति केचिदिह भ्रमन्तः ।
ऐश्वर्य मत्र तव सावधिकं गिरन्ते
ब्रूते त्रयी तु निरुपाधिकमीशनं ते ॥ ३६

इच्छात एव तव विश्वपदार्थसत्ता
नित्यं प्रियास्तव तु केचन तेहि नित्याः ।
नित्यं त्वदेकपरतन्त्र निजस्वरूपा
भावत्क मङ्गळगुणा हि निदर्शनं नः ॥ ३७

विश्वस्य विश्वविधकारणमच्युतत्वं
कार्यं तदेत दखिलं चिदचित्स्वरूपम् ।
त्वं निर्विकार इति वेदशिरस्सु घोषो
निस्सीममेव तव दर्शयतीशितृत्वम् ॥ ३८

किं साधनः क निवसन्किमुपाददानः
कस्मै फलाय सृजतीश इदं समस्तम्।
इत्याद्यनिष्ठित कुतर्क मतर्कयन्तः
त्वद्वैभवं श्रुतिविदो विदु रप्रतर्क्यम्॥ ३९

यत्संवृतं दशगुणोत्तर सप्ततत्त्वै-
रण्डं चतुर्दश जगद्भवधातृधाम।
अण्डानि तत्सुसदृशानि परश्शतानि
क्रीडाविधेस्तव परिच्छदतामगच्छन्॥ ४०

इच्छाविहारविधये विहिता न्यमूनि
स्यात्तद्विभूतिलवलेश कलायुतांशः।
या वै न जातु परिणामपदास्पदं सा
कालात्मिका तव परा महती विभूतिः॥ ४१

यद्वैष्णवं हि परमं पद मामनन्ति
खं वा यदेव परमं तमसः परस्तात्।
तेजोमयं परमसत्त्वमयं ध्रुवं य-
दानन्दकन्द मतिसुन्दर मद्भुतं यत्॥ ४२

यद्ब्रह्मरुद्रपुरुहूतमुखै र्दुरापं
नित्यं निवृत्तिनिरतै स्सनकादिभिर्वा।
सायुज्य मुज्ज्वल मुशन्ति यदाऽऽपरोक्ष्यं
यस्मात्परं न पद मञ्चित मस्ति किञ्चित्॥ ४३

रूपेण सद्गुणगणैः परया समृद्ध्या
भावै रुदारमधुरै रपि वा महिम्ना।
तादृक्तदीदृगिद मित्युपवर्णयन्त्यो
वाचो यदीयविभवस्य तिरस्क्रियायै॥ ४४

यद्वृद्ध्यपक्षयविनाशमुखै र्विकारैः
एतै रसंस्तृतमनस्तमितास्तिशब्दम् ।
यद्गौरवात् श्रुतिषु फल्गुफलं क्रियाणा-
मादिष्टमन्यदसुखोत्तरमध्रुवं च ।। ४५

निष्कल्मषैर्निहतजन्मजराविकारै-
र्भूयिष्ठभक्तिविभवै रभवै रवाप्यम् ।
अन्यै रधन्यपुरुषै र्मनसाऽप्यनाप्यं
वैकुण्ठनाम तव धाम तदामनन्ति ।। ४६

नित्या तवान्यनिरपेक्षमहामहिम्नोऽ-
प्येतादृशी निरवधि र्नियता विभूतिः ।
ज्ञानादयो गुणगणा स्समतीतसीमा
लक्ष्मीः प्रिया परिजनाः पतगेन्द्रमुख्याः ।। ४७

एकस्य येषु हि गुणस्य लवायुतांशः
स्यात्कस्यचित्स खलु वाङ्मनसातिगश्रीः ।
ते तादृशोऽत्यवधय स्समतीतसङ्ख्याः
त्वत्सद्गुणा स्त्वमसि तन्निरपेक्षलक्ष्मीः ।। ४८

सर्वस्य चैव गुणतो हि विलक्षणत्व-
मैश्वर्यतश्च किल कश्चि दुदञ्चितस्स्यात् ।
तत्प्रत्युत त्वयि विभो विभवो गुणाश्च
सम्बन्धतस्तव भजन्ति हि मङ्गळत्वम् ।। ४९

दूरे गुणास्तव तु सत्वरजस्तमांसि
तेन त्रयी प्रथयति त्वयि निर्गुणत्वम् ।
नित्यं हरे निखिल सद्गुणसागरं हि
त्वा मामनन्ति परमीश्वरमीश्वराणाम् ।। ५०

ज्ञानात्मनस्तव तदेव गुणं गृणन्ति
तेजोमयस्य हि मणेर्गुण एव तेजः ।
तेनैव विश्व मपरोक्ष मुदीक्षसे त्वं
रक्षा त्वदीक्षणत एव यतोऽखिलस्य ।। ५१

त्रय्युद्यता तव युवत्वमुखै र्गणौघै-
रानन्दमेधित मियानिति संनियन्तुम् ।
ते ये शतन्त्विति परम्परया प्रवृत्ता
नैवैष वाङ्मनसगोचर इत्युदाह ।। ५२

एवं तया चतुरया तव यौवनाद्या-
स्सर्वे गुणास्सह समस्तविभूतिभिश्च ।
प्रव्याहृताः स्युरवधीनवधीरयन्तो
वाचामगोचरमहामहिमान एव ।। ५३

संवर्तवर्ति निखिलं निरभिज्ञ मज्ञं
चित्रे च कर्मणि यथार्ह महो नियच्छन् ।
सद्यः कृमिद्रुहिणभेदमभेदमेत-
दाविश्चकर्थ सकृदीक्षण दीक्षणेन ।। ५४

अस्तं यदुद्यदुपचाय्यपचायि चैव-
मीशं दरिद्र मथ जङ्गम मप्यलिङ्गम् ।
विश्वं विचित्र मविलक्षणवीक्षणेन
विक्षोभयस्यनवधिर्बत शक्ति रैशी ।। ५५

रूपप्रकार परिणामकृतव्यवस्थं
विश्वं विपर्यसितु मन्य दसच्च कर्तुम् ।
क्षाम्यन् स्वभावनियमं किमुदीक्षसे त्वं
स्वातन्त्र्य मैश्वरमपर्यनुयोज्यमाहुः ।। ५६

संवर्तसंभृतकरस्य सहस्ररश्मे-
रुस्रं तमिस्रयदजस्रविहारहारि।
नित्यानुकूलमनुकूलनृणां परेषा-
मुद्वेजनं च तव तेज उदाहरन्ति ॥ ५७

नैव ह्यवाप्य मनवाप्त मिहास्ति यस्य
सत्ताऽपि तस्य तव वीक्षणतः प्रजानाम्।
सम्पत्तु किं पुनरितो न वदान्यमन्यं
मन्ये त्वमेव खलु मन्दिरमिन्दिरायाः ॥ ५८

पापै रनादिभवसम्भववासनोत्थै-
र्दुःखेषु यः खलु मिमङ्क्षति हन्त जन्तुः।
तं केवलं नु कृपयैव समुद्धरिष्यन्
तद्दुष्कृतस्य ननु निष्कृति मात्थ शास्त्रैः ॥ ५९

शास्त्रै रनादिनिधनैः स्मृतिभि स्त्वदीय-
दिव्यावतारचरितै श्शुभया च दृष्ट्या।
निःश्रेयसं यदुपकल्पयसि प्रजानां
सा त्वत्कृपाजलधितल्लजवल्गितश्रीः ॥ ६०

है हन्त जन्तुषु निरन्तरसन्ततात्मा
पाप्मा हि नाम वद कोऽय मचिन्त्यशक्तिः।
यस्त्वत्कृपाजलधि मप्यतिवेलखेल-
मुल्लङ्घयत्यकृतभासुरभागधेयान्॥ ६१

य द्ब्रह्मकल्पनियतानुभवेऽप्यनाश्यं
तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे।
एवं सदा सकलजन्मसु सापराधं
क्षाम्यस्यहो तदभिसन्धिविराममात्रात्॥ ६२

क्षान्ति स्तवेय मियती महती कथन्नु
मुह्येदहो त्वयि कृताञ्जलिपञ्जरेषु।
इत्थं स्वतो निखिलजन्तुषु निर्विशेषं
वात्सल्य मुत्सुकजनेषु कथं गुणस्ते ।। ६३

विश्वं धियैव विरचय्य निचाय्य भूय
स्सञ्जहुष स्सति समाश्रितवत्सलत्वे।
आजग्मुषस्तव गजोत्तमबृंहितेन
पादं परामममृशुषोऽपि च का मनीषा ।। ६४

यः कश्चि देव यदि किञ्चन हन्त जन्तु-
र्भव्यो भजेत भगवन्त मनन्यचेताः।
तं सोऽय मीदृश इयानिति वाप्यजानन्
हे वैनतेय स ममाप्युररीकरोषि ।। ६५

त्वत्साम्यमेव भजतामभिवाञ्छसि त्वं
त्वत्सात्कृतै र्विभवरूपगुणै स्त्वदीयैः।
मुक्तिं ततोऽपि परमं तव साम्य माहु-
स्त्वद्दास्यमेव विदुषां परमं मतं तत् ।। ६६

तद्वै तथाऽस्तु कतमोऽयमहो स्वभावो
यावान्यथाविधगुणो भजते भवन्तम्।
तावांस्तथाविधगुणस्तदधीनवृत्तिः
संश्लिष्यसे त्वमिह तेन समानधर्मा ।। ६७

श्रीवैकुण्ठनाथमभिष्टौति

नीलाञ्जनाद्रिनिभ मुन्नस मायताक्ष
माजानुजैत्रभुज मायतकर्णपाशम्।

श्रीवत्सलक्षण मुदारगभीरनाभिं
पश्येम देव शरदश्शत मीदृशं त्वाम् ।। ६८

अम्भोरुहाक्षमरविन्दनिभाङ्घ्रियुग्म-
माताम्रतामरसरम्यकराग्रकान्तिम् ।
भृङ्गाळकं भ्रमरविभ्रमकायकान्तिं
पीताम्बरं वपुरदस्तु वयं स्तुवाम ।। ६९

भ्रूविभ्रमेण मृदुशीतविलोकितेन
मन्दस्मितेन मधुराक्षरया च वाचा ।
प्रेमप्रकर्ष पिशुनेन विकासिना च
सम्भावयिष्यसि कदा मुखपङ्कजेन ।। ७०

वज्राङ्कुश ध्वजसरोरुहशङ्खचक्र
मत्स्यीसुधाकलशकल्पक कल्पिताङ्कम् ।
त्वत्पादपद्मयुगळं विगळत्प्रभाभि
र्भूयोऽभिषेक्ष्यति कदा नु शिरो मदीयम् ।। ७१

त्रैविक्रम क्रमकृताक्रमणत्रिलोकं
उत्तंस मुत्तम मनुत्तमभक्तिभाजाम् ।
नित्यं धनं मम कदा हि मदुत्तमाङ्ग-
मङ्गीकरिष्यति चिरं तव पादपद्मम् ।। ७२

उन्निद्रपत्र शतपत्र सगोत्रमन्त-
र्लेखारविन्द मभिनन्दन मिन्द्रियाणाम् ।
मन्मूर्ध्नि हन्त करपल्लव तल्लजं ते
कुर्वन् कदा कृतमनोरथयिष्यसे माम् ।। ७३

आङ्गी निसर्गनियता त्वयि हन्त कान्ति-
 र्नित्यं तवालमियमेव तथाऽपि चान्या।
वैभूषणी भवति कान्ति रलन्तरां सा
 है पुष्कलैव निखिलाऽपि भवद्विभूतिः ॥ ७४

श्रीवत्स कौस्तुभ किरीट ललाटिकाभिः
 केयूरहार कटकोत्तमकर्णिकाभिः ।
उद्दामदाम मणिनूपुर नीविबन्धै-
 र्भान्तं भवन्त मनिमेष मुदीक्षिषीय ॥ ७५

ऐन्दीवरी क्वचिदपि क्वचिदारविन्दी
 चन्द्रातपी क्वचन च क्वचनाथ हैमी ।
कान्ति स्तवोढ परभाग परस्परश्रीः
 पार्येत पारणयितुं किमु चक्षुषोमें ॥ ७६

त्वां सेवितं जलजचक्र गदासिशार्ङ्गै-
 स्तार्क्ष्येण सैन्यपतिनाऽनुचरै स्तथाऽन्यैः ।
देव्या श्रिया सह वसन्त मनन्तभोगे
 भुञ्जीय साञ्जलि रसङ्कुचिताक्षिपक्ष्मा ॥ ७७

कैङ्कर्यनित्यनिरतै र्भवदेकभोगै-
 र्नित्यै रनुक्षणनवीन रसार्द्रभावैः ।
नित्याभिवाञ्छित परस्परनीचभावै-
 र्मद्दैवतैः परिजन स्तव सङ्गमीय ॥ ७८

यत्किञ्चि दुज्ज्वल मिदं यदुपाख्ययाऽहुः
 सौन्दर्य मृद्धिरिति यन्महिमांशलेशैः ।
नाम्नैव यां श्रिय मुशन्ति यदीयधाम
 त्वा मामनन्ति यतमा यतमानसिद्धिः ॥ ७९

या च त्वयाप्युदधिमन्थन यत्नलभ्या
यान्तर्हितेति जगदुन्मथनोद्यतोऽभूः ।
या च प्रतिक्षणमपूर्वरसानुबन्धै-
र्भावै र्भवन्तमभिनन्दयते सदैव ॥ ८०

रूपश्रिया गुणगणैर्विभवेन धाम्ना
भावैरुदारमधुरै श्चतुरै श्चरित्रैः ।
नित्यं तवैव सदृशीं श्रियमीश्वरीं त्वां
त्वां चांचितः परिचरेयमुदीर्णभावः ॥ ८१

या बिभ्रती स्थिरचरात्मक मेव विश्वं
विश्वम्भरा परमया क्षमया क्षमा च ।
तां मातरं च पितरं च भवन्तमस्य
व्युच्छन्तु रात्रय इमा वरिवस्यतो मे ॥ ८२

भावै रुदारमधुरै र्विविधै र्विलासैः
भ्रूविभ्रमस्मितकटाक्ष निरीक्षणैश्च ।
या त्वन्मयी त्वमपि यन्मय एव सा मां
नीळा नितान्त मुररीकुरुता मुदारा ॥ ८३

भावै रनुक्षण मपूर्वरसानुविद्धै-
रत्यद्भुतै रभिनवै रभिनन्द्य देवीः ।
भृत्यान् यथोचित परिच्छदिनो यथार्हं
सम्भावयन्तमभितो भगवन् भवेयम् ॥ ८४

हाहन्त हन्त हतकोऽस्मि खलोऽस्मि धिङ्मां
मुह्यन्नहो अहमिदं किमुवाच वाचा ।
त्वामङ्ग मङ्गळगुणास्पदमस्तहेय
मा स्मर्तुमेव कथ मर्हति मादृगंहः ॥ ८५

अंहः प्रसह्य विनिगृह्य विशोध्य बुद्धिं
व्यापू(धू)य विश्व मशिवं जनुषाऽनुबद्धम्।
आदाय सद्गुणगणानपि नाहमर्ह-
स्त्वत्पादयो र्यदह मत्र चिरं निमग्नः ॥ ८६

जानेऽथवा किमहमङ्ग यदेव सङ्गा-
दङ्गीकरोषि नहि मङ्गळमन्यदस्मात्।
तेन त्वमेन मुररीकुरुषे जनं चे
न्नैवामुतो भवति युक्ततरो हि कश्चित्॥ ८७

यन्नाभवाम भवदीयकटाक्षलक्षं
संसार गर्तपरिवर्तमतोऽगमाम।
आगांसि ये खलु सहस्रमजस्रमेव
जन्मस्वतन्महि कथं त इमेऽनुकम्प्याः ॥ ८८

सत्कर्म नैव किल किञ्चन सञ्चिनोमि
विद्याप्यवद्यरहिता न तु विद्यते मे।
किञ्च त्वदञ्चित पदाम्बुजभक्तिहीनः
पात्रं भवामि भगवन् भवतो दयायाः ॥ ८९

किं भूयसा प्रलपितेन यदेव किञ्चि-
त्पापाह्वमल्पमुरु वा तदशेष मेषः।
जानन्न वा शतसहस्रपरार्धकृत्वो
योऽकार्ष मेनमगतिं भगवन् क्षमस्व॥ ९०

देव त्वदीय चरण प्रणयप्रवीण
रामानुजार्य विषयीकृत मप्यहो माम्।
भूयः प्रधर्षयति वैषयिको विमोहो
मत्कर्मणः कतरदत्र समानसारम्॥ ९१

गर्भेषु निर्भर निपीडन खिन्नदेहः
क्षोदीयसोऽतिमहतोऽप्यखिलस्य जन्तोः ।
जन्मान्तराण्यनुविचिन्त्य परस्सहस्रा
ण्यत्राहमप्रतिविधिर्निहतश्चरामि ।। ९२

भूयश्च जन्मसमयेषु सुदुर्वचानि
दुःखानि दुःखमतिरिच्य किमप्यजानन् ।
मूढोऽनुभूय पुनरेव तु बालभावं
दुःखोत्तरं निजचरित्रममुत्र सेवे ।। ९३

भूयांसि भूय उपयन्विविधानि दुःखा
न्यन्यच्च दुःख मनुभूय सुखभ्रमेण ।
दुःखानुबन्ध मपि दुःखविमिश्र मल्पं
क्षुद्रं जुगुप्सितसुखं सुख मित्युपासे ।। ९४

लोलद्भिरिन्द्रियहयै रपथेषु नीतो
दुष्प्रापदुर्भगमनोरथ मथ्यमानः ।
विद्याधनाभिजनजन्ममदेन काम
क्रोधादिभिश्च हतधीर्न शर्म प्रयामि ।। ९५

लभ्येषु दुर्लभतरेष्वपि वाञ्छितेषु
जाते सहस्रगुणतः प्रतिलम्भनेऽपि ।
विघ्नैर्हतेऽप्यपि च तेषु समूलघातं
वर्धिष्णुरेव न तु शाम्यति हन्त तृष्णा ।। ९६

त्वत्कीर्तनस्तुति नमस्कृतिवेदनेषु
श्रद्धा न भक्तिरपि शक्तिरथो न चेच्छा ।
नैवानुतापमतिरेष्वकृतेषु किन्नु
भूया नहो परिकरः प्रतिकूलपक्षे ।। ९७

एतेन वै सुविदितं बत मामकीन
दौरात्म्य मप्रतिविधेय मपारमीश।
सम्मूर्छतोऽप्यपदमस्मि यतस्त्वदीय
निस्सीमभूम करुणामृतवीचिवायोः ॥ ९८

ऐश्वर्य वीर्य करुणा गरिमक्षमाद्याः
स्वामित्वकारण सुहृत्त्व मथो विशेषात्।
सर्वे गुणास्सविषयास्तव मामपार-
घोराघपूर्ण मगतिं निहतं समेत्य॥ ९९

त्वत्पाद संश्रयणहेतुषु साधिकारा-
नुद्युञ्जतश्चरितकृत्स्नविधींश्च तांस्तान्।
त्वं रक्षसीति महिमा तव नालमेषा
मां चेदनीदृशमनन्यगतिं न रक्षेः॥ १००

या कर्मणामधिकृतिर्य इहोद्यमस्ते
एष्वप्य नुष्ठिति रशेषमिदं हि पुंसाम्।
त्वा मन्तरेण न कथञ्चन शक्यमाप्तुं
एवं तेषु मयि च चास्ति न ते विशेषः॥ १०१

निर्बन्ध एष यदि ते यदशेषवैध
संसेविनो वरद! रक्षसि नेतरां स्त्वम्।
तर्हि त्वमेव मयि शक्त्यधिकारवाञ्छाः
प्रत्यूहशान्ति मितरच्च विधेहि विश्वम्॥ १०२

व्यक्तीकुर्व न्निगमशिरसामर्थ मन्तर्निगूढं
श्रीवैकुण्ठस्तुतिमकृत यश्श्रेयसे सज्जनानाम्।
कूराधीशं गुरुतरदया दुग्धसिन्धुं तमीडे
श्रीवत्साङ्कं श्रुतिमतगुरुच्छात्रशीलैकधाम॥ १०४

वेदान्तदेशिककृतम्

## वैराग्यपञ्चकम्

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ।।

क्षोणी कोण शतांश पालन कला दुर्वार गर्वानल-
क्षुभ्यत्क्षुद्र नरेन्द्र चाटु रचना धन्यान् न मन्यामहे।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
धाना मुष्टि मुचे कुचेल मुनये दत्ते स्म वित्तेशताम् ।।

सिलं किमनलं भवेदनलमौदरं बाधितुं
पयः प्रसृतिपूरकं किमु न धारकं सारसम्।
अयत्न मलमल्लकं पथि पटच्चरं कच्चरं
भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ।। २

ज्वलतु जलधिक्रोड क्रीडत्कृपीड भव प्रभा-
प्रतिभट पटु ज्वाला मालाकुलो जठरानलः।
तृणमपि वयं सायं संफुल्ल मल्लि मतल्लिका-
परिमलमुचा वाचा याचामहे न महीश्वरान्।। ३

दुरीश्वरद्वारबहिर्वितर्दिका दुरासिकायै रचितोऽयमञ्जलिः।
यदञ्जनाभं निरपायमस्ति मे धनञ्जयस्यन्दनभूषणं धनम्।। ४

शरीरपतनावधि प्रभुनिषेवणापादनात्
अबिन्धन धनञ्जय प्रशमदं धनं दन्धनम्।
धनञ्जय विवर्धनं धनमुदूढ गोवर्धनं
सुसाधनमबाधनं सुमनसां समाराधनम्।। ५

नास्ति पित्रार्जितं किञ्चिन्न मया किञ्चिदार्जितम्।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम्।। ६

श्रीरामानुजाचार्यकृतं

# शरणागतिगद्यम्

यो नित्यमच्युतपदाम्बुज युग्म रुक्म
व्यामोहतस्तदितराणि तृणाय मेने।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः
रामानुजस्य चरणौ शरणं प्रपद्ये।।
वन्दे वेदान्तकर्पूर चामीकर करण्डकम्।
रामानुजार्य मार्याणां चूडामणि महर्निशम्।।

भगवन्नारायणाभितानुरूप स्वरूप रूप गुणविभवैश्वर्य शीलाद्यनवधिकातिशयासंङ्खयेय कल्याण गुणगणां पद्मवनालयां भगवतीं श्रियं देवीं नित्यानपयिनीं निरवद्यां देवदेव दिव्यमहिषीं अखिल जगन्मातरमस्मन्मातरं अशरण्य शरण्यामनन्यशरणश्शरणमहं प्रपद्ये।।

पारमार्थिकभगवच्चरणारविन्द युगळैकान्तिकात्यन्तिक परभक्ति परज्ञान परम भक्तिकृत परिपूर्णानवरत नित्यविशदतमानन्यप्रयोजनानवधिकातिशयातिप्रिय भगवदनुभवजनितानवधिकातिशय प्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूप नित्यकैङ्कर्यप्राप्त्यपेक्षया पारमर्थिकी भगवच्चरणारविन्द शरणागतिर्यथावस्थिताऽविरताऽस्तु मे।।

- अस्तु ते - तयैवं सर्वं संपत्स्यते।।

अखिलहेय-प्रत्यनीककल्याणैकतान स्वेतरसमस्तवस्तुविलक्षणानन्त ज्ञानानन्दैकस्वरूप, स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुत नित्यनिरवद्य निरतिशयौज्ज्वल्य सौन्दर्य सौगन्ध्य सौकुमार्य लावण्य यौवनाद्यनन्तगुणनिधि-

रूपैकरूपाचिन्त्यदिव्याद्भुत नित्यनिरवद्य निरतिशयौज्ज्वल्य सौन्दर्य सौगन्ध्य सौकुमार्य लावण्य यौवनाद्यनन्तगुणनिधि-दिव्यरूप, स्वाभाविकानवधिकातिशय ज्ञानबलैश्वर्य वीर्यशक्तितेजस्सौशील्य वात्सल्य मार्दवार्जव सौहार्द साम्य कारुण्यमाधुर्य गाम्भीर्यौदार्यचातुर्य स्थैर्यधैर्यशौर्यपराक्रम सत्यकाम सत्यसङ्कल्प कृतित्वकृतज्ञताद्यसंख्येय-कल्याणगुणगणौघमहार्णव,

स्वोचित विविध विचित्रानन्ताश्चर्य नित्यनिर वद्यनिरतिशयसुगन्ध निरतिशयसुखस्पर्श निरतिशयौज्ज्वल्य किरीटमकुटचूडावतंसमकरकुण्डलग्रैवेयक हारकेयूर कटक श्रीवत्सकौस्तुभमुक्तादामोदरबन्धन पीताम्बरकाञ्चीगुणनू पुराद्यपरिमितदिव्यभूषण

स्वानुरूपाचिन्त्यशक्तिशङ्खचक्रगदाशार्ङ्गाद्यसङ्ख्ये-यनित्यनिरवद्यनिरतिशयकल्याणदिव्यायुध स्वाभिमत नित्यनिरवद्यानुरूप स्वरूपरूपगुणविभवैश्वर्य शीलाद्य-नवधिकातिशयासङ्ख्येय कल्यागुणगण श्रीवल्लभ,

एवंभूत भूमिनीळानायक स्वच्छन्दानुवृत्तिस्वरूप-स्थिति प्रवृत्तिभेदाशेष शेषतैकरतिरूप नित्यनिरवद्य निरति-शयज्ञानक्रियैश्वर्याद्यनन्तकल्याणगुणगण शेषशेषाशनगरुड-प्रमुख नानाविधानन्तपरिजन परिचारिकापरिचरित चरण-युगळ परमयोगिवाङ्मनसापरिच्छेद्यस्वरूपस्वभाव,

स्वाभिमतविविधविचित्रानन्त भोग्यभोगोपकरण भोगस्थानसमृद्धानन्ताश्चर्यानन्तमहाविभवानन्तपरिमाण नित्यनिरवद्यनिरतिशयवैकुण्ठनाथ !

स्वसङ्कल्पानुविधायि स्वरूपस्थिति प्रवृत्तिस्वशेष-तैकस्वभाव प्रकृतिपुरुषकालात्मक विविधविचित्रानन्त-भोग्यभोक्तृवर्ग भोगोपकरण भोगस्थानरूप निखिलजगदु-दयविभवलयलील ! सत्यकाम ! सत्यसङ्कल्प ! परब्रह्मभूत ! पुरुषोत्तम ! महाविभूते ! श्रीमन्नारायण ! श्रीवैकुण्ठनाथ !

अपारकारुण्यसौशील्य वात्सल्यौदार्यैश्वर्य-सौन्दर्यमहोदधे ! अनालोचितविशेषाशेषलोकशरण्य ! प्रणतार्तिहर ! आश्रितवात्सल्यैकजलधे ! अनवरतविदि-तनिखिलभूतजातयाथात्म्य ! अशेषचराचरभूत निखिल-नियमननिरत ! अशेषचिदचिद्वस्तुशेषीभूत ! निखिलजग-दाधार ! अखिलजगत्स्वामिन् ! अस्मत्स्वामिन् ! सत्य-काम ! सत्यसङ्कल्प ! सकलेतरविलक्षण ! अर्थिकल्पक ! आपत्सख ! श्रीमन् नारायण ! अशरण्यशरण्य ! अनन्यशरणस्त्वत्पादारविन्दयुगळं शरण महं प्रपद्ये ।।——।। अत्र द्वयम् ।।

पितरं मातरं दारान् पुत्रा न्बन्धून् सखीन् गुरून् ।<br>
रत्नानि धन धान्यानि क्षेत्राणि च गृहाणि च ।।

सर्वधर्मांश्च सन्त्यज्य सर्वकामांश्च साक्षरान् ।<br>
लोकविक्रान्तचरणौ शरणं तेऽव्रजं विभो ।।

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव ।<br>
न त्वत्समोस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ।।

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।<br>
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ।।

मनोवाक्कायैरनादिकाल प्रवृत्तानन्ताकृत्यकरण कृत्याकरण भगवदपचार भागवतापचारासह्यापचाररूप

नानाविधानन्तापचारान् आरब्धकार्याननारब्धकार्यान् कृतान्क्रियमाणान्करिष्यमाणान् सर्वानशेषतः क्षमस्व - अनादिकालप्रवृत्तविपरीतज्ञानं आत्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं सर्वं क्षमस्व ।।

मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेः जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थितां दैवीं गुणमयीं मायां दासभूत-श्शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय ।।

तेषां ज्ञानी नित्ययुक्त एकभक्ति र्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः ।।

उदारा स्सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ।।

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ।।

इत्यादि श्लोकत्रयोदित ज्ञानिनं मां कुरुष्व ।।

पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ।
भक्त्या त्वनन्यया शक्यो मद्भक्तिं लभते पराम् ।।

इति स्थानत्रयोदित परभक्तियुक्तं मां कुरुष्व ।
परभक्ति परज्ञान परमभक्त्यैकस्वभावं मां कुरुष्व ।।

परभक्ति परज्ञान परमभक्तिकृत परिपूर्णानवरतनित्य विशदतमानन्यप्रयोजनानवधिकातिशयप्रियभगवदनुभवजनितानवधिकातिशय प्रीतिकारिताशेषावस्थोचिताशेष शेषतैकरतिरूप नित्यकिङ्करो भवानि ।।

विहीनोऽपि अनन्ततद्विरोधि विषयाक्रान्तोऽप्यनन्त मदीया-पचारयुक्तोऽ प्यनन्तासह्यापचारयुक्तोऽप्येतत्कार्यकारण भूतानादि विपरीताहङ्कारविमूढात्मस्वभावोऽप्येतदुभय कार्यकारणभूतानादि विपरीतवासनासम्बद्धोऽपि एतदनु-गुणप्रकृतिविशेष सम्बद्धोऽप्येतन्मूलाध्यात्मिकाधि-भौतिकाधिदैविक सुखदुःख तद्धेतु तदितरोपेक्षणीय विषयानुभवज्ञानसङ्कोचरूप मच्चरणारविन्दयुगळैकान्ति-कात्यन्तिक परभक्ति परज्ञान परमभक्ति विघ्नप्रतिहतोऽपि येन केनापि प्रकारेण द्वयवक्ता त्वं केवलं मदीययैव दयया निश्शेषविनष्ट सहेतुक मच्चरणारविन्दयुगळैकान्ति-कात्यन्तिक परभक्ति परज्ञान परमभक्तिविघ्नो मत्प्रसादलब्ध-मच्चरणारविन्द युगलैकान्तिकात्यन्तिपरभक्तिपरज्ञान परमभक्तिः मत्प्रसादादेव साक्षात्कृत यथावस्थित मत्स्वरूपरूपगुण विभूति लीलोपकरण विस्तारोऽपरोक्ष-सिद्धमन्नियाम्यतामदनुभवो मद्दास्यैकरसात्मस्वभावा-त्मस्वरूपो मदेकानुभवो मद्दास्यैकप्रियः परिपूर्णानवरत-नित्यविशदतमा नन्यप्रयोजनानवधिकातिशयप्रियमदनुभव जनितानवधिकातिशय-प्रीतिकारिताशेषावस्थोचिता-शेषशेषतैकरतिरूप नित्यकिङ्करो भव। एवम्भूतोऽसि।

-आध्यात्मिकाधिभौतिकाधिदैविक दुःखविघ्नगन्धर-हितस्त्वं द्वयमर्थानुसन्धानेन सह सदैव वक्ता यावच्छरीरपातं अत्रैव श्रीरङ्गे सुखमास्व॥

शरीरपातसमये तु केवलं मदीययैव दययाऽतिप्रबुद्धो मामेवावलोकयन् अप्रच्युतपूर्व संस्कारमनोरथः जीर्णमिव वस्त्रं सुखेनेमां प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य तदानीमेव

वस्त्रं सुखेनेमां प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य तदानीमेव मत्प्रसादलब्ध मच्चरणारविन्दयुगळैकान्तिकात्यन्तिक परभक्ति परज्ञान परमभक्ति कृत परिपूर्णानवरत नित्यविश-दतमानन्यप्रयोजनानवधिकातिशय प्रीतिकारिताशेषा-वस्थोचिताशेष शेषतैकरतिरूप नित्यकिङ्करो भविष्यसि ।। मा तेऽभूदत्र सशंयः ।

अनृतं नोक्तपूर्वं मे नच वक्ष्ये कदाचन ।।

रामो द्वि र्नाभिभाषते ।।

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ।।

सर्वधर्मान्परित्य ज्यमामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।।

इति हि मयैव ह्युक्तम् ।। अतस्त्वं तत्वतो मद्ज्ञान दर्शन प्राप्तिषु निस्संशयस्सुखमास्व ।।

अन्त्यकाले स्मृतिर्या तु तव कैङ्कर्यतकारिता ।
तामेनां भगवन्नद्य क्रियमाणां कुरुष्व मे ।।

*___*___*

## शालिग्रामस्तोत्रम्

अस्य श्रीशालिग्रमस्तोत्रमन्त्रस्य श्रीभगवानृषिः नारायणो देवता अनुष्टुप् छन्दः श्रीशालिग्रामस्तोत्रमन्त्रजपे विनियोगः ।

युधिष्ठिर उवाच

श्रीदेवदेव देवेश देवतार्चनमुत्तमम्।
तत्सर्वं श्रोतुमिच्छामि ब्रूहि मे पुरुषोत्तम ।। १

श्रीभगवानुवाच

गण्डक्यां चोत्तरे तीरे गिरिराजस्य दक्षिणे।
दशयोजनविस्तीर्णा महाक्षेत्रवसुन्धरा ।। २

शालिग्रामो भवेद्देवो देवी द्वारावती भवेत्।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ।। ३

शालिग्रामशिला यत्र यत्र द्वारावती शिला।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ।। ४

आजन्मकृतपापानां प्रायश्चित्तं य इच्छति।
शालिग्रामशिलावारि पापहारि नमोऽस्तु ते ।। ५

अकालमृत्युहरणं सर्वव्याधिविनाशनम्।
विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ।। ६

शङ्खमध्ये स्थितं तोयं भ्रामितं केशवोपरि।
अङ्गलग्नं मनुष्याणां ब्रह्महत्यादिकं दहेत् ।। ७

स्नानोदकं पिबेन्नित्यं चक्राङ्कितशिलोद्भवम्।
प्रक्षाल्य शुद्धं तत्तोयं ब्रह्महत्यां व्यपोहति ।। ८

अग्निष्टोमसहस्राणि वाजपेयशतानि च।
सम्यक् फलमवाप्नोति विष्णोर्नैवेद्यभक्षणात् ।। ९

नैवेद्ययुक्तां तुलसीं च मिश्रितां विशेषतः पादजलेन विष्णोः।
योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ।। १०

खण्डिता स्फुटिता भिन्ना वह्निदग्धा तथैव च।
शालिग्रामशिला यत्र तत्र दोषो न विद्यते ॥ ११

न मंत्रः पूजनं नैव न तीर्थं न च भावना।
न स्तुतिर्नोपचारश्च शालिग्रामशिलार्चने ॥ १२

ब्रह्महत्यादिकं पापं मनोवाक्कायसंभवम्।
शीघ्रं नश्यति तत्सर्वं शालिग्रामशिलार्चनात् ॥ १३

नानावर्णमयं चैव नानाभोगेन वेष्टितम्।
तथा वरप्रसादेन लक्ष्मीकान्तं वदाम्यहम् ॥ १४

नारायणोद्भवो देवश्चक्रमध्ये च कर्मणा।
तथा वरप्रसादेन लक्ष्मीकान्तं वदाम्यहम् ॥ १५

कृष्णे शिलातले यत्र सूक्ष्मं चक्रं च दृश्यते।
सौभाग्यं सन्ततिं धत्ते सर्वसौख्यं ददाति च ॥ १६

वासुदेवस्य चिह्नानि दृष्ट्वा पापैः प्रमुच्यते।
श्रीधरः सूकरे वामे हरिद्वर्णस्तु दृश्यते ॥ १७

वराहरूपिणं देवं कूर्माङ्गैरपि चिह्नितम्।
गोपदं तत्र दृश्येत वाराहं वामनं तथा ॥ १८

पीतवर्णं तु देवानां रक्तवर्णं भयानकम्।
नारसिंहोऽभवद्देवो मोक्षदं च प्रकीर्तितम् ॥ १९

शङ्खचक्रगदाकूर्माः शङ्खो यत्र प्रदृश्यते।
शङ्खवर्णस्य देवानां वामे देवस्य लक्षणम् ॥ २०

दामोदरं तथा स्थूलं मध्ये चक्रं प्रतिष्ठितम्।
पूर्णद्वारेण सङ्कीर्णा पीतरेखा च दृश्यते ॥ २१

छत्राकारे भवेद्राज्यं वर्तुले च महाश्रियः ।
कपटे च महादुःखं शूलाग्रे तु रणं ध्रुवम् ।। २२

ललाटे शेषभोगस्तु शिरोपरि सुकाञ्चनम् ।
चक्रकाञ्चनवर्णानां वामदेवस्य लक्षणम् ।। २३

वामपार्श्वे च वै चक्रे कृष्णवर्णस्तु पिङ्गलम् ।
लक्ष्मीनृसिंहदेवानां पृथग्वर्णस्तु दृश्यते ।। २४

लम्बोष्ठे च दरिद्रं स्यात्पिङ्गले हानिरेव च ।
लग्नचक्रे भवेद्व्याधिर्विदारे मरणं ध्रुवम् ।। २५

पादोदकं च निर्माल्यं मस्तके धारयेत्सदा ।
विष्णोर्दृष्टं भक्षितव्यं तुलसीदलमिश्रितम् ।। २६

कल्पकोटिसहस्राणि वैकुण्ठे वसते सदा ।
शालिग्रामशिलाबिन्दुर्हत्याकोटिविनाशनः ।। २७

तस्मात्सम्पूजयेद्ध्यात्वा पूजितं चापि सर्वदा ।
शालिग्रामशिलास्तोत्रं यः पठेच्च द्विजोत्तमः ।। २८

स गच्छेत्परमं स्थानं यत्र लोकेश्वरो हरिः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ।। २९

दशावतारा देवानां पृथग्वर्णस्तु दृश्यते ।
ईप्सितं लभते राज्यं विष्णुपूजामनुक्रमात् ।। ३०

कोट्यो हि ब्रह्महत्यानामगम्यागम्यकोटयः ।
ताः सर्वा नाशमायान्ति विष्णुनैवेद्यभक्षणात् ।। ३१

विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् ।
तस्मादष्टगुणं पापं भूमौ बिन्दुनिपातनात् ।। ३२

*—*—*

श्रीशङ्करभगवत्पादकृता

## षट्पदी

अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम्।
भूतदयां विस्तारय तारय संसारसागरतः ॥१

दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे।
श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥ २

सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥ ३

उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे।
दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४

मत्स्यादिभिरवतारैरवतारवताऽवता सदा वसुधाम्।
परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥ ५

दामोदर गुणमन्दिर सुन्दरवदनारविन्द गोविन्द।
भवजलधिमथनमन्दर परमं दरमपनय त्वं मे ॥ ६

नारायण करुणामय शरणं करवाणि तावकौ चरणौ।
इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ ७

## सङ्कष्टनाशनविष्णुस्तोत्रम्

नारद उवाच।

पुनर्दैत्यं समायान्तं दृष्ट्वा देवाः सवासवाः।
भयप्रकंपिताः सर्वे विष्णुं स्तोतुं प्रचक्रमुः ॥ १

देवा ऊचुः।

नमो मत्स्यकूर्मादिनानास्वरूपैः सदा भक्तकार्योद्यतायार्तिहन्त्रे।
विधात्रादिसर्गस्थितिध्वंसकर्त्रे गदाशङ्खपद्मारिहस्ताय तेऽस्तु ॥

रमावल्लभायासुराणां निहन्त्रे भुजङ्गारियानाय पीताम्बराय।
मखादिक्रियापाककर्त्रे विकर्त्रे शरण्याय तस्मै नताः स्मो नताः स्मः ।।

नमो दैत्यसंतापितामर्त्यदुःखाचलध्वंसदंभोलये विष्णवे ते।
भुजङ्गेशतल्पेशयायार्कचन्द्रद्विनेत्राय तस्मै नताः स्मो नताः स्मः ।। ४

नारद उवाच।

सङ्कष्टनाशनं नाम स्तोत्रमेतत्पठेन्नरः ।
स कदाचिन्न सङ्कष्टैः पीड्यते कृपया हरेः ।। ५ (श्रीपद्मपुराणे)

श्रीभगवद्यामुनमुनिभिरनुगृहीतम्

# स्तोत्ररत्नम्

## आलवन्दारस्तोत्रम्

नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये।
नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे।। १

तस्मै नमो मधुजिदङ्घ्रिसरोजतत्व
ज्ञानानुरागमहिमातिशयान्तसीम्ने।
नाथाय नाथमुनयेऽत्र परत्र चापि
नित्यं यदीय चरणौ शरणं मदीयम्।। २

भूयो नमोऽपरिमिताच्युतभक्तितत्व
ज्ञानामृताब्धिपरिवाहशुभैर्वचोभिः ।
लोकेऽवतीर्णपरमार्थसमग्रभक्ति
योगाय नाथमुनये यमिनां वराय।। ३

तत्वेन यश्चिदचिदीश्वरतत्स्वभाव-
भोगापवर्गतदुपायगतीरुदारः ।

सन्दर्शयन्निरमिमीत पुराणरत्नं
तस्मै नमो मुनिवराय पराशराय ॥ ४

माता पिता युवतयस्तनया विभूतिः
सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं
श्रीमत्तदङ्घ्रि युगळं प्रणमामि मूर्ध्ना ॥ ५

यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन्
अस्मन्मनोरथपथस्सकलस्समेति ।
स्तोष्यमि नःकुलधनं कुलदैवतं तत्
पादारविन्दमरविन्दविलोचनस्य ॥ ६

तत्वेन यस्य महिमार्णवशीकराणुः
शक्यो न मातुमपि शर्वपितामहाद्यैः ।
कर्तुं तदीयमहिमस्तुतिमुद्यताय
मह्यं नमोऽस्तु कवये निरपत्रपाय ॥ ७

यद्वा श्रमाबधि यथामति वाप्यशक्तः
स्तौम्येवमेव खलु तेऽपि सदा स्तुवन्तः ।
वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः
को मज्जतोरणुकुलाचलयोर्विशेषः ॥ ८

किञ्चैष शक्त्यतिशयेन न तेऽनुकम्प्यः
स्तोताऽपि तु स्तुतिकृतेन परिश्रमेण ।
तत्र श्रमस्तु सुलभो मम मन्दबुद्धेः
इत्युद्यमोऽयमुचितो मम चाब्जनेत्र ॥ ९

नावेक्षसे यदि ततो भुवनान्यमूनि
नालं प्रभो ! भवितुमेव कुतः प्रवृत्तिः ।
एवं निसर्गसुहृदि त्वयि सर्वजन्तोः
स्वामिन्न चित्रमिदमाश्रितवत्सलत्वम् ।। १०

स्वाभाविकानवधिकातिशयेशितृत्वं
नारायण ! त्वयि न मृष्यति वैदिकः कः ।
ब्रह्मा शिवश्शतमखः परमस्वराडि
दित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ।। ११

कःश्रीः श्रियः परमसत्वसमाश्रयः कः
कः पुण्डरीकनयनः पुरुषोत्तमः कः ।
कस्यायुतायुतशतैककलांशकांशे
विश्वं विचित्रचिदचित्प्रविभागवृत्तम् ।। १२

वेदापहारगुरुपातकदैत्यपीडा-
द्यापद्विमोचनमहिष्ठफलप्रदानैः ।
कोऽन्यः प्रजापशुपतिः परिपाति कस्य
पादोदकेन स शिवस्स्वशिरोधृतेन ।। १३

कस्योदरे हरविरिञ्चमुखः प्रपञ्चः
को रक्षतीममजनिष्ट च कस्य नाभेः ।
क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः
कः केन वैष परवानिति शक्यशङ्कः ।। १४

त्वां शीलरूपचरितैः परमप्रकृष्ट
सत्वेन सात्विकतया प्रबलैश्च शास्त्रैः ।

प्रख्यातदैवपरमार्थविदां मतैश्च
नैवासुरप्रकृतयः प्रभवन्ति बोद्धुम् ॥ १५

उल्लङ्घितत्रिविधसीमसमातिशायि-
संभावनं तव परिब्रढिमस्वभावम् ।
मायाबलेन भवताऽपि निगूह्यमानं
पश्यन्ति केचिदनिशं त्वदनन्यभावाः ॥ १६

यदण्डमण्डान्तरगोचरं च यद्दशोत्तराण्यावरणानि यानि च ।
गुणाः प्रधानं पुरुषः परं पदं परात्परं ब्रह्म च ते विभूतयः ॥ १७

वशी वदान्यो गुणवानृजुः शुचिर्मृदुर्दयालुर्मधुरः स्थिरस्समः ।
कृती कृतज्ञस्त्वमसि स्वभावतस्समस्तकल्याणगुणामृतोदधिः ॥

उपर्युपर्यब्जभुवोऽपि पूरुषान् प्रकल्प्य ते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया सदा स्थिता नोद्यमतोऽतिशेरते ॥

त्वदाश्रितानां जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः ।
भवन्ति लीलाविधयश्च वैदिकास्त्वदीयगम्भीरमनोनुसारिणः ॥

नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये ।
नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे ॥ २१

न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे ।
अकिञ्चनोऽनन्यगतिश्शरण्य ! त्वत्पादमूलं शरणं प्रपद्ये ॥ २२

न निन्दितं कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि ।
सोऽहं विपाकावसरे मुकुन्द ! क्रन्दामि संप्रत्यगतिस्तवाग्रे ॥ २३

निमज्जतोऽनन्तभवार्णवान्तश्चिराय मे कूलमिवासि लब्धः ।
त्वयाऽपि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयायाः ॥ २४

अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम् ।
किन्तु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनुरूपः ॥ २५

निरासकस्यापि न तावदुत्सहे महेश ! हातुं तव पादपङ्कजम् ।
रुषा निरस्तोऽपि शिशुस्स्तनन्धयो न जातु मातुश्चरणौ जिहासति ॥

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरकं हि वीक्षते ॥ २७

त्वदङ्घ्रिमुद्दिश्य कदाऽपि केनचिद्यथा तथा वाऽपि सकृत्कृतोऽञ्जलिः ।
तदेव मुष्णात्यशुभान्यशेषतः शुभानि पुष्णाति न जातु हीयते ॥

उदीर्णसंसारदवाशुशुक्षणिं क्षणेन निर्वाप्य परां च निर्वृतिम् ।
प्रयच्छति त्वच्चरणारुणाम्बुजद्वयानुरागामृतसिन्धुशीकरः ॥ २९

विलासविक्रान्तपरावरालयं नमस्यदार्तिक्षपणे कृतक्षणम् ।
धनं मदीयं तव पादपङ्कजं कदा नु साक्षात्करवाणि चक्षुषा ॥ ३०

कदा पुनश्शङ्खरथाङ्गकल्पकध्वजारविन्दाङ्कुशवज्रलाञ्छनम् ।
त्रिविक्रम ! त्वच्चरणाम्बुजद्वयं मदीयमूर्धानमलङ्करिष्यति ॥ ३१

विराजमानोज्ज्वलपीतवाससं स्मितातसीसूनसमामलच्छविम् ।
निमग्ननाभिं तनुमध्यमुन्नसद्विशालवक्षःस्थलशोभिलक्षणम् ॥

चकासतं ज्याकिणकर्कशैश्शुभैश्चतुर्भिराजानुविलम्बिभिर्भुजैः ।
प्रियावतंसोत्पलकर्णभूषणश्लथालकाबन्धविमर्दशंसिभिः ॥ ३३

उदग्रपीनांसविलम्बिकुण्डलालकावलीबन्धुरकम्बुकन्धरम् ।
मुखश्रिया न्यक्कृतपूर्णनिर्मलामृतांशुबिम्बाम्बुरुहोज्ज्वलश्रियम् ॥

प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्वलाधरम् ।
शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकम् ॥

स्फुरत्किरीटाङ्गदहारकण्ठिकामणीन्द्रकाञ्चीगुणनूपुरादिभिः ।
रथाङ्गशङ्खासिगदाधनुर्वरैः लसत्तुलस्या वनमालयोज्ज्वलम् ॥ ३६

चकर्थ यस्या भवनं भुजान्तरं तव प्रियं धाम यदीयजन्मभूः ।
जगत्समस्तं यदपाङ्गसंश्रयं यदर्थमम्भोधिरमन्थ्यबन्धि च ॥ ३७

स्ववैश्वरूप्येण सदाऽनुभूतयाऽप्यपूर्ववद्विस्मयमादधानया ।
गुणेन रूपेण विलासचेष्टितैस्सदा तवैवोचितया तव श्रिया ॥ ३८

तया सहासीनमनन्तभोगिनि प्रकृष्टविज्ञानबलैकधामनि ।
फणामणिव्रातमयूखमण्डलप्रकाशमानोदरदिव्यधामनि ॥ ३९

निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीर्यते जनैः ॥ ४०

दासस्सखा वाहनमासनं ध्वजो यस्ते वितानं व्यजनं त्रयीमयः ।
उपस्थितं तेन पुरो गरुत्मता त्वदंघ्रिसंस्पर्शसुखैककामिना ॥

त्वदीयभुक्तोज्झितशेषभोजिना त्वया निसृष्टात्मभरेण यद्यथा ।
प्रियेण सेनापतिना न्यवेदि तत्तथाऽनुजानन्तमुदारवीक्षणैः ॥ ४२

हताखिलक्लेशमलैस्स्वभावतस्सदानुकूल्यैकरसैस्तवोचितैः ।
गृहीततत्तत्परिचारसाधनैर्निषेव्यमाणं सचिवैर्यथोचितम् ॥ ४३

अपूर्वनानारसभावनिर्भरप्रबुद्धया मुग्धविदग्धलीलया।
क्षणाणुवत्क्षिप्तपरादिकालया प्रहर्षयन्तं महिषीं महाभुजम् ।। ४४

अचिन्त्यदिव्याद्भुतनित्ययौवनस्वभावलावण्यमयामृतोदधिम्।
श्रियः श्रियं भक्तजनैकजीवितं समर्थमापत्सखमर्थिकल्पकम् ।।

भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिश्शेषमनोरथान्तरः।
कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सनाथजीवितः ।।

धिगशुचिमविनीतं निर्दयं मामलज्जं
परमपुरुष ! योऽहं योगिवर्याग्रगण्यैः।
विधिशिवसनकाद्यैर्ध्यातुमत्यन्तदूरं
तव परिजनभावं कामये कामवृत्तः ।। ४७

अपराधसहस्रभाजनं पतितं भीम भवार्णवोदरे।
अगतिं शरणागतं हरे ! कृपया केवलमात्मसात्कुरु ।। ४८

अविवेकघनान्धदिङ्मुखे बहुधा सन्ततदुःखवर्षिणि।
भगवन्भवदुर्दिने पथः स्खलितं मामवलोकयाच्युत ।। ४९

न मृषा परमार्थमेव मे शृणु विज्ञापनमेकमग्रतः।
यदि मे न दयिष्यसे ततो दयनीयस्तव नाथ ! दुर्लभः ।। ५०

तदहं त्वदृते न नाथवान् मदृते त्वं दयनीयवान्न च।
विधिनिर्मितमेतदन्वयं भगवन्पालय मास्म जीहपः ।। ५१

वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविधः।
तदयं तव पादपद्मयोरहमद्यैव मया समर्पितः ।। ५२

मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव।
नियतस्वमिति प्रबुद्धधीरथवा किं नु समर्पयामि ते।। ५३

अवबोधितवानिमां यथा मयि नित्यां भवदीयतां स्वयम्।
कृपयैवमनन्यभोग्यतां भगवन्भक्तिमपि प्रयच्छ मे।। ५४

तव दास्यसुखैकसाङ्गिनां भवनेष्वस्त्वपि कीटजन्म मे।
इतरावसथेषु मास्म भूदपि मे जन्म चतुर्मुखात्मना।। ५५

सकृत्त्वदाकारविलोकनाशया तृणीकृतानुत्तमभुक्तिमुक्तिभिः।
महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः।।

न देहं न प्राणान्न च सुखमशेषाभिलषितं
न चात्मानं नान्यत्किमपि तव शेषित्वविभवात्।
बहिर्भूतं नाथ ! क्षणमपि सहे यातु शतधा
विनाशं तत्सत्यं मधुमथन ! विज्ञापनमिदम्।। ५७

दुरन्तस्यानादेरपरिहरणीयस्य महतो
विहीनाचारोऽहं नृपशुरशुभस्यास्पदमपि।
दयासिन्धो ! बन्धो ! निरवधिकवात्सल्यजलधे !
तव स्मारं स्मारं गुणगणमितीच्छामि गतभीः।। ५८

अनिच्छन्नप्येवं यदि पुनरितीच्छन्निव रज-
स्तमश्छन्नश्छद्मस्तुतिवचनभङ्गीमरचयम्।
तथाऽपीत्थंरूपं वचनमवलम्ब्यापि कृपया
त्वमेवैवंभूतं धरणिधर ! मे शिक्षय मनः।। ५९

पिता त्वं माता त्वं दयिततनयस्त्वं प्रियसुहृत्
त्वमेव त्वं मित्रं गुरुरसि गतिश्चासि जगताम्।

त्वदीयस्त्वद्भृत्यस्तव परिजनस्त्वद्गतिरहं
प्रपन्नश्चैवं सत्यहमपि तवैवास्मि हि भरः ॥ ६०

जनित्वाऽहं वंशे महति जगति ख्यातयशसां
शुचीनां युक्तानां गुणपुरुषतत्वस्थितिविदाम्।
निसर्गादेव त्वच्चरणकमलैकान्तमनसां
अधोऽधः पापात्मा शरणद ! निमज्जामि तमसि ॥ ६१

अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधेः
अपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥ ६२

रघुवर ! यदभूस्त्वं तादृशो वायसस्य
प्रणत इति दयालुर्यच्च चैद्यस्य कृष्ण ! ।
प्रतिभवमपराद्धुर्मुग्ध ! सायुज्यदोऽभूः
वद किमपदमागस्तस्य तेऽस्ति क्षमायाः ॥ ६३

ननु प्रपन्नस्सकृदेव नाथ ! तवाहमस्मीति च याचमानः ।
तवानुकम्प्यः स्मरतःप्रतिज्ञां मदेकवर्जं किमिदं व्रतं ते ॥ ६४

अकृत्रिमत्वच्चरणारविन्दप्रेमप्रकर्षावधिमात्मवन्तम् ।
पितामहं नाथमुनिं विलोक्य प्रसीद मद्वृत्तमचिन्तयित्वा ॥ ६५

यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः ।
वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥

## हंसगुह्यस्तोत्रम्

नमः परायावितथानुभूतये
गुणत्रयाभासनिमित्तबन्धवे।
अदृष्टधाम्ने गुणतत्त्वबुद्धिभिः
निवृत्तमानाय दधे स्वयंभुवे॥ १

न यस्य सख्यं पुरुषोऽवैति सख्युः
सखा वसन् संवसतः पुरेऽस्मिन्।
गुणो यथा गुणिनो व्यक्तदृष्टेः
तस्मै महेशाय नमस्करोमि॥ २

देहोऽसवोऽक्षा मनवो भूतमात्रा
नात्मानमन्यं च विदुः परं यत्।
सर्वं पुमान् वेद गुणांश्च तज्ज्ञो
न वेद सर्वज्ञमनन्तमीडे॥ ३

यदोपरामो मनसो नामरूप
रूपस्य दृष्टस्मृतिसंप्रमोषात्।
य ईयते केवलया स्वसंस्थया
हंसाय तस्मै शुचिसद्मने नमः॥ ४

मनीषिणोऽन्तर्हृदि सन्निवेशितं
स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः।
वह्निं यथा दारुणि पाञ्चदश्यं
मनीषया निष्कर्षन्ति गूढम्॥ ५

स वै ममाशेषविशेषमाया
निषेधनिर्वाणसुखानुभूतिः।

स सर्वनामा स च विश्वरूपः
प्रसीदतामनिरुक्तात्मशक्तिः ॥ ६

यद्यन्निरुक्तं वचसा निरूपितं
धियाऽक्षभिर्वा मनसा वोत यस्य।
मा भूत् स्वरूपं गुणरूपं हि तत्तत्
स वै गुणापायविसर्गलक्षणः ॥ ७

यस्मिन् यतो येन च यस्य यस्मै
यद्यो यथा कुरुते कार्यते च।
परावरेषां परमं प्राक् प्रसिद्धं
तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥ ८

यच्छक्तयो वदतां वादितां वै
विवादसंवादभुवो भवन्ति।
कुर्वन्ति चैषां मुहुरात्ममोहं
तस्मै नमोऽनन्तगुणाय भूम्ने ॥ ९

अस्तीति नास्तीति च वस्तुनिष्ठयोः
एकस्थयोर्भिन्नविरुद्धधर्मयोः।
अवेक्षितं किंच न योगसांख्ययोः
समं परं ह्यनुकूलं बृहत्तत् ॥ १०

योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः।
नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदतु ॥

यः प्राकृतैर्ज्ञानपथैर्जनानां
यथाशयं देहगतो विभाति।
यथानिलः पार्थिवमाश्रितो गुणं
स ईश्वरो मे कुरुतान्मनोरथम् ॥ १२

बलिराजेन्द्रकृतं

# हरिनाममालास्तोत्रम्

गोविन्दं गोकुलानन्दं गोपालं गोपिवल्लभम्।
गोवर्धनोद्धरं धीरं तं वन्दे गोमतीप्रियम्॥ १

नारायणं निराकारं नरवीरं नरोत्तमम्।
नृसिंहं नागनाथं च तं वन्दे नरकान्तकम्॥ २

पीताम्बरं पद्मनाभं पद्माक्षं पुरुषोत्तमम्।
पवित्रं परमानन्दं तं वन्दे परमेश्वरम्॥ ३

राघवं रामचन्द्रं च रावणारिं रमापतिम्।
राजीवलोचनं रामं तं वन्दे रघुनन्दनम्॥ ४

वामनं विश्वरूपं च वासुदेवं च विठ्ठलम्।
विश्वेश्वरं विभुं व्यासं तं वन्दे वेदवल्लभम्॥ ५

दामोदरं दिव्यसिंहं दयालुं दीननायकम्।
दैत्यारिं देवदेवेशं तं वन्दे देवकीसुतम्॥ ६

मुरारिं माधवं मत्स्यं मुकुन्दं मुष्टिमर्दनम्।
मुञ्जकेशं महाबाहुं तं वन्दे मधुसूदनम्॥ ७

केशवं कमलाकान्तं कामेशं कौस्तुभप्रियम्।
कौमोदकीधरं कृष्णं तं वन्दे कौरवान्तकम्॥ ८

भूधरं भुवनानन्दं भूतेशं भूतनायकम्।
भावनैकं भुजङ्गेशं तं वन्दे भवनाशनम्॥ ९

जनार्दनं जगन्नाथं जगज्जाड्यविनाशकम्।
जामदग्न्यं वरं ज्योतिस्तं वन्दे जलशायिनम्॥ १०

चतुर्भुजं चिदानन्दं चाणूरमल्लमर्दनम्।
चराचरगतं देवं तं वन्दे चक्रपाणिनम्॥ ११

श्रियः करं श्रियो नाथं श्रीधरं श्रीवरप्रदम्।
श्रीवत्सलधरं सौम्यं तं वन्दे श्रीसुरेश्वरम्॥ १२

योगीश्वरं यज्ञपतिं यशोदानन्ददायकम्।
यमुनाजलकल्लोलं तं वन्दे यदुनायकम्॥ १३

शालिग्रामशिलाशुद्धं शङ्खचक्रोपशोभितम्।
सुरासुरसदासेव्यं तं वन्दे साधुवल्लभम्॥ १४

त्रिविक्रमं तपोमूर्तिं त्रिविधाघौघनाशनम्।
त्रिस्थलं तीर्थराजेन्द्रं तं वन्दे तुलसीप्रियम्॥ १५

अनन्तमादिपुरुषमच्युतं च वरप्रदम्।
आनन्दं च सदानन्दं तं वन्दे चाघनाशनम्॥ १६

लीलया धृतभूभारं लोकसत्त्वैकवन्दितम्।
लोकेश्वरं च श्रीकान्तं तं वन्दे लक्ष्मणप्रियम्॥ १७

हरिं च हरिणाक्षं च हरिनाथं हरिप्रियम्।
हलायुधसहायं च तं वन्दे हनुमत्पतिम्॥ १८

हरिनामकृता माला पवित्रा पापनाशिनी।
बलिराजेन्द्रेण चोक्ता कण्ठे धार्या प्रयत्नतः॥ १९

ब्रह्मानन्द विरचितं

## श्रीहरिनामाष्टकम्

श्रीकेशवाच्युत मुकुन्द रथाङ्गपाणे
गोविन्द माधव जनार्दन दानवारे।

नारायणामरपते त्रिजगन्निवास
जिह्वे जपेति सततं मधुराक्षराणि ॥ १

श्रीदेवदेव मधुसूदन शार्ङ्गपाणे
दामोदरार्णवनिकेतन कैटभारे।
विश्वम्भराभरणभूषित भूमिपाल
जिह्वे जपेति सततं मधुराक्षराणि ॥ २

श्रीपद्मलोचन गदाधर पद्मनाभ
पद्मेश पद्मपद पावन पद्मपाणे।
पीताम्बराम्बररुचे रुचिरावतारिन्
जिह्वे जपेति सततं मधुराक्षराणि ॥ ३

श्रीकान्त कौस्तुभधरार्तिहराब्जपाणे
विष्णो त्रिविक्रम महीधर धर्मसेतो।
वैकुण्ठवास वसुधाधिप वासुदेव
जिह्वे जपेति सततं मधुराक्षराणि ॥ ४

श्रीनारसिंह नरकान्तक कान्तमूर्ते
लक्ष्मीपते गरुडवाहन शेषशायिन्।
केशिप्रणाशन सुकेश किरीटमौले
जिह्वे जपेति सततं मधुराक्षराणि ॥ ५

श्रीवत्सलाञ्छन सुरर्षभ शङ्खपाणे
कल्पान्तवारिधिविहार हरे मुरारे।
यज्ञेश यज्ञमय यज्ञभुगादिदेव
जिह्वे जपेति सततं मधुराक्षराणि ॥ ६

श्रीराम रावणरिपो रघुवंशकेतो
सीतापते दशरथात्मज राजसिंह।

सुग्रीवमित्र मृगवेधन चापपाणे
जिह्वे जपेति सततं मधुराक्षराणि ।। ७

श्रीकृष्ण वृष्णिवर यादव राधिकेश
गोवर्धनोद्धरण कंसविनाश शौरे ।
गोपाल वेणुधर पाण्डुसुतैकबन्धो
जिह्वे जपति सततं मधुराक्षराणि ।। ८

इत्यष्टकं भगवतः सततं नरो यो
नामाङ्कितं पठति नित्यमनन्यचेताः ।
विष्णोः परं पदमुपैति पुनर्न जातु
मातुः पयोधररसं पिबतीह सत्यम् ।। ९

*——*——*

श्रीशङ्करभगवत्पादकृतं

## हरिमीडेस्तोत्रम्

स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं
यस्मिन्नेतत्संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन्दृष्टे नश्यति तत्संसृतिचक्रं
तं संसारध्वान्तविनाशं हरिमीडे ।। १

यस्यैकांशादित्थमशेषं जगदेतत्-
प्रादुर्भूतं येन पिनद्धं पुनरित्थम् ।
येन व्याप्तं येन विबुद्धं सुखदुःखैः
तं संसारध्वान्तविनाशं हरिमीडे ।। २

सर्वज्ञो यो यश्च हि सर्वः सकलो यो
यश्चानन्दोऽनन्तगुणो यो गुणधामा ।
यश्चाव्यक्तो व्यस्तसमस्तः सदसद्यः
तं संसारध्वान्तविनाशं हरिमीडे ।। ३

यस्मादन्यन्नास्त्यपि नैवं परमार्थं
दृश्यादन्यो निर्विषयज्ञानमयत्वात्।
ज्ञातृज्ञानज्ञेयविहीनोऽपि सदा ज्ञः
तं संसारध्वान्तविनाशं हरिमीडे ॥ ४

आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वा
वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना।
भक्त्यैकाग्र्यध्यानपरा यं विदुरीशं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ५

प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा
नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य।
क्षीणे चित्ते भादृशिरस्मीति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ६

यं ब्रह्माख्यं देवमनन्यं परिपूर्णं
हृत्स्थं भक्तैर्लभ्यमजं सूक्ष्ममतर्क्यम्।
ध्यात्वाऽऽत्मस्थं ब्रह्मविदो यं विदुरीशं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ७

मात्रातीतं स्वात्मविकाशात्मविबोधं
ज्ञेयातीतं ज्ञानमयं हृद्युपलभ्यम्।
भावग्राह्यानन्दमनन्यं च विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ८

यद्यद्वेद्यं वस्तु सतत्त्वं विषयाख्यं
तत्तद्ब्रह्मैवेति विदित्वा तदहं च।
ध्यायन्त्येवं यं सनकाद्या मुनयोऽजं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ९

यद्यद्वेद्यं तत्तदहं नेति विहाय

स्वात्मज्योतिर्ज्ञानमयानन्दमवाप्य।

तस्मिन्नस्मीत्यात्मविदो यं विदुरीशं

तं संसारध्वान्तविनाशं हरिमीडे॥ १०

हित्वा हित्वा दृश्यमशेषं सविकल्पं

मत्वा शिष्टं भादृशिमात्रं गगनाभम्।

त्यक्त्वा देहं यं प्रविशन्त्यच्युतभक्ताः

तं संसारध्वान्तविनाशं हरिमीडे॥ ११

सर्वत्रास्ते सर्वशरीरी न च सर्वः

सर्वं वेत्त्येवेह न यं वेत्ति हि सर्वः।

सर्वत्रान्तर्यामितयेत्थं यमनन्यः

तं संसारध्वान्तविनाशं हरिमीडे॥ १२

सर्वं दृष्ट्वा स्वात्मनि युक्त्या जगदेतत्

दृष्ट्वाऽऽत्मानं चैवमजं सर्वजनेषु।

सर्वात्मैकोऽस्मीति विदुर्यं जनहृत्स्थं

तं संसारध्वान्तविनाशं हरिमीडे॥ १३

सर्वत्रैकः पश्यति जिघ्रत्यथ भुङ्क्ते

स्प्रष्टा श्रोता बुध्यति चेत्याहुरिमं यम्।

साक्षी चास्ते कर्तृषु पश्यन्निति चान्ये

तं संसारध्वान्तविनाशं हरिमीडे॥ १४

पश्यञ्शृण्वन्नत्र विजानन् रसयन् सन्

जिघ्रन्बिभ्रद्देहमिमं जीवतयेत्थम्।

इत्यात्मानं यं विदुरीशं विषयज्ञं

तं संसारध्वान्तविनाशं हरिमीडे॥ १५

जाग्रद्दृष्ट्वा स्थूलपदार्थानथ मायां
दृष्ट्वा स्वप्नेऽथापि सुषुप्तौ सुखनिद्राम्।
इत्यात्मानं वीक्ष्य मुदास्ते च तुरीये
तं संसारध्वान्तविनाशं हरिमीडे॥ १६

पश्यञ्शुद्धोऽप्यक्षर एको गुणभेदात्-
नानाकारान् स्फाटिकवद्भाति विचित्रः।
भिन्नश्छिन्नश्चायमजः कर्मफलैर्यः
तं संसारध्वान्तविनाशं हरिमीडे॥ १७

ब्रह्मा विष्णू रुद्रहुताशौ रविचन्द्रा
विन्द्रो वायुर्यज्ञ इतीत्थं परिकल्प्य।
एकं सन्तं यं बहुधाऽऽहुर्मतिभेदात्
तं संसारध्वान्तविनाशं हरिमीडे॥ १८

सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं
शान्तं गूढं निष्कलमानन्दमनन्यम्।
इत्याहादौ यं वरुणोऽसौ भृगवेऽजं
तं संसारध्वान्तविनाशं हरिमीडे॥ १९

कोशानेतान्पञ्च रसादीनतिहाय
ब्रह्मास्मीति स्वात्मनि निश्चित्य दृशिस्थः।
पित्राऽऽदिष्टो वेद भृगुर्यं यजुरन्ते
तं संसारध्वान्तविनाशं हरिमीडे॥ २०

येनाविष्टो यस्य च शक्त्या यदधीनः
क्षेत्रज्ञोऽयं कारयिता जन्तुषु कर्तुः।
कर्ता भोक्तात्माऽत्र हि चिच्छक्त्यधिरूढः
तं संसारध्वान्तविनाशं हरिमीडे॥ २१

सृष्ट्वा सर्वं स्वात्मतयैवेत्थमतर्क्यं
व्याप्याथान्तः कृत्स्नमिदं सृष्टमशेषम्।
सच्च त्यच्चाभूत् परमात्मा स य एकः
तं संसारध्वान्तविनाशं हरिमीडे ॥ २२

वेदान्तैश्चाध्यात्मिकशास्त्रैश्च पुराणैः
शास्त्रैश्चान्यैः सात्त्वततन्त्रैश्च यमीशम्।
दृष्ट्वाऽथान्तश्चेतसि बुद्ध्वा विविशुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ २३

श्रद्धाभक्तिध्यानशमाद्यैर्यतमानैः
ज्ञातुं शक्यो देव इहैवाशु य ईशः।
दुर्विज्ञेयो जन्मशतैश्चापि विना तैः
तं संसारध्वान्तविनाशं हरिमीडे ॥ २४

यस्यातर्क्यं स्वात्मविभूतेः परमार्थं
सर्वं खल्वित्यत्र निरुक्तं श्रुतिविद्भिः।
तज्जादित्वादब्धितरङ्गभ्रमभिन्नं
तं संसारध्वान्तविनाशं हरिमीडे ॥ २५

दृष्ट्वा गीतास्वक्षरतत्त्वं विधिनाजं
भक्त्या गुर्व्या लभ्य हृदिस्थं दृशिमात्रम्।
ध्यात्वा तस्मिन्नस्म्यहमित्यत्र विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ २६

क्षेत्रज्ञत्वं प्राप्य विभुः पञ्चमुखैर्यो
भुङ्क्तेऽजस्रं भोग्यपदार्थान्प्रकृतिस्थः।
क्षेत्रे क्षेत्रेऽप्स्विन्दुवदेको बहुधाऽऽस्ते
तं संसारध्वान्तविनाशं हरिमीडे ॥ २७

युक्त्यालोड्य व्यासवचांस्यत्र हि लभ्यः
क्षेत्रक्षेत्रज्ञान्तरविद्भिः पुरुषाख्यः।
योऽहं सोऽसौ सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ २८

एकीकृत्यानेकशरीरस्थमिमं ज्ञं
यं विज्ञायेहैव स एवाशु भवन्ति।
यस्मिँल्लीना नेह पुनर्जन्म लभन्ते
तं संसारध्वान्तविनाशं हरिमीडे ॥ २९

द्वंद्वैकत्वं यच्च मधुब्राह्मणवाक्यैः
कृत्वा शक्रोपासनमासाद्य विभूत्या।
योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३०

योऽयं देहे चेष्टयिताऽन्तःकरणस्थः
सूर्ये चासौ तापयिता सोऽस्म्यहमेव।
इत्यात्मैक्योपासनया यं विदुरीशं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३१

विज्ञानांशो यस्य सतः शक्त्यधिरूढो
बुद्धिर्बुध्यत्यत्र बहिर्बोध्यपदार्थान्।
नैवान्तःस्थं बुध्यति यं बोधयितारं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३२

कोऽयं देहे देव इतीत्थं सुविचार्य
ज्ञाता श्रोतानन्दयिता चैष हि देवः।
इत्यालोच्य ज्ञांशमिहास्मीति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३३

को ह्येवान्यादात्मनि न स्यादयमेष
ह्येवानन्दः प्राणिति चापानिति चेति।
इत्यस्तित्वं वक्त्युपपत्त्या श्रुतिरेषा
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३४

प्राणो वाऽहं वाक्श्रवणादीनि मनो वा
बुद्धिर्वाऽहं व्यस्त उताहोऽपि समस्तः।
इत्यालोच्य ज्ञप्तिरिहास्मीति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३५

नाहं प्राणो नैव शरीरं न मनोऽहं
नाहं बुद्धिर्नाहमहंकारधियौ च।
योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३६

सत्तामात्रं केवलविज्ञानमजं सत्
सूक्ष्मं नित्यं तत्त्वमसीत्यात्मसुताय।
साम्नामन्ते प्राह पिता यं विभुमाद्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३७

मूर्तामूर्ते पूर्वमपोह्याथ समाधौ
दृश्यं सर्वं नेति च नेतीति विहाय।
चैतन्यांशे स्वात्मनि सन्तं च विदुर्यं
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३८

ओतं प्रोतं यत्र च सर्वं गगनान्तं
यो स्थूलानण्वादिषु सिद्धोऽक्षरसंज्ञः।
ज्ञाताऽतोऽन्यो नेत्युपलभ्यो न च वेद्यः
तं संसारध्वान्तविनाशं हरिमीडे ॥ ३९

तावत्सर्वं सत्यमिवाभाति यदेतत्-

यावत्सोऽस्मीत्यात्मनि यो ज्ञो न हि दृष्टः।

दृष्टे तस्मिन्सर्वमसत्यं भवतीदं

तं संसारध्वान्तविनाशं हरिमीडे ॥ ४०

रागामुक्तं लोहयुतं हेम यथाऽग्नौ

योगाष्टाङ्गैरुज्ज्वलितज्ञानमयाग्नौ।

दग्ध्वात्मानं ज्ञं परिशिष्टं च विदुर्यं

तं संसारध्वान्तविनाशं हरिमीडे ॥ ४१

यं विज्ञानज्योतिषमाद्यं सुविभातं

हृद्यर्केन्द्वग्न्योकसमीड्यं तडिदाभम्।

भक्त्याराध्येहैव विशन्त्यात्मनि सन्तं

तं संसारध्वान्तविनाशं हरिमीडे ॥ ४२

पायाद्भक्तं स्वात्मनि सन्तं पुरुषं यो

भक्त्या स्तौतीत्याङ्गिरसं विष्णुरिमं माम्।

इत्यात्मानं स्वात्मनि संहृत्य सदैकः

तं संसारध्वान्तविनाशं हरिमीडे ॥ ४३

इत्थं स्तोत्रं भक्तजनेड्यं भवभीति-

ध्वान्तार्काभं भगवत्पादीयमिदं यः।

विष्णोर्लोकं पठति शृणोति व्रजति ज्ञो

ज्ञानं ज्ञेयं स्वात्मनि चाप्नोति मनुष्यः ॥ ४४

ब्रह्मानन्दकृतं

## श्रीहरिशरणाष्टकम्

ध्येयं वदन्ति शिवमेव हि केचिदन्ये

शक्तिं गणेशमपरे तु दिवाकरं वै।

रूपैस्तु तैरपि विभासि यतस्त्वमेव
तस्मात्त्वमेव शरणं मम शङ्खपाणे ।। १

नो सोदरो न जनको जननी न जाया
नैवात्मजो न च कुलं विपुलं बलं वा ।
संदृश्यते न किल कोऽपि सहायको मे
तस्मात्त्वमेव शरणं मम शङ्खपाणे ।। २

नोपासिता मदमपास्य मया महांतः
तीर्थानि चास्तिकधिया नहि सेवितानि ।
देवार्चनं च विधिवन्न कृतं कदापि
तस्मात्त्वमेव शरणं मम शङ्खपाणे ।। ३

दुर्वासिना मम सदा परिकर्षयन्ती
च्चित्तं शरीरमपि रोगगणा दहन्ति ।
सञ्जीवनं च पर हस्तगतं सदैव
तस्मात्त्वमेव शरणं मम शंखपाणे ।। ४

पूर्वं कृतानि दुरितानि मया तु यानि
स्मृत्वाऽखिलानि हृदयं परिकंपते मे ।
ख्याता च ते पतितपावनता तु यस्मात्
तस्मात्त्वमेव शरणं मम शङ्खपाणे ।। ५

दुःखं जराजननजं विविधाश्च रोगाः
काकश्वशूकरजनिर्निरये च पातः ।
ते विस्मृते फलमिदं विततं हि लोके
तस्मात्त्वमेव शरणं मम शङ्खपाणे ।। ६

नीचोऽपि पापवलितोऽपि विनिन्दितोऽपि
ब्रूयात्तवाहमिति यस्तु किलैकवारम् ।

तं यच्छसीश निजलोकमिति व्रतं ते
तस्मात्त्वमेव शरणं मम शङ्खपाणे ।। ७
वेदेषु धर्मवचनेषु तथागमेषु
रामायणेपि च पुराणकदम्बके वा ।
सर्वत्र सर्वविधिना गदितस्त्वमेव
तस्मात्त्वमेव शरणं मम शङ्खपाणे ।। ८

*___*___*

ब्रह्मानन्दकृतं

## श्रीहरिस्तोत्रम्

जगज्जालपालं कचत्कंठमालं
शरच्चन्द्रभालं महादैत्यकालम् ।
नभोनीलकायं दुरावारमायं
सुपद्मासहायं भजेऽहं भजेऽहम् ।। १
सदाम्भोधिवासं गलत्पुष्पहासं
जगत्संनिवासं शतादित्यभासम् ।
गदाचक्रशस्त्रं लसत्पीतवस्त्रं
हसच्चारुवक्त्रं भजेऽहं भजेऽहम् ।। २
रमाकण्ठहारं श्रुतिव्रातसारं
जलान्तर्विहारं धराभारहारम् ।
चिदानन्दरूपं मनोज्ञस्वरूपं
धृतानेकरूपं भजेऽहं भजेऽहम् ।। ३
जराजन्महीनं परानन्दपीनं
समाधानलीनं सदैवानवीनम् ।
जगज्जन्महेतुं सुरानीककेतुं
त्रिलोकैकसेतुं भजेऽहं भजेऽहम् ।। ४

कृताम्नायगानं खगाधीशयानं
विमुक्तेर्निदानं हरारातिमानम् ।
स्वभक्तानुकूलं जगद्वृक्षमूलं
निरस्तार्तशूलं भजेऽहं भजेऽहम् ।। ५

समस्तामरेशं द्विरेफाभकेशं
जगद्बिम्बलेशं हृदाकाशदेशम् ।
सदा दिव्यदेहं विमुक्ताखिलेहं
सुवैकुण्ठगेहं भजेऽहं भजेऽहम् ।। ६

सुरालीबलिष्ठं त्रिलोकीवरिष्ठं
गुरूणां गरिष्ठं स्वरूपैकनिष्ठम् ।
सदा युद्धधीरं महावीरधीरं
भवाम्भोधितीरं भजेऽहं भजेऽहम् ।। ७

रमावामभागं तलानग्ननागं
कृताधीनयागं गतारागरागम् ।
मुनीन्द्रैः सुगीतं सुरैः संपरीतं
गुणौघैरतीतं भजेऽहं भजेऽहम् ।। ८

इदं यस्तु नित्यं समाधाय चित्तं
पठेदष्टकं कष्टहारं मुरारेः ।
स विष्णोर्विशोकं ध्रुवं याति लोकं
जराजन्मशोकं पुनर्विन्दते नो ।। ९

# मुरारिपञ्चरत्नम्

यत्सेवनेव पितृमातृसहोदराणां
चित्तं न मोहमहिमा मलिनं करोति ।
इत्थं समीक्ष्य तव भक्तजनान् मुरारे
मूकोऽस्मि तेऽङ्घ्रिकमलं तददतीव धन्यम् ।। १

ये ये विलग्नमनसः सुखमाप्तुकामाः
    ते ते भवन्ति जगदुद्भवमोहशून्याः ।
दृष्ट्वा विनष्टधनधान्यगृहान् मुरारे
    मूकोऽस्मि तेऽङ्घ्रिकमलं तदतीव धन्यम् ।। २

वस्त्राणि दिग्वलयमावसतिः श्मशाने
    पात्रं कपालमपि मुण्डविभूषणानि ।
रुद्रे प्रसादमचलं तव वीक्ष्य शौरे
    मूकोऽस्मि तेऽङ्घ्रिकमलं तदतीव धन्यम् ।। ३

यत्कीर्तिगायनपरस्य विधातृसूनोः
    कौपीनमैणमजिनं विपुलां विभूतिम् ।
स्वस्यार्थदिग्भ्रमणमीक्ष्य तु सार्वकालं
    मूकोऽस्मि तेऽङ्घ्रिकमलं तदतीव धन्यम् ।। ४

यद्वीक्षणे धृतधियामशनं फलादि
    वासोऽपि निर्जनवने गिरिकन्दरासु ।
वासांसि वल्कलमयानि विलोक्य चैवं
    मूकोऽस्मि तेऽङ्घ्रिकमलं तदतीव धन्यम् ।। ५

स्तोत्रं पादाम्बुजस्यैतच्छ्रीशस्य विजितेन्द्रियः ।
पठित्वा तत्पदं याति श्लोकार्थज्ञस्तु यो नरः ।। ६

*___*___*

## चक्रम्

दृष्टस्य यस्य हरिणा रणमूर्ध्नि मूर्तिः -
    उद्भूतदुःसहमहः प्रसरा समन्तात् ।
तल्लोचनस्थितरविप्रतिबिम्बगर्भे-
    वाभाति चक्रमरिचक्रनुदेऽस्तु तद्वः ।।

उद्धूतदैत्यपृतनापतिकण्ठपीठ
च्छेदोच्छलद्बहलशोणितशोणधारम्।
चक्रं क्रियादभिमतानि हरेरुदार
दिग्दाहदारुणनभःश्रियमुद्वहद्वः ॥

*___*___*

## नन्दकः

सान्द्रां मुदं यच्छतु नन्दको वः
सोल्लासलक्ष्मीप्रतिबिम्बगर्भः ।
कुर्वन्नजस्रं यमुनाप्रवाह
सलीलराधास्मरणं मुरारेः ॥

*___*___*

## शङ्खः

भिन्दन्नरातिहृदयानि हरेः पुनातु
निःश्वासवातमुखरीकृतकोटरो वः ।
सङ्क्रान्तकुक्षिकुहरास्पदसप्तसिन्धु-
संघट्टघोरतरघोष इवाशु शङ्खः ॥
पायात्स वः कुमुदकुन्दमृणालगौरः
शङ्खो हरेः करतलाम्बरपूर्णचन्द्रः ।
नादेन यस्य सुरशत्रुविलासिनीनां
काञ्च्यो भवन्ति शिथिला जघनस्थलीषु ॥

*___*___*

## शेषः

ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि ।
स्फारे यत्फणचक्रे धरा शरावश्रियं वहति ॥

